प्रकाशक —
श्रेष्ठी सुरेन्द्रभाई साराभाई
अहम्मदाबाद

मुख्यप्राप्तिस्थलम्
श्रीमोहनलालजी जैन ज्ञानभण्डार
ठि० गोपीपुरा, सुरत.

— मूल्यम् —
रूप्यक-नवकम्।

मुद्रक —
पं. परमेष्ठीदास जैन, न्यायतीर्थ
जैनेन्द्र प्रेस
ललितपुर (झाँसी) उ० प्र०

# ॥ प्रकाशकीयम् ॥

श्री दर्शनरत्नरत्नाकराख्योऽयं महाग्रन्थस्तृतीयविभागेऽत्र परिपूर्णतां प्राप्तोऽस्ति । अस्मिन्ननेकागमीयगभीरसिद्धान्तसारसङ्कलना श्रीमता सिद्धान्तसारसाराभिधानेन मुनिना सङ्कलिता विराजते । मुनिमतल्लजस्यास्य परम्परा पटिष्ठाऽधिगतप्रतिष्ठा चेति विदिततमं विदुषाम् । परम्परायामस्यां समुत्पन्नाः शतशो रत्नग्रन्था अलङ्कुर्वन्ति श्रीमदार्हतशासनम् । ग्रन्थकर्तुरितिवृत्तं ग्रन्थावलोकनसौकर्यसम्पादकं वर्णक्रमानुस्यूतविशिष्टाभिधानसूच्यादिकमतः परं प्रकाशितुमनसो वयं समस्तदवगच्छन्तु गुणिन इति ।

—प्रकाशकः ।

॥ ॐ ह्रीं अर्हं नम ॥

## संपादकीय—

ज्ञान ए अमृत छे अने अज्ञान ए विष छे ज्ञान ए प्रकाश छे ने अज्ञान ए अन्धकार छे ज्ञान ए जीवन छे ने अज्ञान ए मृत्यु छे जे ज्ञान मोह-विषने दूर करी शकतुं नथी, जे ज्ञान पाप-तमनो परिहार करवा विफल छे, जे ज्ञान जन्ममरणना चक्रने थंभाववा असमर्थ छे ते खरेखर ज्ञान नथी पण अज्ञान छ ने ज्ञान छे ते उपरना साध्यो क्षण पण विलंब वगर सिद्ध करे छे ज्ञान सकल संकटनो नाश करी अविनाशी पद प्राप्त करावे छे आवु सम्यग्ज्ञान प्राप्त करवानी अभिरुचि जागृत थवी ए पण आत्माना अहोभाग्यनी निशानी छे आगमग्रन्थोमा अने आगमानुसारि अन्य ग्रन्थोमां ए सम्यग्ज्ञान भर्यु छे गुरुगम थी सम्यग्प्रकारे ए मेळवी शकाय छे

आवा सम्यग्ज्ञाननो अपूर्व ग्रन्थ 'दर्शनरत्नरत्नाकर' छे अंगोपांगादि आगमोनी साक्षीओ साथे शास्त्रीय भावो व्यवस्थित रीते आ ग्रन्थमा संकलाएला छे आ एक ग्रन्थना मननपूर्वकना अध्ययनथी अनेक आगमोनु गाम्भिर दर्शन प्राप्त थाय छे ने ते ते आगमोना पठन पाठन माटे अभिलाषा जागे छे

आ ग्रन्थनुं मुद्रण अद्यावधि थयु न हतुं

संवत् २००८ नी सालमा सुरतमा अमे श्री मोहनलालजी जैन ज्ञान भंडार नी हस्तलिखित प्रतिओनुं संकलन करता हता ते प्रसगे डभोईना चातुर्मास बाद विहार करता पूज्यपाद आचार्य महाराज श्री विजयअमृतसूरीश्वरजी महाराज पोताना विद्वान् शिष्यो साथे सुरत पधार्या तेओश्रीनी हितशिक्षा अने प्रेरणाए अमारा जीवनमां खूब उत्साह पूर्यो तेओश्रीने अमे योगोद्वहन

करावदानी विज्ञप्ति करी ने अमारा पर कृपा करीने तेओश्रीए ते विज्ञप्तिनो स्वीकार कर्यो, पूज्यपाद आचार्य महाराजश्रीना शिष्यरत्न वयोवृद्ध पन्यासजी श्री पुण्यविजयजी गणिवर्यना शिष्य पन्यासजी श्री धुरन्धरविजयजी गणिवर्य साथे ज्ञानध्यानादि प्रवृत्ति वगेरे वार्तालाप थयो, तेमणे भंडारनी नोंध तपासी, दर्शनरत्नरत्नाकर अमुद्रित अने मुद्रण योग्य छे ए पण जणाव्युं, ए रीते आ ग्रन्थना मुद्रणनुं बीज-वपन थयुं. सं० २००८ नुं चतुर्मास अमोए मुंबई-पूज्यपाद आचार्यश्रीनी पवित्र निश्रामां कर्युं. त्यां श्रीमहानिशीथ-महासूत्रना आगाढ योगोद्वहन कर्या, अने प्रस्तुत ग्रन्थ-मुद्रण अंगे विचारणा आगळ चाली, तेनी योजना व्यवस्थित करी. पूज्यपाद आचार्य महाराजश्रीनी अनुभवपूर्ण दोरवणीथी कार्यनो प्रारंभ थयो.

हस्तलिखित प्रति उपरथी मुद्रण योग्य नकल लखावीने तैयार करावीने भावनगर महोदय प्रेसमां मुद्रण शरू कराव्युं. बे विभाग त्यां मुद्रित थया बाद तृतीय विभाग ललितपुर-जैनेन्द्र प्रेसमां छपायो. ए प्रमाणे त्रण भागमां आ १८ हजार श्लोकप्रमाण महाग्रन्थ मुद्रित थईने प्रकाशन पाम्यो छे.

आ ग्रन्थनी मुद्रण योग्य नकल (Press copy) नुं अवलोकन पन्यासजी श्रीनिपुणमुनिगणिवरे कर्युं. उपदेशादि कार्य अमारे भागे आव्युं-अने मुद्रणादि-व्यवस्थानुं सकलकार्य पन्यासप्रवर श्री धुरन्धरविजयजीगणिवर्ये संभाळ्युं.ए प्रमाणे आ प्रकाशनमां सहयोग बन्यो छे.

अमे प्रथम पूज्यपाद आचार्यमहाराजश्रीनो प्रधान ऋण स्वीकार करीए छीए. अने बाकी जे कोईनो सहकार मळ्यो छे ते सर्वनो आभार मानीए छीए. ने पठन-पाठनमां आ महाग्रन्थनो सुन्दर उपयोग करी अनेक भव्यात्माओ अमने आभारी करे एम इच्छीए छीए.

सुरत
दि० ५-२-५९

मुनि भक्तिमुनि.

# श्री दर्शनरत्नरत्नाकरग्रन्थना ग्राहकोनी अवशिष्ट नामावलि

प्रत–

१६ श्री पार्श्वनाथजी जैन पेढीना ज्ञान खातामाथी, नवसारी

४ शे० रमणलाल दलसुखभाई उहारचाल, मुंबई

४ श्री आदीश्वरजी जैन देरासर पेढी भातबजार, मुंबई

३ शा० हीरालाल अमृतलाल भावनगरवाला ६९, मरीनड्राईव, मुंबई

३ श्री देशाई पोल जैन पेढी गोपीपुरा, सुरत

२ शा० नागरदास ताराचन्द, सुरत

२ श्री आत्मारामजी जैन ज्ञान मन्दिर, पालेज

२ श्री आदीनाथ श्वे जैन देरासर पेढी चीरपेठ, बॅंगलोर सीटी

१ अरुण परसोत्तमदास खुबचन्द दलाल ६८ वाडावाडी मुंबई

१ श्री बोधान सघ ज्ञानखाते, बोधान

१ शा० मूलचन्द मोतीलाल, जामनगर

१ शा० नेमचन्द गाडाभाई, नवसारी

॥ ॐ ह्रीं अर्हं नमः ॥

सकललब्धिनिधानाय श्रीगौतमस्वामिने नमः ॥

श्रीमदर्हत्प्रवचनं विजयतेतराम् ॥

## आचार्यप्रवर–श्रीइन्द्रनन्दिसूरिवर्यविनेयाणु–सिद्धान्तसारसङ्कलितः

# दर्शनरत्नरत्नाकरः ॥ (तृतीयो विभागः)

## तृतीयलहर्या–पञ्चमस्तरङ्गः ॥

अथ तस्यामेव तृतीयलहर्यां पञ्चमस्तरङ्गः प्रारभ्यते । तत्र तुरीयतरङ्गे सर्वविरतिर्वर्णिता, पञ्चमस्तरङ्गे तु देशविरतिर्वर्ण्यते । तत्र श्राद्धैः सम्यक्त्वमूलानि द्वादशव्रतानि पालनीयानि । अतीचारास्तु श्रमणोपासकैश्चतुर्विंशत्यधिकशतमिताः परिहार्याः । तत्राष्टौ ज्ञानाचार-सत्काः, अष्ट च दर्शनाचारसम्बन्धिनः, अष्ट च चारित्राचारविषयाः, पंच च सम्यक्त्वसत्काः, पंचसप्ततिश्च द्वादशव्रतसत्काः, पंच च संलेखनासम्बंधिनः, द्वादश तु तपाचारविषयाः, त्रयस्तु वीर्याचारविषयाः । एवं चतुर्विंशत्यधिकशतमितातिचाराः परिहरणीयाः श्राद्ध-श्रेष्ठैः । तेषु च ज्ञानाचारदर्शनाचारचारित्राचारसम्यक्त्वविषयातिचाराः प्राक् स्वस्वस्थानेषु भाषिताः । अथ व्रतसंबंधिनो दर्श्यंते ।

वर्जनीयानि । तथा परिखासरःकूपादिखननखानने आकराल्लवणाकर्षणं नवीनाकोष्टिकाकरणमित्यादि त्याज्यं पृथिव्यारंभभीरुकैः। तथाऽप्-
काययतनार्थं जलमज्जनं जलाशयादौ जलक्रीडा जिनार्चादिनिमित्तं विना सुखार्थं प्रतिदिनमंगक्षालनहस्तपादादिधावनमपि बहुजलेनेत्यादि
वर्जनीयं वर्षास्वन्यदा वा सत्यन्यमार्गे जलमध्ये न गंतव्यम् । तथा स्थालादिधावनेऽपि बहुजलमर्दनं न कार्यम् । तथा पानाद्यर्थमपि
प्रासुकजलविषये यतनीयं तथाहि मकरूकादिभक्षणं न विधेयम् । तथा महिकायामवश्याये च निपतति न गंतव्यं, महिकायां पतंत्यां
मानसजापध्यानं विनाऽन्या धर्मक्रियाऽपि न विधेया । तथा पशुभरणं न कार्यम् । तथा तटाकतटिनीनद्यादिस्फोटनं न विधेयम् । तथा
क्षेत्रवाटिकादिपानार्थमरघट्टादिना जलकर्षणं न कार्यम् । तथा सरःसरिदादौ तरणक्रियाशिक्षणकृते न प्रवेशो विधेयः । तथा पोतयात्रा
न कार्या सत्यन्यमार्गे नौमार्गस्त्याज्यः । तथा मिथ्यादर्शनहेतुभूतः पिप्पलादौ जलक्षेपो न विधेयः । तथा वर्षति वारिदे तज्जलादान-
कृते क्षीरनीरादि न ढोलनीयम् । तथा वर्षति पर्जन्ये बहुजलविराधनाभिया वस्त्रादिधावनं न विधेयं जलाशयांतश्च । तथा गाढप्रयो-
जनाभावे जलदवृष्टौ गमनादिक्रिया न कार्या । तथा वस्त्रादिधावनेऽपि परिसितं जलविषये यतनीयम् । तथा विक्रयार्थं कोरकसिचयनिः-
क्षीरणं न करणीयं चेत्याद्यप्काययतनाविषये यतनीयम् । तथाऽग्निकाययतनार्थं गाढतरप्रयोजनं विनाऽग्निष्टादि न कार्यम् । तथा स्वा-
जन्यादिगाढतमदाक्षिण्यं विना वह्निः प्रार्थितो न कस्मैचित् प्रदेयः । तथा वस्त्रपट्टसूत्रसूत्रादिरंगो न कार्यो कारणीयश्च । तथा विक्रियार्थं
चनकगोधूमादिभर्जनं न कार्यं न कारणीयं च । तथाङ्गारपातनसुधेष्टिकादिकारणलोहकारस्वर्णकारादिवाणिज्यकरणादि त्याज्यम् । तथा
सति निर्वाहे रंधनाद्यर्थमपि पुनः पुनः कृशानुप्रज्वालनं न कार्यं मूल्येन रंधनं च इत्यादिका तेजस्काययतना कार्या । तथा वायुकाययत-
नार्थं तालवृंतशालव्यंजनवसनांचलादिना वातोदीरणं न विधेयम् । तथा परिधानोत्तरीयोट्टनीपादिवसनप्रस्फोटनं न कार्यम् । तथान्यस्मि-

यदि गृहहट्टादिमध्ये वातोदीरणा न कार्या, सत्यन्यस्मिन्नवद्ये आजीविकोपाये वर्त्तनकर्म न कर्त्तव्यम् । तथा पताकिरोड्डापन-पटकिराध्मरसादिभ्रमणादि न कार्यम् । तथा गाढप्रयोजनाभावे महावाते याने न गंतव्यम्, इत्यादिवायुकायपतनाविषये चिन्त्यम् । तथा वनस्पतिरक्षणार्थं सति विभवे स्वगृहे दलनखंडनपेषणादि न कार्यं न कारणीयं च किंतु पृथग्हट्टेभ्यस्तन्मासंसक्तशालितंदुलदालिगोधूमादिचूर्णानयनविषये यतनीयं, तत्र विनापि सारणीयं चेत्तथा कर्तुं न शक्यते तदा शुष्कशाकेनैव यापनीयं, चेत्तथापि कर्तुं न तीर्यते तदा यतनया अनंतकायअन्यबहुबीजसमसक्तशाकादि त्याज्यमेव एकद्व्यादिसंख्या विवेकेन शाकादिसचित्तनियमः । अथ चेत्ता-दृग्विभवो नास्ति यत् मूल्येन प्रतिदिनं शालितंदुलाद्यानीयते तदा त्रसरहितविचारित्रीहिगोधूमादिपंचवार्षिकद्विदलसक्तादिरहिताः स्वद्रव्यादिना यतना विषये यतनीयम् । अथ चेत्तदप्राप्तिश्रमादिभिस्तथा यापयितुं न शक्यते तदापि विक्रयार्थं कंडनपेषणदलनादि त्याज्यमेव । तथा छिन्नाछिन्नवनपत्रप्रसूनफलादिविक्रयश्च हेयः । तथात्यंतनिःस्वत्वेऽपि मूल्येन दलनकंडनपेषणादि न विधेयम् । तथा परपुष्पफलादित्रोटनं शाखाप्रशाखादिवर्त्तनादिभञ्जन पशुनिमित्तं तृणादिछेदनं च न विधेयम् । उत्सर्गस्तु सर्वसचित्तसर्वमेव वर्जनीयम् । तथा विधनानेऽन्यस्मिन्नाजीविकोपाये धान्यपूगीफललागलीफलादिसचित्तवनस्पतिविक्रयो न कार्यः । अतिनिर्धनतायामप्यनंतकायवनस्पतिविक्रयो वर्जनीय एव । तथा वैद्यकमाजीविका वर्जनीया यतस्तस्यां प्रभूतप्रत्येकानंतवनस्पतिप्रभृतिप्रभूतेन्द्रियादिजंतुजातविराधना समस्ति । अथ चेत् कुलक्रमागता सा त्यक्तुं न शक्यते तदापि प्रभूतजंतुविराधना हेतुभूतमनंतकायाऽभक्ष्यादिबहुसावद्यं भेषजं न मोचनसदने हट्टे वा सज्जनीयम् । न च कस्यचिदग्रतः कथनीयम् । तथा गुडभक्षिकाट्टं न मंडनीयं यतस्तत्रापि भूयसी वनस्पतिकायादि-षट्कायविराधना । एवं मूल्येन रंधनमपि त्याज्यम्, इत्यादिका वनस्पतिकाययतना कार्या सर्वदा । वर्षाकाले तु प्रथमवृष्टौ दिनत्रयं

स्थालादिधाव—
यावदंकूरयतनार्थं ग्रामांतरं न कार्यं, तथोपविशनोर्द्धस्थानगमनलघुवृहन्नीतिकरणहस्तपादादिधावनाऽत्रश्रावणादिव्युत्सर्जनस्थालादिधाव— पनकयतना सर्वकालेऽपि
नांगप्रक्षालनकचवरत्यागदंतधावनविधानादिसकलकृत्येषु प्रथमवृष्टौ वासरत्रयँ यावदंकूरयतना,वर्षाकालं यावत् पनकयतना सर्वकालेऽपि
हरितकायादियतना विधेया पनकयतनार्थं च वर्षासु शुष्कशाकं न स्थाप्यं द्वितीयदिने तक्रपूपिकादि तृतीयदिने तु धवलधान्यं च तथा—
छगणेंधनपानीयघृततैलादिभाजनतक्रगोलिकोपादिधावनादिषु पनकयतना विधेया। तथान्तिका सर्वदाऽपि न मंडनीया वर्षाकाले चेत्
शुंठीहरीतक्यादि स्थापितं विलोक्यते तदा तत्स्थापनं भस्मवालुकादिमध्ये पनकोत्पत्तिरक्षार्थं विधेयम्। तथा यदा भूम्यादौ पनक—
संसक्तिर्जाता स्यात्तदा तदुपरि भस्मवालुकादि न क्षेप्यं किंतु तत्स्थाने गमनादि परिहार्यं गाढप्रयोजने तु यतना विधेया तथा शुष्क—
शाकछगणेन्धनादिषु जातुचित् पुष्पिका जाता भवेत्तदा तन्न व्यापार्यं नाप्यातपे मोचनीयं किंत्वनाबाधस्थाने स्थाप्यं तावद् यावत्
पुष्पिका स्वयं नापैतीत्यादिका पनकयतना कर्त्तव्या प्रायो वर्षासु। एवं श्रमणोपासकेन पंचस्वेकेंद्रियेषु सर्वकालं सर्वोद्यमेन यतना विधेया।
त्रसेष्वारंभे या यतना प्रोक्ता सा किंचिद् भाव्यते। तथाहि त्रसाश्चतुर्भेदा द्वित्रिचतुष्पंचेंद्रियरूपाः। तत्र द्वीन्द्रिययतनैवं
विधेया। कृमिगंडोलकेषु जठरांतःसमुत्पन्नेषु तत्पातनमारणनिमित्तमाम्लतक्रहिंग्वादि न पेयं किंतु यद्भुक्त्या तदुत्पत्तिः स्यात्तद्वस्तु
त्याज्यं यतोऽपथ्यप्रभवा रोगाः। तथा छगणस्थापनं न विधेयमिलिकाविनाशभिया। तथा पूतरयतनार्थं गलनकं विशालं दृढं च विधेयं
चेद् घटिकाद्वयमपि जलगलनानंतरमतिक्रांतं तदा तद्गलितं न व्यापार्यम्। अथ चेदेवं कर्त्तुं न शक्यते तदा प्रतियामं जलगलनयतना
चिंत्या। एवं चेत् कर्त्तुं न शक्यते तदा वारत्रयं वारिगलनयतना चिंतयनीयैव विशेषतः प्रावृड्निदाघकालयोः। प्रावृट्समये तु
नगरादौ गमनागमनयोरिलिकारक्षा विधेया। तथा वर्षति वारिदेऽगलितजलं न ढोलनीयं गलितमपि वारि विराधनाभिया। तथा जल—

गलने यथा संखारको न शुष्यति तथा विधेयम् । तथा गलने तथा यतना विधेया यथाऽगलितजलसत्को बिंदुरपि भूमौ न पतति । तथा क्षारमधुरजलं जलदजलाशयजलं च नैकत्र संयोज्यं तत्संखारकोऽपि पृथक् स्थाप्यः । तथा जलदजलं च चेन्मुहूर्त्तमात्रमपि मृद्-भाजने स्थितं तदा तदगलितं न व्यापारणीयं नापि त्यजनीयम् । तथा तंदुलधावनादिजलं भाजनधावनादिजलं च चेत् प्रभूतकालं स्थितं तदा तदगलितं न छर्दनीयं नापि पशूनां पाययितव्यम् । तथाऽगलितजलेन बहिर्भूमौ गतैः शौचं न विधेयम् । तथाऽगलितजलेन वसन-धावनं न विधेयम् । तथाऽगलितजलं तिरश्चां न पाययितव्यम्, अगलितजले स्नानपादधावनादि न विधेयम् । एवमनेकविधाप्कायरक्षा-विधौ यतनीयम् । तथा वर्षासु गमनागमनादौ शंखयतना विधेया । तथा पोतवाणिज्यमपि त्याज्यं शंखनकादिजंतुजातविराधनाभिया । तथा जलूका न मोचयितव्याः । तथाऽलसयतना कार्या गमनादौ भूमिखननादौ च । तथा द्वींद्रिययतनार्थं तृतीयदिने तक्रदध्यादि न स्थाप्यम् । एवमनेकप्रकारा द्वींद्रिययतना विधेया ।

अथ त्रींद्रिययतना वर्षासु कुंथुयतनार्थं शुष्कशाकं न व्यापार्यम् । तथा संमार्जनी सर्वदापि मृद्वी कार्या कुंथुपिपीलिकादियत-नाकृते । तथा कचवरमध्यतो जंतवो न संमार्जनीयाः किंतु यो यत्र याति स तत्र गंतुं देयः । तथेंधनानि त्वगपनयनपूर्वं छित्वा छित्वा सम्यक् शोधनीयानि कुंथुपिपीलिकादिजंतुजातत्राणकृते । तथा वर्षासु छगणानि न ज्वालनीयानि । अथ चेत्तादृशेंधनाऽप्राप्त्या प्रज्वा-ल्यते ध्रियंति तदापि कुंथुरक्षार्थं लघुतमखंडीकृत्य स्थाल्योपरि पुनः पुनः प्रस्फोटनचालिनीचालनमनंतरमेव । तथा कुंथुप्रमृतिजंतु-रक्षणकृते प्रातरादौ भाजनधावनं सम्यक्प्रेक्षणगुमालप्रमार्जनीप्रमार्जनपूर्वमेव । तथा वर्षासु सुंठीहरीतकीप्रमृति न व्यापार्यं गाढप्रयो-जने तु प्रस्फोटनादिना कुंथ्वपनयनपूर्वमेव । तथा धान्यसंग्रहो न विधेयो यतस्तत्स्खलने बहवो बहुविधा जंतवः समुत्पद्यन्ते वर्षासु च

कुंथवः । तथा शलितधान्यस्य कंडनदलनपेषणादि न विधेयं किंतु तत्कोष्टकादावेव प्रक्षिप्य मोच्यं तावद् यावत् स्वयमेवायुःक्षयेण ते सर्वेऽपि जंतवो न परिणमंति । शलितधान्यस्य क्रयविक्रयावपि वर्जनीयौ । तथा मत्कुणतल्लिक्षारक्षार्थं पल्यंकाद्यातपे न मोचनीयम् । तथातपे मार्गे च मत्कुणा नोत्तारणीयाः तल्लिका यत्र कुत्रचित् पल्यंकादौ भवंति ततो नाऽपनयाः । तथा कंकतकाः शिरसि न वाहनीयाः । तथा वस्त्रादेरपि लिक्षाऽपनयनं न विधेयम् । तथा यूका निराधारा न मोक्तव्याः । तथाऽशोधितवस्त्रं न प्रक्षालनीयम् । तथा जंतुरक्षार्थं निशि कंडनदलनपेषणरंधनादि न विधेयम् । तथा बहिर्गमनादावुपदेहिकागृहोत्करादियतना विधेया । एवमनेकविधा त्रींद्रिय-यतना विधेया ।

अथ चतुरिंद्रिययतना पतंगयतनार्थं निशि दीपको न कार्यो गाढप्रयोजने तु तत्पिधानं विधेयम् । तथा जालकलूतापुतादिस्फोटनं न कार्यम् । तथा भ्रमरीगृहं न भंजनीयम् । तथा भोजनविलोडनोष्णनीरादिषु मक्षिका यतना कार्या । तथा दंशमशकादिषु तुदत्सु यतनया प्रमार्जनं विना तनुकंडूयनं न करणीयम् । तथा त्रींद्रियचतुरिंद्रिययतनार्थं भित्यादिलिंपने कीटिकागृहमत्कुणतल्लिक्षालूता-गृहादिस्थानं मोचनीयम् । तथाऽवश्रावणधावनघृततक्रतैलतीमनपयोदध्यादिभाजनमुखानि दवरकेण समं वस्त्रेण बन्धनीयानि । तथा करीषज्वालनं न कर्त्तव्यम् । तथा त्रसजंतुत्रागकृते द्वारोद्घाटनपिधाने यतनया कपाटादिप्रमार्जनपूर्वमेव विधेये । तथा भित्यंतर्वहमानाऽर्गला न कार्या । तथा वहद्दरपिधानं च न कर्त्तव्यम् । तथा चुलन्युदूपलघरट्टादिशोधनं यतनया सम्यक्करणीयम् । तथा खाले स्नान-पादधावनावश्रावणादिजलं न वाहनीयं, लघुनीतिरपि खाले न विधेया । तथोपरितनभूमिस्थितैरपि यथाऽधो याति स्नानादिजलं लघुनीतिर्वा तथा न कर्त्तव्यम् । तथोच्चभारास्थितैर्यथाऽधो निपतति दंतमलजलादि तथा दंतधावनमपि न कार्यम् । तथा जीववधभीतैरुत्सर्गतस्तिर्यक्-

स्थापनं न कर्त्तव्यम्। तथाऽसंस्तरणे तु महिषमहिष्यो न स्थाप्यास्त्रसस्थावरजीवनिकायविनाशनिवृत्तमनोवृत्तिभिः, गवां च संख्या विधेया वर्षादौ च तिरश्चां शुष्कतृणादिनीरण प्रस्फोटनादिनीकुंथुप्रभृतिजीवाऽपनयनपूर्वमेव छगणं च तिरश्चां सर्वदाऽपि यतनापरिष्ठापनीयम्। तथा श्वनरोप्यशोधितस्थाने न परिष्ठाप्यः, परिष्ठापितोऽपि एतरलीकार्यः। तथा धृत्यादावव्यथारणधारनादिजलं न त्यजनीयम्। तथापुञ्जे वह्निर्न देयः। तथा लिंपनार्थं योजिते छगणमृत्तिके द्वितीयदिने न स्थापनीये। एवमनेकप्रकारा द्वींद्रियत्रींद्रियचतुरिंद्रियाणां यतना विधेया।

अथासंज्ञिपंचेंद्रियसंज्ञिपंचेंद्रिययतना। तत्रासंज्ञिपंचेंद्रियनरविराधनाद्वींद्रियविराधनावर्जनकृते संज्ञिपंचेंद्रियनरोत्पत्तिनिपत्तिवर्जनकृते च मैथुनं न सेवनीयम्। सर्वथा च तत्यक्तुमशक्तैः श्रमणोपासकैः स्वदारवर्जं तत्याज्यमेव। स्वदारविषयसेवायामप्यासक्तिर्वर्जनीयैव। तथा यामिन्यादौ भाजने लघुनीतिर्न स्थाप्या मुहूर्त्तोपरि, तथा वहिर्भूमौ गतैरुच्चारादि व्युत्सृष्टमिति वारत्रयं भणनीय यतस्तत्राऽसंज्ञिनराः समुत्पद्यन्ते मुहूर्त्तोपरि। तथा मुहूर्त्तोपरिस्थितनिष्ठीवनश्लेष्मपुरीषक्लिन्नमलाविवलनादिनाक्रमणीयम्। तथा निष्ठीवनश्लेष्मदेहमलवातपित्तादि भस्मरजःप्रभृतिना एकीकार्यं यथा तत्रासंज्ञिनरा न समुत्पद्यंते, कीटिकामक्षिकादिजंतवश्च न लगंति। तथा लघुनीतिक्लिन्नस्थाने खाले च लघुनीतिकरणस्नानपादधावनजलत्यजनादि वर्जनीयम्। तथा प्रावृषि विशेषतो गमनागमनादौ यतना विधेया यतस्तत्र मक्षिकावत् सूक्ष्मा मंडूकिकाः समुत्पद्यंतेऽन्येऽपि त्रसजंतवः। एवं नैकप्रकाराऽसंज्ञिपंचेंद्रिययतना कर्त्तव्या। संज्ञिपंचाक्षयतनार्थं तु यत्रकुत्रचित् स्थाने स्थिता पक्षिणां नीडा न चालनीयाः। तथाऽव्यापार्यमाणकपाटोद्घाटनेऽव्यापार्यमाणस्थानस्थितपुंजनप्रमार्जनादौ च गृहगोधाद्यंडकादियतना कार्या। तथा घृततैलादिभाजनानि तथा स्थगनीयानि यथोंदुरादि न प्रविशति। तथा भुजगकोलादिजंतुर्भाजने

क्षिप्त्वा न स्थाप्यः प्रभूतकालम् । तथा मूषिकाखल्वाटिकागृहगोधादिजीवदयाकृतेऽत्वरिततया चक्षुःप्रेक्षणपूर्वमेव सर्वदा गमनागमनादि विधेयं विशेषतस्तमस्विन्याम् । एवमनेकविधा पंचेन्द्रिययतना कार्याऽऽरंभतः ।

तथा षट्काययतनाकृते सर्वदा शकटादौ नोपवेष्टव्यं विशेषतो वर्षासु । तथा शकटवृषभपृष्ठ्यादौ भाराधिरोपणेनाजीविका न कार्या । तथा लिंपन-धवलनसदनप्रमार्जनरंधन-छगणेंधनधान्य-शोधनभांडक्षालनदलनखंडनवसनक्षालन-भाजनधावनस्नानदंतपावनकरचरणप्रक्षालनशिरःशोधनग्रंथनगृहहट्टादिविधानपतितभित्त्यादि-समारचनचुल्लीसंधुक्षणपल्यंकादिशोधनलघुनीतिबृहन्नीतिविधाननिष्ठीवीनश्लेष्ममलाद्युज्झनतिर्यग्-जलपानतृण-नीरण-छगण-परिष्ठापनस्थापन-भाजन-धावननीरावश्रावणादित्यजनवस्तुक्रयविक्रयकरणभोजनशयनगमनागमनोर्द्धस्थानोपविशनादि-निखिलतनुस्वजनपरिजनसदनहट्टादिकृत्येषु सर्वोद्यमेन षट्कायारंभयतना कर्त्तव्या ।

अथ सापराधे या यतना निगदिता सा किंचिद् भाव्यते । तथाहि सापराधेऽपि क्षमनशक्तौ क्षंतव्यमेव, अशक्तौ तु गुरुलाघवपर्यालोचनं विधेयं मंदापराधविषयम् । तत्र लघ्वपराधे क्षमैव विधेया । एषा सर्वाऽपि यतना प्रोक्ता । व्रतं तु निरपेक्षरूपा निरपराधत्रसजंतुसंकल्पवधविषयं निरर्थकं स्थावरजीवसंघट्टाऽऽगाढपरितापोपद्रवविषयं च यतो निष्प्रयोजनमेकेंद्रियाणां संघट्टादिषु पृथक् पृथक् प्रायश्चित्तानि प्रतिपाद्यंते जीतकल्पे श्रमणोपासकानामपि ।

अस्मिँश्च प्रथमाऽणुव्रते पंचस्थूलातिचाराः परिज्ञेयाः श्रमणोपासकैर्न तु समाचरणीयास्ते च वध[1]बंध[2]छविच्छेदा[3]ऽतिभाराधिरोपण[4]भक्तपानव्यवछेद[5]रूपाः । तत्र वधः क्रोधादिना द्विपदादीनां निर्दयं ताडनम्१ । एवं बंधो रज्ज्वादिभिस्तेषां संयमनम्२ । छविच्छेदस्तु कर्णादिकर्त्तनम्३ । अतिभाराधिरोपणं तु शक्त्यनपेक्षं गुरुभाराऽऽरोपणम्४ । भक्तपानव्यवच्छेदस्त्वन्नपाननिरोधकरणम्५ ।

एते पंचापि स्थूलातिचाराः परिहार्याः प्रयत्नतः प्रथमाणुव्रतिभिः । अत्राह विनेयः—

*न मारयामीति कृतव्रतस्य, विनैव मृत्युं क इहातिचारः । निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥१॥*

*मृत्योरभावान्नियमोऽस्ति तस्य, कोपे दया हीनतया तु भग्नः । देशस्य भंगादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥२॥*

अनाभोगाऽतिक्रमव्यतिक्रमादिना सर्वत्राऽतिचारता परिज्ञेया । अत्र निदर्शनं कोपे श्राद्धसुतस्तस्करैर्धृत्वा भूपसूपकारस्य मूल्येन दत्तः । अथ च सोऽन्यदा सूपकृता प्रोक्तो 'भद्र ! लावकानुच्छासय' इति तेनोक्ते पंजरमुद्घाट्य तान् मुमोच स श्राद्धसूनुः । तदा च सूपकारेणोचे 'मारयैतान्, मा मुंच । स प्रतिवक्ति 'कृतव्रतोऽहं, नैतान् मारयामि', तदा च तेन स कुट्टयितुमारब्धः क्रंदयामास नृपेण च तदाक्रंदशब्दं निशम्य स समाकारितः पृष्टश्च 'किं न सूपकृत्कथितं करोषि ?' तेनोक्तं 'कृतव्रतोऽहं, स्थूलप्राणातिपातं न करोमि' नैकधाऽपि नृपेणोक्तः प्राणिवित्रासनकृते तथापि स नेच्छति नृपेण च हस्तिव्यतिकरेण भापितस्तथापि स नेच्छति, तदा नृपेण स्वस्यांगरक्षकश्चक्रे स । अन्यदा च कोऽप्याचार्यस्तत्र समवासोर्षीत्तदंतिके च सुकृतदेशनां निशम्य विरक्तमना नृपं समापृच्छ्य श्रामण्यमादाय स सुगतिभागभूत् । यथाऽनेन तादृग्विधसंकटेऽपि प्रथमाऽणुव्रतं न खंडितं तथान्यैरपि श्राद्धैर्न खंडनीयम् ।१।

द्वितीयाऽणुव्रते तु श्राद्धैः स्थूलमृषावादाद् विरमणं विधेयम् । तत्र मृषावादश्चतुर्द्धा सद्भावप्रतिषेधो'ऽसद्भावोद्भावनम्' अर्थांतराभिधानं' गर्हावचनं च' । तत्राद्यो न विद्यते जंतुः पुण्यं पापं चेति प्रभृतिकः १ । द्वितीयस्तु श्यामाक-तंदुलमात्रो जीवो ललाटस्थायी सर्वगतो नेत्यादिकः२ । गामश्वं ब्रूत इत्यादिकस्तृतीयः३ । काणं काणमेव वदतीत्यादिकश्चतुर्थः४ । अयं चतूरूपोऽपि मृषावादः परिस्थूरः परिहार्य एव सूक्ष्मे तु तस्मिन् यतना विधेया । अथवा परिस्थूरोऽचौर्यादिनिदानभूतः कन्यालीकादिकः पंचप्रकारो

ध्नापि नेरणोक्तो यदयं मदीयस्तुरगो नश्यन्नस्ति तेन तं प्रहर । अथ च तेन श्राद्धेन स तुरगो हतो मृतः । तदा च स पुमांस्तं श्राद्धं करणे नीत्वा कथयामास यदनेन मदश्वो हतस्तदा च कारणिकैः पृष्टं 'कोऽत्रसाक्षी ? तेनोक्तमस्यैव तनयः' । तदा च तैः स पृष्टः कथयामास 'यदस्याश्वो नश्यन्नेतद्वचनान्मज्जनकेन हतो मृतः' । एवं सत्यसाक्षिदानात् स श्राद्धसूनुः सत्कृतः तत्पिता च मुक्तः । इतरस्तु निर्द्धारितः । यथा चानेन श्राद्धसूनुना तादृशेऽपि प्रस्तावेऽसत्यं नोक्तं तथान्यैरपि श्राद्धैर्न वक्तव्यम् २ ।

तृतीयाणुव्रते तु श्रमणोपासकैः स्थूलादत्तादानं वर्जनीयम् । स्थूलं राजनिग्रहादिहेतुर्यददत्तं तस्यादानं वर्जनीयम् । अत एव श्रावकैः पतितं विस्मृतं गर्त्तं स्थितं स्थापितं परकीयं वस्तु न किमपि ग्राह्यमदत्तं तृण-मात्रमपि । तथा विश्वासघात-परद्रोह-परवंचन-पृथग्ग्रंथिविधान-स्वपरगृहद्वारुंचनकूटकरणकूटतुलाकूटमानविधाननवीनजीर्णाल्पबहुमूल्यवस्तुसंकर-करण-शुल्क-चौर्यस्तैन्यसमानीता-दानादि-सर्वथा वर्जयन्तृतीयाणु-व्रती । किं बहुना परकीयमननुज्ञातं जलं दंतधावनमात्रमपि परिहार्यं श्रमणोपासकैर्नियमतः । अस्मिंश्च व्रते स्तेनाहृत'तस्करप्रयोग'विरुद्धराज्यातिक्रम'कूटतुलाकूटमानकरण तत्प्रतिरूपव्यवहार स्वरूपाः पंच स्थूलातिचाराः परीहरणीयाः । तत्र स्तेनास्तस्करास्तैर्देशान्तरात् स्तैन्येनाहृतमानीतं किंचित् मणिमौक्तिकादि तत्समर्थमिति कृत्वा समाददतः प्रथमोऽतिचारः१ । युष्मदानीतमहं ग्रहीष्ये अथवा युष्मास्वहमेतद्व्यवहारेण ददानोऽस्मि संपत्तौ मार्गयिष्ये इत्यादि-प्रकारैस्तस्कराणां हरण-क्रियायां प्रेरणं तस्करप्रयोगः२ । परस्परविरोधवतोर्नृपयोर्यद्राज्यं तत्र तदनुज्ञां विनापि लोभाद् यद् वाणिज्यार्थं गमनं स विरुद्धराज्यातिक्रमः३ । कूटतुलाकूटमानकरणं तु लोभात्तुलमानादीनां दानादानयोर्न्यूनाधिकानां विधानम्४ । तस्य प्रस्तुतकुंकुमादेः प्रतिरूपं सदृशं कुसुंभादिकृत्रिमकुंकुमादि वा तत्प्रक्षेपेण व्यवहारस्तत्प्रतिरूपव्यवहारः५ । एते पंच स्थूलातिचाराः सर्वप्रयत्नेन वर्जनीयाः । एषामतिचारता चानाभोगाति-

क्रमव्यतिक्रमादिनाऽवसेया। एतद्व्रतं प्रोक्तातिचारपरिवर्जनेन व्यवहारशुद्धि–परिपालनेन सम्यगाराधितं भवेत्, अतोऽतिचारपरित्यागे व्यवहारशुद्धिपरिपालने च सम्यग् यतनीयम्। व्यवहारशुद्धिस्तु देवद्रव्यगुरुद्रव्यपरिवर्जनेन देवद्रव्योपजीविमालिकशिलातक्षकदेवद्रव्य-गुरुद्रव्यभक्षकादिभिः समं व्यवहारादिपरिहारेण, शाकुनिकवागुरिकमात्स्यिकशौनिकतैलिक-कोलिक-प्रभृति-जीवहिंसकमहारंभकारिभिः समं व्यवहारपरिवर्जनेन, विशेषतस्तैस्तैः सममुद्धारकव्यवसायत्यागेनैतेषां च व्याजद्रव्यवितरण-परिहरणेन, कारणेन कारागारतलारक्षशुल्कादिदु-ष्टराजाधिकारास्वीकारेण, क्रयविक्रयोचितवस्तूनां न्यूनाधिकमूल्याकथनेन, कथितवेलायामुत्तमर्णस्य देयद्रव्यार्पणेन, पुत्रादिधनानादानेन, पंचदशकर्मादानविवर्जनेन चेत्यादिभिः प्रकारैः सम्यगाराधिता भवेत्। इदं चादत्तादानं द्रव्यतः स्थूलसचित्ताचित्तमिश्रवस्तुविषयम्। क्षेत्रतस्तु ग्रामे नगरेऽरण्ये वा। कालतस्तु दिवा रात्रौ वा। भावतस्तु रागाद् वा द्वेषाद् वा। एवं चतुर्विधमप्यदत्तं परिहार्यम्। अत्रोदाहरणम्। कस्मिँश्चिन्नगरे एका गोष्ठी समभूत्तन्मध्ये चैकः श्रमणोपासकः। अथ च तस्मिन्नगरेऽन्यदा महोत्सवे कस्यचिद् व्यवहारिणो गृहं विजनं वीक्ष्य मुष्टं गोष्ठीजनेन तमेकं श्रवणोपासकं विमुच्य। तदा तत्सदनस्थितैका वृद्धवनिता तानुपलक्षयितुं भव्यमभूद् यदीदृशं द्रव्यं भवद्भिरासादितमिति वदंती तैरज्ञानात् पदेषु केकिपत्रेण चिह्नं विहितवती। द्वितीयदिने तु नृपतेः पुरः प्रोक्तं तद्गृहधनिकेन, नृपतिनोक्तं 'कथं ते ज्ञास्यंते'। वृद्धयोक्तं 'ते सर्वेऽपि केकिपत्रेण चिह्निताः संति'। तदा च नृपादेशात्तलारक्षैश्चिह्नोपलक्षितास्ते सर्वेऽपि गोष्ठीजना धृतास्तदा च श्राद्धः प्राह 'नाहं कस्यचिदप्यदत्तं तृणमात्रमपि गृह्णामि'। तदा च नृपेण स चिह्नरहितः सत्कृत्य मुक्तः। अन्ये तु शिक्षिताः। यथाऽनेन श्राद्धेन तादृग्विधसमुदायमध्यवर्तिनाऽपि नादत्तं गृहीतं तथाऽन्यैरपि न ग्राह्यम् ३।

अथ तुर्यव्रते जितेंद्रियेण श्रमणोपासकेनोत्सर्गतः कुमारब्रह्मचारिणा भाव्यम्। तथा चाऽशक्तौ स्वदारसंतोषिणा भवितव्यम्।

स्वदाराः स्वीयभार्यास्तेषु या संतोषरता भाव्यम् । यस्तु नृपामात्य प्रभृतिकः स्वदारैर्नाप्नोति संतोषं तेनापि जघन्यतः परदारगमनप्रत्याख्यानवता भाव्यमेव। परा-आत्मव्यतिरिक्ता दाराः परिणीतसंगृहीतभेदभिन्नास्तेषु गमनमासेवनं तत्प्रत्याख्यानवता। एवं स्थूलमैथुनविरतिव्रता तुरीयाणुव्रते भाव्यं श्रावकेण, गृहीततुरीयाणुव्रतेन च श्रमणोपासकेन नवब्रह्मगुप्तिपालनविषये यतनीयम् । तत्र प्रथमा ब्रह्मगुप्तिः परवनिता संसक्ता वसतिः परिहार्या। शयनादौ पणाङ्गनाद्यनायतनस्थानानि वर्जनीयानि प्रयत्नेन। द्यूतकरपारदारिकनटविटादिसंगमश्च सर्वथैव वर्जनीयः। तथा पशु-पण्डक संसक्तस्थानेषु शयनादि त्यजनीयम्। तथैकाकिन्या युवत्याः सदने एकाकितया गमनोपवेशनशयनादि वर्जनीयम् ।१। अथ द्वितीया, निर्जनस्थाने केवलवनितया सम कथा वर्जनीया। अन्यत्रापि परवनिताभिः समं हास्यवदालापादि त्याज्यमेव। जाति'कुल'रूप'नेपथ्य विषया चतुर्भेदाऽपि स्त्रीकथा न वक्तव्या, न च श्रोतव्या, न च चिंतनीया ।२। अथ तृतीया, परयुवत्या सम नैकत्रासने उपविष्टव्य, नैकत्रशयने शयनीयम्। उत्थितायामपि तस्यां मुहूर्त्तं यावत् प्रतीक्षणीयम्। मार्गेऽपि नैकत्र शरटदावुपवेष्टव्यं, किं बहुना, वयःस्थसौरभगिनीतनयादिभिरपि सममेकत्र शयनासनादि त्याज्यमेव ब्रह्मव्रतरक्षार्थम् ।३। अथ तुरीया, पणाङ्गना-परवनितादीना वदननयनस्तनजघनकरचरणगतिललितहसितप्रेक्षितवसनविभूषणादि न निरीक्षणीयम् ।४। पंचमी, तु कुड्यांतरे यत्रान्यवनिताकूजित-रुदित-गीतस्तनितहसितक्रंदितादिध्वनिराकर्ण्यते तत्र न स्वापो विधेयः ।५। षष्ठी तु व्रतप्रतिपत्तेः पूर्वं ये पणाङ्गनादिभिः समं भोगा भुक्तास्ते न स्मरणीयाः, अथवा चतुर्दश्यष्टम्यादिनियमदिनेषु ये पूर्वं स्वयोषिता समं भोगा भुक्ता अन्यदिनेषु ते न स्मर्त्तव्याः ।६। सप्तमी तु सर्वदापि नातिप्रणीताहारविषयेऽभिष्वङ्गो विधेयो, विशेषतो नियमदिनेषु, तथा स्वयोषिति पितृ-गृहे गतायां ग्रामांतरगमने वा व्यवसायाद्यर्थमात्मनः ।७। अष्टमी त्वतिमात्राहारः सर्वदापि न ग्राह्यो, विशेषतो नियमदिनादिषु ।८। नवमी

तु वयोवित्ताद्यनुमानेन नेपथ्यमंडनादि विधेयं नात्युद्भटवेपो विधेयो, नातिविभूषा च कार्या तनुविपयापि ।९। एवं नवगुप्तिगुप्ततुरीयाणु-
व्रतं पालनीयं प्रयत्नतः । तथा स्वयोपित्यपि चतुष्पर्वपट्पर्वाष्टाह्निकापक्षमासचतुर्मासंसंवत्सरादिविपयाब्रह्मव्रतनियमा ग्राह्याः । नियमदिनेपु
पृथक् शयनीयं, यथा नियमः सम्यक् पालितो भवति । एकद्व्याद्यपत्यभवनानंतरं तु सुदर्शनश्रेष्ठ्यादिवद् यावज्जीवं स्वयोपित्यपि ब्रह्मव्रत-
नियमः समादेयो, यतः स्त्रीयोनावुत्कर्षतो नवलक्षाणि जीवाः समुत्पद्यंते, तेषां च पुरुष-संयोगतो विराधना भवेत् । यदुक्तं—

*इत्थीए जोणीए, संभवंति वेइंदिआ उ ते जीवा । इक्को व दो व तिन्नि व, लक्खपुहत्तं च उक्कोसं ॥१॥*

*पुरिसेण सहगयाए, तेसिं जीवाण होइ उद्दवणं । वेणुगदिट्ठं तेणं, तत्तायसिलागनाएणं ॥२॥*

भगवती-वृत्तौ तु पंचेन्द्रिया एते इत्युक्तम् । तथा गर्भेऽप्युत्कर्पतो नवलक्षाणि गर्भजपंचेन्द्रियनराः समुत्पद्यंते । उक्तं च–

*पंचिंदिआ मणुस्सा, एगनरभुत्तनारिगब्भम्मि । उक्कोसं नवलक्खा, जायंति एगहेलाए ॥१॥*

*नवलक्खाणं गब्भे, जाइय इक्कस्स दुण्ह य समत्ती । सेसा पुण एमेव य, विलयं वच्चंति तत्थेव ॥२॥*

तथा 'थी-पुरिससंजोएसु वा' इति प्रज्ञापनावचनाद् यावत् पुं-स्त्री-संयोगस्तावदसंख्येयाः संमूर्छिम-मनुजा अंतर्मुहूर्त्तायुपः समुत्प-द्यंते विलीयंते च । एवमसंख्येयजीव-विराधनादि-निदानमधर्ममूलमेपा पशु-क्रिया वर्जनीया प्रयत्नतो विवेकिभिराशैशवात्, किं पुनर्जा-तापत्यैस्तस्मादेकद्व्याद्यपत्यसंभवे स्वदारेष्वपि ब्रह्मव्रतं भजनीयं यावज्जीवं जीववधभीरुभिः । तथा स्वदारसंतोपिभिर्मणिकारस्वर्णकारादि-वाणिज्यमपि त्याज्यं यतस्तत्र भूयान् परवनितासंसर्गः स च ब्रह्मव्रतिनो निपिद्धः सूत्रे । यदुक्तं—

*जहा कुकुडपोअस्स, निच्चं कुललओभयं । एवं खु बंभयारिस्स, इत्थीविग्गहओ भयं ॥१॥*

तथा सति निर्वाहैरनिताभिः समं वाणिज्यं त्याज्यं सर्वप्रकारैरनिर्वाहे तु विकाले विजने च तत्त्याज्यमेव। तथा सर्वाभिः परवनिताभिः समं सर्वदाऽपि हास्यं परिहार्यं, विशेषतः श्यालिका-भ्रातृजाया-मित्रकलत्रादिभिः समम्। यतस्ताभिः समं भूयान् परिचयो भवति तेन समुत्पन्ने कार्ये ताभि. सममालापः सलज्जतया कार्यः। हास्ये तु विधीयमाने लज्जानाशः स्याल्लज्जानाशे च प्रीतिवृद्धौ चानाचारप्रवृत्तिरपि संभवेत्। तस्माद्ग्रआलोपरारि हास्यादि न कार्यमेवान्य-वनिताभिर्विशेषतः श्यालिकादिभिः। तथा हट्ट-पाटक-प्रतोली-गृहद्वारादिषूपविष्टेन श्रावकेण गच्छदागच्छन्त्यो युवतयो नालोकनीयाः किं तु नीचैर्दृशा स्थेयम्। यतः प्रथमं दृष्टिपातः स्यात्ततश्च चेतोभूःता, तस्यां च तद्रूपलावण्यगुणादिवर्णनमेवमनाचारप्रवृत्तिं यावदनेके दोषाः समुत्पद्यंते, तस्मात् परवनितारूपं न निरीक्षणीयं यत्रकुत्रचित् स्थितेन। अन्यच्च स्वदारसंतोषिणा सर्वदाऽपि परस्त्रीसंसर्गभीरुणा भाव्यम्। यतः सद्य एव घातो विलीयते स्त्रीसंगतः। यदुक्तं ज्ञानार्णवग्रन्थे—

नवनीतनिभं पुंसां, मनः सद्यो विलीयते। वनिता-वह्निसंतप्तं, सतामपि न संशयः ॥१॥

अत सुप्तोऽपि जागर्त्ति, स्मरः संगेन योषिताम्। रोगव्रज इवापथ्य-सेवासंभावितात्मनाम् ॥२॥

तस्मात्सर्वप्रकारैः पर-रमणी-संगस्त्याज्य एव। न केवलं पररमणीसंगः किंतु पशुपंडकादिसंसक्तस्थानमपि त्याज्यमेव, यतस्तत्रापि प्राग्भवाभ्यासतो मोहोदयादनाचारप्रवृत्तिरपि संभवेत्। उक्तं च—

पसुपंडगादिएसु वि, मोहानलदीविआण जं होइ। पायमसुहा पवित्ती, पुव्वभवब्भासओ तह य ॥१॥

तथा शयनादौ वयस्थ-सरागनरसंगस्त्याज्यो यतस्तत्रापि शयनीये परस्परं तनुसंगतो मोहोदयादनाचारप्रवृत्तिः संभवति।

तस्यां च गुरुतर-प्रायश्चित्तं, तस्माद् वयःस्थतीव्ररागनरेण समं नैकत्र शयने शयनीयम्। तथा तीव्रमोहोदयेऽपि करकर्म न कार्यं किंतु कामो यथा तपसा वपुषि विलीयते तथा कार्यम्। तथा स्वदारसंतोषिणा पृष्टिधावनाद्यपि नरेण कार्यं न तु पररमण्या, यतः सुकुमारपरस्त्रीकरस्पर्शतो मोहोदयाज्जातु चित्तविप्लुतिः संभवेदेवमनेकविधा ब्रह्मव्रतरक्षार्थं यतना विधेया नरेण। एवं यथा नरस्य नवब्रह्मगुप्तिरक्षणप्रवृत्तिका यतना प्रोक्ता तथा नारीणामपि वाच्या पुरुषनाम्ना। विशेषतस्तु वनिताभिर्गृहद्वारे नोपवेष्टव्यं नचोर्द्धीभूय स्थेयं किंतु गृहमध्य एव स्थेयम्। तथा सप्ताष्टवर्षेभ्यः प्रारभ्य पंचपंचाशद्वर्षाणि यावन्नैकाकिन्या युवत्या कुत्रचित् स्थेयं गंतव्यं वा। तथा सर्वदाऽपि वनिताभिः स्वतंत्रतया न स्थेयं किंतु कौमार्ये पितृ-परतंत्रतया, यौवने पत्यायत्ततया वार्द्धके, तु सुतायत्ततया स्थेयम्। उक्तं च—

*पिता रक्षति कौमार्ये, भर्ता रक्षति यौवने। रक्षंति वार्द्धके पुत्रा, न स्त्रीः स्वातंत्र्यमर्हति ॥१॥*

तथा देवगुरुनमस्कृतिविशेषकार्यादि विना वनिताभिः सदन एव स्थेयं न तु गृहे गृहे भ्रमणं विधेयम्। *स्त्री-भ्रमंती विनश्यतीति'* नीतिशास्त्रोक्तेः। गृहेऽपि वनिताभिः संवृताकारतया स्थेयं विशेषतो बहिर्गमने। तथा स्त्रीभिर्न केनापि परपुरुषेण सम-मालापः कार्यो विशेषतो देवरजामातृवणिक्-पुत्र-प्रभृतिभिः। यतस्तैः समं बहुपरिचयः स्यात्तेन तैः समं बह्वालापे लज्जालोपस्तस्मान्न बहवो दोषाः। गाढप्रयोजने तु सलज्जतया संवृताकारतया स्वल्प एवालापो विधेयः। तथा भिक्षार्थाऽऽगततालाचरब्राह्मण-योगिकार्पटिकादिभिः समं वार्त्ता न विधेया विशेषतो वनिताभिः, यतस्तैः समं संलापेन सम्यक्त्वशीलयोर्विनाशः संभवेत्। तथा वशाभिर्नरभूवरेंद्रजालपात्रनृत्यादिविलोकनकृते न बहिर्निर्गंतव्यम्; यतस्तत्र भूयान् जनसंमर्दः स्याच्चत्र च शीलातिचारसंभावना। तथा निशि वशाभिर्न कुत्रचित् गंतव्यं गाढकार्ये तु सहोदरादिसार्थे एव। तथा यात्रास्नात्रादौ बहुनरसंमर्द्दे मध्ये न स्थेयं किंतु विजन एव। तथा स्त्रीभिर्मार्गेऽपि

गमने परनरसंघट्टपरिहारयतना विधेया, विशेषतश्चैत्ये । तथा स्त्रीभिः सर्वदाऽपि परनरनिरीक्षणं परिहार्यं विशेषतश्चैत्ये । तथा वनिताभिः सोदरदेवर-ज्येष्ठादीनां सर्वयतानां निशि सुप्तसमये संभविचेष्टालापादिविलोकनाऽऽकर्णनादि वर्जनीयम् । तथा वनिताभिः सर्वदाप्यत्युद्भटवेषोऽतिहासश्च वर्जनीयः स्वर्गेऽपि । तथा पितृगृहेऽपि स्त्रीभिर्भर्तृगृहवत् सलज्जतयैव स्थेयम् । तथा पतिविदेशगमने प्रियविप्रयोगे च स्नानविलेपन वेणीधूपनपुन पुनःकरचरणनयनवदनादिक्षालनमंडनपट्टांशुकादिपरिधानयावकद्रवादिकरचरणशोणीकरणसिंदूरसीमंत-भरणाभिनवपुष्पभूषा-करणातिकणीतातिमात्रभोजनविधानगाढप्रयोजनाभावे गृहबहिर्निर्गमननाट्यादि-विलोकन-सशृङ्गार-गीतगानाकर्णनखदशनशेखरभरण-कंठशीर्षादिकुसुमावलंबनपत्रपुष्ठालवंगैला-जाति-फलाद्या-स्वादन-परपुरुषपरिचय-करणा पूर्वभुक्तस्मरणादि वर्जनीयमेव सर्वदा वशाभिः । एवं विधवाभिरपि यावज्जीवं विधेयं ब्रह्मरक्षार्थम् । तथा महिलाभिः पंचवर्षेभ्यः पुरतः सुतसहोदरादिनाऽपि समं नैकत्रशयने शयनीयं शीलातिचारपरिहारार्थम् । एवं यथाऽनेकप्रकारैः परपुरुषसंगत्यागविषये योषिद्भिर्यतना विधेया । तथा तादृग्विधसरागांगना-संगत्यागविषयाऽपि, यतस्ताभिः सममप्येकशयनीये शयने परस्परानुरागतोऽब्रह्मसेवासंभवेदन्योन्यम् । तथा योषिद्भिरवाच्यप्रदेशे फल-काष्ठखंडा-गुल्यादिभिः कामपीडायामपि कामक्रीडा न कार्या, किंतु निर्विकृत्याचाम्लनोदरिकाचतुर्थादितपो विधेयं तत्पीडाप्रशमकृते । तथाऽनंगोद्दीपकसविलासगमनवचनसकटाक्षवीक्षण प्रभृति-सर्वदा वर्जनीयं वशाभिः । तथा पत्या सह बलात्कारो न कार्यः सुरतविषये योषिद्भिः, भर्ताऽपि च कलत्रेण समम् । तथा कांतेन कांतायाः शीलविषये उपदेशो दातव्यः कांतयाऽपि च कांतस्य । तथा कांतानुज्ञया कांताभिः पर्वपक्षमासादिविषया ब्रह्म-नियमा ग्राह्याः । एवमनेकविधा ब्रह्मव्रतयतना विधेया श्राद्धश्राद्धीभिः । तथा श्राद्धैः स्वापत्यानि तथा शिक्षणीयानि रक्षणीयानि च यथा शैशवेऽपि विषयविषयां क्रीडां परस्परं न कुर्वंति । एतच्च मैथुनं परदार-

श्राद्धोभिस्तु परपुरुषविषयम् । अस्मिँश्च व्रते
विषयं दिव्यमानुष्यतैरश्चभेदेन त्रिविध मपि परिहार्य-महार्यशर्मार्थिभिः श्रमणोपासकैः, अनंग-क्रीडा ३, परविवाह-
पंच-स्थूलातिचाराः परिहार्याः प्रयत्नेन । ते चेमे — इत्वर-परिगृहीतागमनम् १, अपरिगृहीतागमनम् २, अनंग-क्रीडा ३, परविवाह-
करणम् ४, कामभोगतीव्राभिलापश्च ५ । तत्रैत्वरं स्वल्पकालं दिन-पक्ष-मासादिकं, परिगृहीता भाटी-प्रदानेन वशीकृतेत्वरपरिगृहीता,
काल-शब्दस्य लोपः । एवंविधायां पणांगनाप्रभृतिकायां गमनं मैथुना-सेवनमित्वरपरिगृहीतागमनम् १ । अपरिगृहीताऽग्रहीतभाटिः
परमणी, कुलांगना वाऽनाथा, विधवा, तस्यां गमन-मपरिगृहीता-गमनम् । एतौ द्वावतीचारौ स्वदार-संतोपिणोऽतिक्रमादिभिरवसेयौ ।
अतिक्रमादीनां तु स्वरूपं स्त्रिया ग्राम्यधर्मकृते निमंत्रणे कृते तदंगीकुर्वाणस्यातिक्रमः १, तत्कृते चलने कृते तु पूर्वस्मादधिकापराध-
रूपो व्यतिक्रमः २, तत्र शयनीयोपविशनप्रभृतिकस्तु तावदतिचारो यावत्तां न सेवते ३, तत्सेवायां तु कृतायामनाचारो व्रतभंगरूपः ४।२।
अनंगो मदनस्तत्प्रधाना क्रीडाऽधरदशनकुचमर्दना-लिंगन-प्रभृतिका, तां स्वदारवर्जं कुर्वतोऽनंगक्रीडा । अथवा समाप्तप्रयोजनस्यापि स्व-
लिंगेनाहार्यैः काष्ठमृत्तिकाचर्मादिनिष्पादितोपरथैः स्वरमण्यऽवाच्यप्रदेशा-सेवनमनंग-क्रीडा ३ । स्वापत्यव्यतिरिक्तमन्यापत्यं परशब्दे-
नोच्यते । तस्य कन्याफललिप्सया स्नेहं-संबंधेन वा विवाहकरणं पर-विवाहकरणम् । सौवापत्येष्वपि संख्यानियमो न्याय्यः ४ । शब्द-
रूपगंधाः कामाः प्रोच्यंते, भोगौ तु रसस्पर्शौ तेपु तीव्राभिलापोऽत्यंतं तदध्यवसायस्तस्मात्वेवं विधत्ते समासरतोऽपि योपिन्मुखोपस्थ-
कर्णकक्षांतरेष्वऽवृसतया लिंगं प्रक्षिप्य मृत इवास्ते। भूरिकालं दशनकामांकुशैर्या मदनमुत्तेजयति। वाजीकरणानि चोपयुंक्ते। योपिदवाच्य-
प्रदेशं वा गृह्णाति । एतेष्वऽनंगक्रीडाप्रभृतयस्त्रयोप्यऽतीचाराः स्वदारसंतोपिणः परदारवर्जकस्य वनितायाश्च विज्ञेयाः । एवं पंचाति-
चारपरिहारपुरस्सरं पूर्वोक्तयतनायुतं नवगुप्तिगुप्तं सुविशुद्धं ब्रह्मव्रतं यावज्जीवमाराधनीयं श्राद्धश्राद्धीभिः । अत्रान्वयव्यतिरेकाभ्यां

दृष्टान्तभावना, तत्र प्रथममन्वयनिदर्शनम् । तथाहि आनंदपुरे दुर्गतो द्विजन्मा व्यंतरमाराध्य वरं मार्गयामास । स तुष्टः कथयांबभूव 'किं ते ददामि ?' स प्रोचिवान् 'सर्वदाऽपि मम भोजनं प्रयच्छ ।' तेनोक्तं 'भविष्यति, परं त्वं गच्छ गच्छे । तत्र जैनं नरस्त्रीयुग्ममस्ति, तस्यापि त्वया भक्तादि प्रदेयं, ततस्तेऽभीप्सितं भावि । तदनु स सततं तथा करोति । अन्यदा विप्रेणोक्तं 'किं भवतां तपो यद्देवानामपि पूज्यता समभूद्भवताम् ?' ताभ्यामुक्तमावाभ्यां बाल्ये सुरतविषये एकांतरनियमः स्वीचक्रे अथ च दैवयोगादावयोः समभूत् परिणयनम् । यस्मिन् दिने मम नो नियमस्तस्मिन् दिने तु दयिताया नियमः । यस्मिन् दिने तु मम नियमस्तस्मिन्नो पत्न्याः । एवमावाभ्यां परिणयनादनु यावज्जीवं समाराधितं ब्रह्मव्रतम् ।' एतन्निशम्य प्रबुद्धो द्विजन्मा श्रीजैनधर्ममाराधयामास । एतदेतयोरैहिकं फलम् । अमुत्र तु स्वर्गापवर्गादि । अथ व्यतिरेकोदाहरणम् । तथाहि–हेमपुरे श्रीदः श्रेष्ठी गुर्विणीं प्राणप्रियां गृहे विमुच्य वाणिज्यार्थं ययौ देशांतरम् । अथ च पश्चात् सुतामद्भुतरूपां तनुप्रिया सुषुवे । सा च यौवनं प्राप्ता दत्ताऽन्यनगरे जनन्या । तत्पिता च वाणिज्यं विधाय पश्चाद् चलन् वस्तुविनाशभिया तत्रैव पुरे तस्थौ वर्षारात्रं दैवयोगाच्चाऽज्ञानतस्तस्य सुतया समं समभूत्संयोगः । प्रावृट्समये च समतीते स समाययौ स्वनगरे । अथ च पित्रा सा समानायिता सा च स्वभर्तारं निरीक्ष्य लज्जिता सती व्यधादात्मघातं पितापि भवभीतश्चरितमंगीचकार । एवं स्वदारसंतोषव्रतं विना ज्ञात्वैवंविधमपि पातकं लगेत्तस्मात् श्राद्धेन स्वदारसंतोषव्रतिना भवितव्यं, श्राद्धया तु परपुरुषविरमणव्रतवत्या भाव्यम् । एवं तुरीयव्रते श्राद्धश्राद्धीभिः शीलपालनविषये यत्नो विधेयः । यतः—

> 'ऐश्वर्यस्य विभूषणं सुजनता, शौर्यस्य वाक्संयमो, ज्ञानस्योपशमः शमस्य विनयो, वित्तस्य पात्रे व्ययः ।
> अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता, सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥१॥'

वरं शृङ्गोत्तुंगाद् गुरुशिखरिणः क्वापि विषमे, पतित्वाऽयं कायः कठिनदृषदंतर्विंगलितः ।

तथा— वरं न्यस्तो हस्तः फणपतिमुखे तीक्ष्णदशने, वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥२॥

वरं न्यस्तो हस्तः फणपतिमुखे तीक्ष्णदशने, वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥२॥

तथा—वन्हिस्तस्य जलायते जलनिधिः, कुल्यायते तत्क्षणात्, मेरुः स्वल्पशिलायते मृगपतिः, सद्यः कुरंगायते ।

व्यालो माल्यगुणायते विषरसः, पीयूषवर्षायते, यस्यांगे किल लोकवल्लभगुणः, शीलं समुन्मीलति ॥३॥ इत्युक्तं तुरीयव्रतं ॥४॥

अथ पंचमव्रतमुच्यते । तथाहि पंचमेऽणुव्रते श्राद्धश्राद्धीभिर्द्धन १ धान्य २ क्षेत्र ३ वास्तु ४ रूप्य ५ सुवर्ण ५ कुप्य ७ द्विपद ८ चतुष्पद ९ रूपनवविधपरिग्रहस्य प्रमाणं विधेयम् । तत्र धनं गणिमादिचतुर्द्धा । तत्र गणिमं लांगलीफलादि १, धरिमं गुडखंडादि २, मेयं घृततैलादि ३, पारिछेद्यं तु द्युम्नरत्नादि ४, धान्यं तु व्रीह्यादिचतुर्विंशतिभेदम् । क्षेत्रं तु सेतुकेतुभेदाद् द्विप्रकारम् । तत्र सेतुक्षेत्रमरघट्टादिसेचयम् १ , केतुक्षेत्रं तु वियत्पतितवारिनिष्पाद्यम् २ । वास्तु गृहं तच्च खातो १ च्छ्रित २ तदुभयात्मक ३ भेदात्त्रिविधम् । तत्र खातं भूमिगृहादि १ उच्छ्रितं तु प्रासादादि २ तदुभयात्मकं तु भूमिगृहोपरिप्रासादादि ३ रूप्यसुवर्णे प्रतीते, एतद्ग्रहणाच्चेंद्रनीलमरकताद्युपलग्रहणम् । कुप्यं तु स्थालकच्चोलककरोटकलोहाद्युपस्करशयनासनं भांडकवसन-कंबलादि । द्विपदानि तु दासकुर्कुटकेकिशुकगंत्रीप्रभृतिनि । चतुष्पदानि तु तुरंगमतंगजगोमहिष्यादि । एवंविधो नवविधपरिग्रहो यावान् भवति तावत्प्रमाणस्यैव मुख्यतया प्रत्याख्यानं विधेयं श्राद्धेन । तथा त्वशक्तौ तु स्वेच्छानुमानेन परिग्रहपरिमाणं विधेयम् । तत्रापि नातिभूयान् धान्यसंग्रहो विधेयो बहुजीवविराधनाहेतुत्वात् । तथा घृततैलादिसंग्रहोऽपि न कार्यो यतस्तद्भाजनेषु वर्षासु पनकसंसक्तिः स्यात्तच्छोप-समये कुंथवः समुत्पद्यंते तेषामपि विराधना, ये च कीटिकामक्षिकामूषकघृतेलीप्रभृतयो जीवाः पतंति तेषामपि विराधना ।

तथा क्षेत्रपरिग्रहो न कार्य एव मुख्यतया सति यादृशे तादृशे निर्वाहे, यतः क्षेत्रे कृषिकर्म भवेत्तस्य करणे कारापणेऽनुमतौ वा महानारंभः संभवेत् । तथा गृहपरिग्रहोऽपि भूयान्न कार्यो यतस्तेषां गृहाणां पतितानां समारचने लिपनधवलनादौ वा महारंभः स्यात्, भाटकार्पणेऽपि महान् पापवृद्धिर्यतस्तन्निवासमभिजनैर्ये तत्र स्थित्वा ग्राम्यधर्मसेवनधान्यादिपचनप्रभृतयो विधीयंते आरंभास्तद्भागोऽपि संभवेत्, यतस्ते जना स्वममत्वास्थितगृहेषु निवसंति। तथा लोहशस्त्रघरट्टादिक २ परिग्रहोऽपि न कार्यः संस्तरणे असंस्तरणेऽपि न भूयान् । तथा मुख्यवृत्त्या शकटादिपरिग्रहो न विधेय, जातु गाढप्रयोजने तत्संख्या विधेया । तच्च मंग्यादि न कस्यापि प्रार्थितमप्यर्पणीयम् । तद्विक्रयोऽपि न कार्यः । तथा संस्तरणे दासदास्यादिपरिग्रहो न विधेयः । असंस्तरणे तु तत्संख्या कर्त्तव्या । तथा मुख्यवृत्त्या पशुसंग्रहः सर्वथैव वर्जनीयो बहुजीवविराधनानिदानत्वात् । अनिर्वाहे तु तद्गणना विधेया । तदर्थतृणादिच्छेदनागलितजलपानादिवर्जनप्रभृतिका प्रागुक्ता यतना च विधेया सर्वप्रयत्नेन । तथा जीवविराधनाहेतुभूतसकलकर्यापणक्रयविक्रयौ वर्जनीयौ । किं बहुना जीवविराधनाहेतुभूतस्य नवविधस्यापि परिग्रहस्य वर्जने सर्वप्रयत्नेन यतितव्यम् । अस्मिन्नणुव्रते धनधान्यप्रमाणातिक्रम १ क्षेत्रवास्तुप्रमाणातिक्रम २ हिरण्यसुवर्णप्रमाणातिक्रम ३ द्विपदचतुष्पदप्रमाणातिक्रम ४ कुप्यप्रमाणातिक्रम ५ रूपाः पंचातिचाराः परिहार्याः । तत्र हिरण्यं रजतं घटितमघटितं वा । एवं सुवर्णमपि । एतेषु धनधान्यप्रमाणातिक्रमोऽधमर्णादिभ्योऽधिकलाभे सति यावच्चाग्रेतनं विक्रीणीते तावत्तत्सदन एव स्थापयतः, सत्यंकारणं वा स्वीकुर्वतः, स्थूलमूटकादिबंधनतो वाऽवसेयः १ । द्विप्रभृतिक्षेत्राणामेकत्रीकरणाद् गृहाणां च द्व्यादीनां भित्यादिपातनादेकीकरणतः क्षेत्रवास्तुप्रमाणातिक्रमः स्यात् २ । हिरण्यसुवर्णप्रमाणातिक्रमस्तु तयोरधिकयोः कलत्रादीनां वितरणात् ३ । द्विपदचतुष्पदप्रमाणातिक्रमस्तु तद्गर्भगणनात् ४ । कुप्यप्रमाणातिक्रमस्तु स्थालकचोलककरोटककुडि-

एषां वाऽतिचारताऽन्यभोगातिक्रमादिभिरवसेया। अत्र परिग्रहप्रमाणे आनंद-
कादीनां नियमादानादनुस्थूलतमानां विधानात् ५। तैर्यावान् परिग्रहः समभूद् व्रतादानसमये तावतैव तेन मनस्तोषं निर्माय नियम-
कामदेवप्रभृतयो दश श्रमणोपासका निदर्शनं यथा इच्छापरिणामे पेथडदेनामा मंत्री, दृष्टान्तो यथा, तेन लक्षत्रय नियमः सचित्वत्व-
समादानं निरमायि तथाऽन्यैरपि श्राद्धैर्विधेयम्। इत्युक्तं पंचममणुव्रतम्। ५।
पदावाप्तौ द्रव्यकोट्यागमेऽपि न खंडितस्तथा परैरपि श्राद्धैर्न खंडनीयः। तच्चोर्ध्वाधस्तिर्यग्दिग्विरतिभेदेन त्रिप्रकारं यथाशक्ति-
अथ गुणव्रतत्रयस्वरूपं किंचिदुच्यते। तत्र प्रथमं दिग्विरतिगुणव्रतम्। ऽधोदिक्प्रमाणातिक्रम २, तिर्यक्दिक्-
प्रतिपत्तव्यम्। अस्मिन्नपि व्रते पंचातिचाराः परिहार्य्याः। तत्रोर्ध्वदिक्प्रमाणातिक्रमा १, स च सर्वासु दिक्षु योजनशता-
प्रमाणातिक्रम ३, रूपास्त्रयोऽप्यतीचारा अनाभोगादिनाऽधिकगमने विज्ञेयाः। तुरीयस्तु क्षेत्रवृद्धिरूपः जिगमिषितायामाशायां वर्द्धयतः उभय-
दिना कृतप्रमाणस्यान्यतरस्यां दिशि योजनशतादेः परतः कार्येऽन्यदिशः कियत्यपि योजनानि पंचमस्तु स्मृत्यंतर्द्धानरूपः, स च कस्यां
दिग्मीलने तु योजनप्रमाणं नातिक्रामति एवमेकतो वर्द्धने एकतस्तु संक्षेपे क्षेत्रवृद्धिः स्यात्। अस्मिँश्च व्रते गृहीतेऽ-
दिशि कियत् प्रमाणं कृतमिति न स्मरति मूलं हि नियमानुष्ठानं तद्भ्रंशेहिं नियत एव नियमभ्रंश इत्यतिचारः। स च श्राद्ध-
भिगृहीतक्षेत्राद् बहिश्चराचरजंतूनां त्राणरूपो गुणः स्यादिति गुणव्रतम्। अस्मिन् व्रते शिवभूतिस्कंदाभिधभ्रातृद्वयदृष्टांतः।
प्रतिक्रमणसूत्रवृत्तेरवसेयः ६। इत्युक्तं षष्ठव्रतम्।
अथ सप्तममुपभोगपरिभोगप्रमाणं व्रतं व्याख्यायते। तत्रोपशब्दः सकृदर्थेऽतर्भोगे वा। अत उपभोग आहारादेः परिशब्द आवृत्तौ
पुनःपुनरित्यर्थे बहिर्भोगे वा। ततः परिभोगाऽगनाकनकवसनादेः। एतद्विषयं व्रतमुपभोगप्रमाणव्रतम्। तत्र भोजनत उत्सर्गेण श्रमणो-

इति । व्याख्याऽस्ति १६, किशलयपत्राणि सर्वाण्यप्युद्गच्छमानान्यंतर्मुहूर्तं यावत् १७, खरिंशुका १८, थेगौ कंदभेदौ १९, आर्द्रामुस्ता
२०, लवणेत्यपरपर्यायस्य भ्रमरनाम्नस्त्वग् नत्वन्येऽवयवाः २१, खिल्लुहडः कंदभेदः २२, अमृतवल्ली वल्लीभेदः २३, मूलकः
प्रसिद्धः २४, भूमिरुहाणि छत्रकाणि वर्षाकालभावीनि भूमीस्फोटकानीतिख्यातानि २५, विरूढान्यं-कुरितानि द्विदलादिधान्यानि २६,
टक्वास्तुलं शाकभेदः, स च प्रथमोद्गत एवाऽनंतकायिको न तु च्छिन्नप्ररूढः २७, शूकर-संज्ञो वल्लो न तु धान्यवल्लः २८, पल्लंकः
शाकभेदः २९, कोमलाम्लिकाऽबद्धास्थिका ३०, आलुक ३१ पिंडालुकौ कंदभेदौ ३२, एवमेतानि द्वात्रिंशदनंतकायिकानि सर्व-
प्रयत्नेन वर्जनीयानि । अन्यदपि वर्षाकालादौ पुष्पिकासंसक्तं शाकशुंठीहरीतकीप्रभृति त्याज्यमेव । उपिततक्रमपि पुष्पिकासंसक्तं वर्जनी-
यम् । अम्लिका न मंडनीया । एवं यत्र कुत्रापि पनकसंसक्तिर्जाता स्यात्तत्र व्यापार्यं नाप्यातपे मोचनीयं नापि हस्तादिनानाततः पुष्पिका
रुक्षणीया, किंबहुना संघट्टोऽपि त्याज्य एवानंततनुसंबंधी । अथाभक्षगाथा व्याख्या । तथाहि उदुंबर१वट२प्लक्ष३काकोदुंबर४पिप्पल५
रूपमुदुंबरपंचकम् । चतस्रो विकृतयो मद्य१मांस२नवनीत३मधु४लक्षणाः९ हिम१०, विष११, करकाः प्रतीताः१२, सर्वापि मृत्१३,
रात्रिभोजनं १४, चिअ-अवधारणे, बहुबीजं पंफुद्दफलादिवदंतररहितबीजाकुलं फलं १५, सर्वाण्यप्यनंतकायिकानि १६, संधानं च
बिल्वादिसत्कं जीव-संसक्तं १७, घोलवटकानि उपलक्षणत्वादेतेषामामगोरससंपृक्तद्विदलानि सर्वाण्यपि १८, वृंताकानि १९, अज्ञात-
नामानि पुष्पफलानि २०, तुच्छफलं मधूकबिल्वादिसकलमपि अत एवातिकोमलामुद्गादिफलिकाः श्राद्धैस्त्यज्यंते २१, चलितरसं सर्व-
मपि अत एव पर्युषितद्विदलपर्युषितपूपिकापर्युषितवटकादिद्विदलशाकदिनद्वयातीतदधितक्रदिनोपिततक्रादिराद्धौदनकेवलजलराद्धपर्युषिततक्रा-
द्यऽमिश्रितौदनक्वथितसकलधान्यजलयथाक्रमवर्षाशिशिरोष्णकालपक्षमासविंशतिदिनातिक्रांतसकलपक्वान्नप्रभृतिचलितरसं सत् सर्वं वर्ज-

नीयमेव भोजनस्वसदनस्थापनाद्याश्रित्यम् २२, एतेषुदुंबरपंचकं मशकाकारबहुजीवभृतत्वाद् वर्जनीयम्। चतस्रो विकृतयस्तु सद्यः संख्यातितजंतुसंमूर्छनाद् वर्जनीयाः। हिमकरकवर्जनमसङ्ख्येयशुद्धाप्कायपिण्डरूपत्वात्। विषवर्जनं तु जठरांतर्वर्तिकृमिगंडोलकादिजीववधहेतुत्वान्मरणसमये, मोहोत्पादकत्वाच्च। मृतिकाऽभक्षणं तु दुर्दुरादिपंचेन्द्रियप्राणिदेहावयववर्जनार्थं पटिकादिभक्षणहेतुकामाश्रयाद्यामयोत्पत्तिवारणार्थं च। रात्रिभोजनं तु—*संसज्जज्जीवसंघातं भुंजाना निशि भोजनम्। राक्षसेभ्यो विशिष्यते मूढात्मानः कथं न ते॥* इति प्रभुश्रीहेमाचार्यवचनाद् भक्तादिसंबद्ध्यमानबहुजीवविराधनाहेतुत्वाद् 'मेधां पिपीलिका हंति' इत्यादियोगशास्त्रोक्तैहिकबहुदोषसंभवाच्च। बहुबीजवर्जनं तु बह्वेकेंद्रियविराधनासंभवात्। अनंतकायत्यागस्त्वऽनंतजीवविराधनापरिहारार्थम्। संधानवर्जनं तु जीवसंसक्तिहेतुत्वात् घौलवटकाद्यामगोरससंपृक्तद्विदलपरिहारस्तु केवलिदृष्टसूक्ष्मजंतुसंसक्तिसंभवात्। वृंताकवर्जनं तु निद्राबाहुल्यमदनोद्दीपननिदानत्वात्। अज्ञातनामपुष्पफलपरिहरणं तु माभून्निषिद्धफलोपभोगाद् व्रतभंगो विषफलभक्षणाद् वा मरणमितिहेतोः। तुच्छफलत्यागस्तु बह्वी जीवविराधना स्वल्पा च तृप्तिरितिहेतोः। चलितरसपरिहारस्तु जंतुसंसक्तिहेतोः। तथा जंतुमिश्रं यत् फलं जंबूपीलुपक्वकरमदकप्रभृतिपुष्पं च करीरमधूकादिसंबंधिपत्रं च तंदुलीयादि तदपि न भक्षणीयमेव श्रावकैः। यदुक्तं श्रीयोगशास्त्रे—

*जंतुमिश्रं फलं पुष्पं, पत्रं चान्यदपि त्यजेद्। संधानमपि संसक्तं, जिनधर्मपरायणः॥१॥*

अनंतकायाभक्ष्यपरिहारस्तु परसमयेऽप्युक्तः। यदुक्तं पद्मपुराणे—

*मद्यमांसाशनं रात्रौ भोजनं कंदभक्षणम्। ये कुर्वंति वृथा तेषां, तीर्थयात्रा जपस्तपः॥१॥*

*वृथा एकादशी प्रोक्ता, वृथा जागरणं हरेः। वृथा च पौष्करी यात्रा, कृतं चंद्रायणं तपः॥२॥*

वरं भुक्तं पुत्रमांसं, न तु मूलकभक्षणम् । भक्षणान्नरकं गच्छेद् वर्जनात् स्वर्गमाप्नुयात् ॥३॥

भक्ष्यमाणं भवेन्नूनं, मांसतुल्यं युधिष्ठिर ॥४॥

गोरसं माषमध्ये तु, मुद्गादिषु तथैव च । मत्स्यमांसं सुरा चैव, मूलकस्तु विशेषतः ॥५॥

रसोनं गृजनं चैव, पलांडं पिंडमूलकम् । अंतकाले स मूढात्मा, न स्मरिष्यति मां प्रिये ॥६॥

यस्तु वृतांककालिंग-मूलकानां तु भक्षकः ।

मद्यमांसमधुनवनीतानि तु भारतेऽपि निषिद्धानि, तथाहि—

शुक्रशोणितसंभूतं, यो मांसं खादते नरः । जलेन कुरुते शौचं, हसंते तस्य देवताः ॥१॥

देवानामग्रतः कृत्वा, घोरं प्राणिवधं नरः । ये भक्षयंति मांसं तु, ते व्रजंत्यधमां गतिम् ॥२॥

क्व मद्यं क्व भवेद् भक्तिः, क्व मांसं क्व शिवार्चनम् । मद्यमांसानुरक्तानां, दूरे भवति शंकरः ॥३॥

अमेध्यं यदभक्ष्यत्वात्, मानुषैरपि वर्जितम् । दिव्योपभोगान् भुंजंते, मांसं त्रिदशा न भुंजते ॥४॥

न ग्राह्याणि न देयानि, षड् वस्तूनि पंडितैः । अग्निर्मधु विषं शस्त्रं, मद्यं मांसं तथैव च ॥५॥

पृथक्भावो यदा तक्रा-दाज्यं कार्यं हि तत्क्षणात् । विश्रांतं हि नवनीतं, ज्ञेयं कृमिसमूहवत् ॥६॥

मद्ये मांसे मधुनि च, नवनीते तक्रतो वहिर्नीते । उत्पद्यंतेऽनंता—स्तद्वर्णा जंतवस्तत्र ॥७॥

एवं लौकिकलोकोत्तरागमनिषिद्ध-पंचोदुंबरजंबूपीलुफलतंदुलीयादीनां तु प्रत्यक्षलक्ष्यजीवाकुलतया लोकप्रतीतमेवाभक्ष्यत्वम् । एवं सप्तम-तया परिहरणीयान्येव सर्वथा दुर्गतिभीरुभिः प्राणिभिरनंतकायाभक्ष्याणि विशेषतः श्रीमदार्हतमतवेदिभिर्मोक्षार्थिभिः श्राद्धवरैः।

व्रते श्रावकेण भोजनमाश्रित्य जघन्यतोऽप्यभक्ष्यानंतकायत्यागेन प्रत्येकमिश्रादीनां कृतमानेन भाव्यम् ।

कर्मतस्तूत्सर्गतो निरवद्यकर्मानुष्ठानयुक्तेन भाव्यम् । तथाऽनिर्वाहेत्वत्यंतसावद्यांगारकर्मादिपंचदशकर्मादानत्यागिना । अस्मिन् व्रते इयंति शाकानीति शाकसंख्या विधेया यावज्जीवविषया । एवं दंतधावनदारुविषया फलविषया धान्यविषया, कूपसरःसरिज्जलदादि-जलविषया स्नानपानादिपानीयप्रमाणविषया च संख्या कार्या । श्राद्धेनोत्सर्गतः सर्वसचित्तविरतिर्विधेया । तथाऽशक्तौ तु तत्संख्या कार्या द्रव्यसंख्या च कर्तव्या निंबत्वग्मूत्राद्यनाहारमपि द्रव्यगणनायां गणनीयम् । तथा विकृतिसंख्या कार्या । विकृतिष्वपि षड्विकृति-मध्ये एषा ग्राह्या एषा नेति व्यक्तो नियमः स्वीकार्यः । व्यक्तनियमादानेऽपि तद्भेदविषया व्यक्तिः कार्या । तद्भेदाश्चेमे तथाहि गो १, महिषु २ ऊष्ट्र ३ अजै ४ डेमानां ५ दुग्धमिति पंचधा दुग्धविकृतिः । दधिविकृतौ उष्ट्रीं विना चतुर्णां गोप्रभृतीनामिति चतुर्द्धा दधि च विकृतौ । तिल १ सर्षपा २ ऽतसी ३ लट्वि ४ संबंधि तैलमिति चतुर्भेदा तैलविकृतिः । द्रवरूपः १ पिंडरूपश्च गुड इति द्विधा गुडविकृतिः । तैल १ घृत २ तलितमिति द्विधा पक्वान्नम्, तत्रापि मोदकखाद्यादयो बहवो भेदास्तद्व्यक्तिर्विधेया । विकृतिगतान्यपि विकृति-संख्यायां कृतायां या विकृतिर्गृहीता तत्संबंधीनि ग्राह्याणि । अथवा तेषामपि संख्या कार्या । तानि च प्रतिविकृति पंच २ भवंतीति त्रिंशद्-विज्ञेयानि । तथाहि दुग्धे पंच पयःशाटीप्रभृतीनि । तत्र द्राक्षासहिते दुग्धे राद्धे पयःशाटी १, बहुतंदुलसहिता क्षैरेयी २, अल्प-तंदुलान्विता पेया ३, तंदुलचूर्णसहितदुग्धेन राद्धाऽवलेहिका ४, अम्लेनाऽन्विते दुग्धे दुग्धाटी, अन्ये त्वेतस्याः स्थाने खलाहिकां प्राहुः । घृते निर्भंजनादीनि पंच । तत्र निर्भंजनं पक्वान्नोत्तीर्णदग्धघृतमित्यर्थः १, विस्पंदनं दधितरिका कणिक्कानिष्पन्नो द्रव्य-विशेषः सपादलक्ष-प्रसिद्धः २, घृतपक्वौषधोपरितरिकारूपं पक्वाऽऽज्यम् ३, औषधैः सह पक्वं घृतमामलकघृतप्रभृति ४, किट्टिका घृतमलरूपा ५ । दध्नस्तु

करंबप्रभृतीनि पंच; तत्र करंबो दधियुक्तकूरनिष्पन्नः १, शिखरिणी हस्तमथितखंडयुतदधिनिष्पन्ना २, लवणयुतं दधि राजिकाखाटकमित्यर्थः ३, घोलो वस्त्रगलितं दधि ४, घोलवटकानि तप्तघोलांतः क्षिप्तवटकानि ५। तैलस्य तु तिलकुट्टिप्रमुखानि पंच। तत्र तिलकुट्टिः प्रतीता १, निर्भंजनं पक्वान्नोत्तीर्णं दग्धतैलं २, द्राक्षादिद्रव्यपक्वं च तैलं ३, तैलपक्वोपधोपरितरिका ४, तैलमालिका च ५। गुडे शर्कराप्रभृतीनि पंच। तत्र शर्करा १, गुडपानीये २, प्रतीते, पाक-गुडो येन खाद्यकादिलिप्यते ३, खंडः प्रतीतः ४, अर्द्धक्वथितेक्षुरसश्च ५। पक्वान्ने गुडधानिकाप्रभृतीनि पंच। तत्र गुडधानिका प्रतीता १, प्रक्षिप्त-घृतादिके तापके एकेनैव पूपकेन सकले पूरितेऽन्य-घृतादिप्रक्षेपं विना द्वितीय-पूपिकादिस्तत्र पक्वो निर्विकृतिकः २, त्रयाणां घाणकानामुपर्यपरघृतादिक्षेपं विना तेनैव घृतादिना पक्वं खाद्यकादि ३, तथा समुत्सारिते सुकुमारिकादिके पश्चादुद्धरित-घृतादिलिप्तायां तापिकायां जलेन राद्धा लपनश्रीः लहिंगडु इत्यर्थः ४, स्नेहलिप्ततापिकोपरिपोतेन कृतः पूपकश्च। निर्विकृतिकेऽपि कृते विकृतिगतानि निर्विकृतिकमोदकनालिकेरैरंडादितैलाचित्तीकृतादिफलप्रभृतीन्युत्कृष्टद्रव्याणि च न ग्राह्याणि विशेपकारणं विना १, कारणे तु तेपामपि संख्या कार्या। तथोपानद्युगसंख्या च कार्या। तथा पूगलवंगैलाजातिफलकक्कोलकर्पूरे पत्रादितंबोलानां गणना विधेया। अथवा टंकादिप्रमाणं विधेयम्। मुख्यवृत्त्या च पत्रास्वादने नियम एव युक्तः श्रमणोपासकानां सर्वदापि, सर्वथा च तथा कर्तुमशक्तौ निशि तदाऽऽस्वादने नियमो ग्राह्य एव, यतः पत्रेपु पुष्पिका कुंथवश्च संभवंति तद्यतना दिनेऽपि कर्तुं दुष्करा किं पुनर्यामिन्याम्। तथा नेपथ्यगणना विधेया। तथा मुख्यवृत्त्या भोगार्थे कुसुमिनियम एव ग्राह्यः, तथाऽशक्तौ तु तेपामपि संख्या कार्या। तथावाहनसंख्या विधेया; शयनसंख्या च। तथा तिलकवर्जं विलेपनविपयो नियम एव स्वीकार्यः। तथाविगालुमशक्तौ तु मासमध्ये एकं द्वे वेत्यादिका गणना कार्या। तथा शक्त्यनुमानेन ब्रह्मव्रतपालने नियमः स्वीकार्यो दिन-प्रदमा-

सादिसंबंधी वनितायाः परिभोगागत्वात् । तथा यथाशक्ति स्नाननियमः करणीयः । तथा भक्ते स्नेहे च सेराद्धसेरादिरूपं प्रमाणं करणीयं श्रमणोपासकैः, श्राद्धीभिरप्येते सर्वे नियमाः स्वीकार्याः । विशेषः पुनरेष यात्कण्डनादिकरण-शोणीकरणसिंदूरसीमंतकरणपुष्पिंजरीकर-करणपत्र-भंगीरचन दलन-खंडन-चुल्लीमधुक्षण जलानयनलिंपनमर्दनधरत्वानिधानशाकभेदनरंधनपोषणाहननादिक्रिया यथाशक्ति नियमाः स्वीकर्तव्याः । अस्मिन् व्रते भोजनतः पंचातिचाराः परिहरणीयाः, कर्मतस्तु पंचदश, एवं विंशतिरतीचाराः परिहार्या अस्मिन् व्रते । तत्र भोजनतः सचित्ताहार १, सचित्तप्रतिबद्धाहारा २, पक्वौषधिभक्षणता ३, दुष्पक्वौषधिभक्षणता ४, तुच्छौषधिभक्षणता ५ रूपाः पंच । तत्र कृतसचित्तप्रत्याख्यानस्य कृततन्मानस्य वा नाभोगादिना सचित्तमतिरिक्तं वा तद्गृह्णतः सचित्ताहारोऽतीचारः १ । पादपस्थं गुंदादि पक्वफलादि वा सास्थिकं मुखे प्रक्षिपतः सचित्तप्रतिबद्धाहारः २ । अपक्वस्याग्निनाऽसंस्कृतस्यापरिणत कणिक्कादेर्वा भक्षणे पक्वौषधिभक्षणता ३ । दुष्पक्वं पृथुकादि भक्षयतो दुष्पक्वौषधि-भक्षणता ४ । तुच्छास्तृप्तिहेतुत्वाभावादसारा ओषधयः कोमलमुद्गशिम्बाप्रभृतयस्तद्भक्षणता, एतद्भक्षणे हि तुच्छा तृप्तिर्महती च विराधना ५ । एवं भोजनतः पंचातिचाराः प्रयत्नेन परित्याज्याः श्राद्धैः । कर्मतस्त्वंगारकर्मप्रभृतयः पंचदश । तत्रांगारपातनक्रयकरणभ्राष्ट्रकरण-कुंभकारस्वर्णकारलोहकारवाणिज्यकरणसुधेष्टिकादिपाककरणकारापणप्रभृतिप्रभूतहुतवहारंभहेतुकमंगारकर्म एवाजीविकाहेतोः, अत एव सत्त्वंगकारणमपि त्याज्यम् १ । द्वितीयं छिन्नाछिन्नवनपत्रपुष्पफलविक्रयं क्षेत्रवाटिकाविधानकणदलनादिप्रभूतवनस्पतिविराधनानिदानं वनकर्म वर्जनीयमेवाऽऽजीविकाकृते २ । तृतीयं शकटतदंगघटनविक्रय-करणादिरूपं शकटकर्म त्याज्यमेवाऽऽजीवनकृते ३ । तुर्यं शकटवृषभकरभगर्दभवेसरादिभिर्भाटकेन भारवाहनरूपं भाटककर्म वर्जयेत्सुश्रावको वृत्तिकृते ४ । पंचमं तडागकूपादिखननशिलाकुट्टनकर्मप्रभृति पृथिव्यारंभहेतुभूतं वर्जयेत् स्फोटकर्म धर्ममर्मवेत्ता

अत एवाकराल्लवणकर्पणाद्यपि वर्जनीयम् ५। दंतनखास्थिरोमचमरचर्मप्रभृतित्रसांगस्याऽऽकरे यद् वाणिज्यार्थं ग्रहणं तद्दंतवाणिज्य-मुच्यते, षष्ठं तत्त्याज्यम् ६। सप्तमं तु लाक्षामनःशिलाधातकीटंकणसौराष्ट्रिकादिवाणिज्यरूपं लाक्षावाणिज्यं वर्जयेदेव श्रावकः ७। अष्टमं तु नवनीत-वसामधुमद्यादिवाणिज्यरूपं रसवाणिज्यं त्यजेद्धर्मार्थी, घृततैलमदनादिवाणिज्यमपि रसवाणिज्यांतर्गतत्वाद् वर्जनीयं यतस्तत्रापि महती जंतुजातविराधना ८। नवमं तु द्विपदचतुष्पदविक्रयरूपं केशवाणिज्यं त्याज्यमेव विदुषा ९। दशमं तु विषाहिफेन-हरितालहलमुशलोदूखललोहयंत्रशस्त्रादिवाणिज्यं जीववधहेतुभूततया विषवाणिज्यमुच्यते, तद्वर्जयेत्सुश्राद्धः १०। एकादशं तु तिलाल-सीसर्षपैरंडादिपीलनादिरूपं यंत्रपीलनकर्म न कार्यं सर्वदापि श्रावकेण ११। द्वादशं नासिकावेध-मुष्कच्छेदांकनपृष्ठिगालनगोकर्णकंबल-च्छेदरूपं निर्लांछनकर्म न कुर्यात् सुकृतार्थी १२। त्रयोदशं तु व्यसनात् पुण्यबुद्ध्या वा दवदानं न कार्यमेव श्रेयोर्थिनः १३। चतुर्दशं तु तटाकतटिनीतटादिस्फोटनकूपवापीगालनगरशोषादिरूपं कर्मादानं न कार्यमेव सर्वथा १४, पंचदशं तु मार्जारशुकसारिकासारमेय-मयूरकुक्कुटादि-पोषणद्रविणहेतुकदासीपोषणप्रभृत्यसतीपोषणं न करणीयमेव विवेकिना १५। एवं कर्मतः पंचदशकर्मादानानि न कुर्यात् कदापि सुकृतार्थी श्राद्धवरः। दिग्मात्रदर्शनं चैतद् बहुसावद्यकर्मणामेवंजातीयानां पुनः परिगणनमत एव विवेकवान् शुल्कतलारक्षकारा-गारप्रभृति-नृपाधिकारस्वीकारादिकं बहुसावद्यहेतुभूतं कर्म विवर्जयेत्। अत्र भोगतः कर्मतश्च पितृपुत्रौ मेघसुप्रभाभिधौ ज्ञातम्। इत्युक्तं सप्तमं व्रतम् ॥७॥

अथ चाऽष्टममनर्थदंड-विरमणव्रतमुच्यते। तथाहि अर्थः प्रयोजनं क्षेत्रवास्तुधनधान्यवपुःपरिजनादिविषयं तदर्थं आरंभो भूतो-पमर्दोऽर्थदंडस्तद्विपरीतोऽनर्थदंडस्तस्माद् विरमणम्। सचाऽनर्थदंडोऽपध्यानाचरित १ प्रमादाचरित २ हिंस्रप्रदान ३ पापकर्मोप-

देश ४ भेदाश्चतुर्धा । तत्र रिपुवधपुरघातवह्निदीपनचिंतनविद्याधरनरपतिपदवीवांछाप्रभृतिकं रौद्रार्तध्यानविधानरूपमपध्यानाचरितं वर्जयेत् सर्वदाऽनर्थदंडभीरुः १ । द्वितीयं मद्य १ विषयपंचक २ कषायचतुष्टय ३ निद्रापंचक ४ विकथाचतुष्करूप ५ पंचमकारप्रमादासेवनरूपं प्रमादाचरितं परिहरेदनर्थदंडरूपम् । अत एव कुतुकतो गीतसमाकर्णनं नृत्यावलोकनं कामशास्त्रप्रसंगं चतुरशीतिरामासनशिक्षणं द्यूतदेवनं सुरापानमांदोलनं जलखेलनं कुर्कुटादिजीवयोधनमरातिसुतादिना वैरविधानं चतुर्विधविकथाकरणं कुत्रापातनमध्ययनश्रमाऽऽमयौ विमुच्य निखिलनिशाशयनं भोधाविशयादन्योन्यमजल्पनमंगुलीमोटनं शापदानं यत्तजल्पनं शटकास्फोटनं यत्र तत्र शूनीमोचनं मार्यमाणस्तेनावलोकनं सत्यग्निप्रवेशवीक्षणमिंद्रजालालोकनं सचित्तोपर्युपवेशनं निरर्थकं षट्कायसंघट्टागाढपरितापोपद्रवान् पुष्पशय्याशयनं कुसुमशेखरविरचनमेवमादिकं प्रमादाचरितं परित्यजंत्येवानर्थदंडभीरवः श्राद्धाः श्राद्ध्यः २ । तृतीयं पंचायुधधनंजयहलमुशल-गरलोदूखलकरालकुशीकशांकुशवनरमंत्रयंत्रौषधीप्रभृतिजीवहिंसानं नैवाऽर्पयेद्दाक्षिण्याविषयेऽनर्थदंडवर्जी ३ । तुरीयं तु हयान् पंढय, दमय सौरभेयान्, देहि दवं क्षेत्रे, वाहय कुल्यां शस्येषु, याहि धनार्जनहेतवे देशांतरमेवमादिकपापकर्मोपदेशं नोपदिशेदनर्थदंडपरिहर्ता ४ । अस्मिंश्च व्रते कंदर्प १ कौत्कुच्य २ मौखर्य ३ संयुक्ताधिकरणता ४ उपभोगपरिभोगातिरिक्ततारूपाः ५ पंचातिचाराः प्रयत्नतः परिहार्याः । तत्र कंदर्पो रागोद्रेकात् मोहोद्दीपकं हास्यम् १ । कौत्कुच्यमनेकप्रकारा वदननयनविकारपूर्विका परिहासादिजनिका भंडादीनामिव नानाविधा कुचेष्टा २ । मौखर्यमसंबद्धं यत्तद्वचनप्रलापित्वम् ३ । अधिक्रियते नरकादिष्वात्माऽनेनेत्यधिकरणम्, तच्च मुशलोदूखलप्रभृतिकम्, तच्च संयुक्तमर्थक्रियाक्षमम्, संयुक्तं च तदऽधिकरणं च तद्भावः संयुक्ताधिकरणता विवेकिभिस्तु चक्रोदूखल-मुशलशिलाशिलापुत्रकादिसंयुक्तं न धार्यमेवानर्थभीरुभिः, अत एव गंत्र्यादिपि संयुक्तं न धार्यमेव ४ । उपभोगपरिभोगातिरिक्तता तूपभोगपरिभोग-

तथाहि— 'जो सो इड्ढिपत्तो सन्निड्ढिए' इत्यादि । 'आयरिया-उट्ठिया य इच्छंति तत्थ उट्ठिंतमणुट्ठिंते दोसा विभासिअव्वा पच्छा सो इड्ढिपत्तो सामाइअं करेइ अणेण विहिणा करेमि भंते सामाइअं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जावनियमं पज्जुवासामि' इत्यादि । जावनियमं पज्जुवासामीतिपदव्याख्या जावत्ति कालावधौ, नियमं सावद्ययोगप्रत्याख्यानरूपं, पर्युपासामि सेवयामि, यद्यपि नियममिति सामान्यवचनमेतत् तथापि जघन्यतो घटिकाद्वयं स्थेयमेवान्यथाऽनवस्थितकरणरूपः पंचमातिचारः स्यात् । यदुक्तं प्रतिक्रमणसूत्रचूर्णौ 'जइ सामन्नवयणमेअं तहा वि जहन्नओ वि अंतमुहुत्तं निअमे ठायव्वंति परओ वि समाहीओ चिट्ठओत्ति ।' एतच्च सामायिकं यदा कदाचिन्निर्व्यापारस्तिष्ठति श्राद्धस्तदाऽवश्यं करोति । यतः सामायिके कृते श्रमणोपासकः साधुवत् कथ्यते । यदुक्तं श्री आवश्यकनिर्युक्तौ—

सामाइअम्मि उ कए, समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइअं कुज्जा ॥१॥

आवश्यकचूर्णावपि प्रोक्तं—सामाइअं नाम सावज्जजोग-परिवज्जणं निरवज्जजोगपडिसेवणं च तं सावएण कहं कायव्वं सो दुविहो इड्ढिपत्तो अणिड्ढिपत्तो अ जो सो अणिड्ढिपत्तो सो चेइअघरे वा साहुसमीवे वा घरे वा पोसहसालाए वा जत्थ वीसमइ अत्थइ वा निव्वावारो सव्वत्थ करेइ । तथा जदि वारं अच्छति तो करेति अहवा सव्वं वावारं काऊण जहि खणिओ तहिं सामाइअं कारइ तो से न भज्जइत्ति । अतो हेतोर्यदाचिन्निर्व्यापारतया तिष्ठति श्रमणोपासकस्तदा सर्वदा सर्वत्र सामायिकं विधत्ते । यतो गृहस्थधर्मस्य सारं सामायिकमेव । यतस्तस्मिन् कृते षड्जीवनिकायदया सम्यक्पालिता भवेत् । सत्यामपि वेलायां चेत् प्रमादपरतंत्रया सामायिकं न करोति तदा स नूनमलसशिरःशेखरो वंच्यत एव श्राद्धधर्मसारभूतस्वर्गापवर्गैकहेतुतल्लाभतः । अतो हेतोः क्षणे क्षणे तद् विधेयम्,

उभयसंध्यं तु चैत्यगृहादनिशुःस्थानमध्यादन्यतरस्थाने नियमात् विधेयम्। यदुक्तं श्रीआवश्यकचूर्णौ—'जउ ठाणेसु णिअमा कायव्वं तं जहा चेइयघरे साहुमूले घरे वा पोसहसालाए वा आवस्सगं करितोत्ति। तस्मादुभयसंध्यमवश्यमेव तत् कार्यम्। अन्यदा तु क्षणे क्षणे उक्तं च आवश्यकचूर्णौ—*जीवो पमायबहुलो, बहुसो वि अ बहुविहेसु अत्थेसु। एएण कारणेणं, बहुसो सामाइअं कुज्जा ॥१॥* बहुसो अणेगसो बहुविहेसु अत्थेसु रागदोसादीहिं अप्पाणं भाविज्जइ तेण पमत्तो सामाइअं करितो अपमत्तो भवतित्ति।' अस्मिंश्च नवमव्रते मनोदुष्प्रणिधान प्रभृतयः पंचातिचाराः प्रयत्नतः परिहरणीयाः। तत्र प्रथमो मनोदुष्प्रणिधानाख्योऽतीचारः, स चार्त्तरौद्रध्याने विधानतो मनोदुष्प्रयुक्तस्वरूपः १। एवं द्वितीयो वाग्दुष्प्रणिधानरूपो वाचा सावद्यकर्कशोक्तिरूपः २। तृतीयस्तु कायदुष्प्रणिधानस्वरूपः स चाप्रत्युपेक्षिताप्रमार्जितस्थंडिलादावूर्द्धस्थाननिषीदनाऽवष्टंभग्रहणादिरूपः ३। तुरीयस्तु सामायिकस्य स्मृत्यकरणतारूपः, अयं भावो निद्रा-वणापादिप्रमादपरायणतया यथैवं स्मरत्यस्यां वेलायां मया सामायिकं कर्त्तव्यं तत् किं कृतमुत नेति ४। पंचमस्तु सामायिकस्यानवस्थितस्य करणं अनवस्थितस्याल्पकालीनस्यानियतस्य वा सामायिकस्य करणमल्पकालकरणानंतरमेव त्यजति यथा कथंचिदनादृततया वा विधत्ते इति भावः ५। उक्तं च श्रीआवश्यकवृत्तौ—

*काऊण तक्खणं चिअ, पारेइ करेइ वा जहिच्छाए, अणवट्ठिअ-सामाइअं, अणायराओ न तं सुद्धं ॥१॥*

एवमतीचाराः पंचापि सामायिकव्रते प्रयत्नेन परिहार्याः। अत्राह विनेयः ननु सामायिकांगीकारावसरे सावद्य-योगं द्विविधेन प्रत्याख्याति श्रमणोपासकः, एवं च प्रत्याख्याने कृते मनसो दुर्निरोधत्वाद्दुष्प्रणिधानसंभवे सामायिकाभाव एव भवेत्, प्रत्याख्याने भंगजं च प्रायश्चित्तं स्यात्तस्मात्तदंगीकारादनंगीकार एव श्रेयान्। नैवं यतः सामायिके मनसा सावद्यं करोमि न कारयामि एवं वचसा

योराधिक्यं तच्च न विधेयं, यतस्तस्मिन् विधीयमाने उद्धरिततैलामलकोष्णजलादिस्नानादिसामग्र्याऽन्येऽपि स्नानादौ प्रवर्त्तंते । एवमेते
पंचाप्यतीचाराः परिहार्यास्तृतीयगुणव्रते । अस्मिँश्च गुणव्रते चित्रगुप्तनिदर्शनम् । इत्युक्तमष्टमव्रतम् ॥८॥

अथ नवमं सामायिकव्रतं विव्रियते । तथाहि सामायिकं नाम नियतकालावधिसावद्ययोगपरिवर्जनं स्वाध्यायध्यानादिनिरवद्य-योगप्रतिसेवनं च । अत्राह विनेयः सामायिकस्य सावद्ययोगवर्जननिरवद्ययोगासेवनरूपत्वे कृतसामायिकः श्रमणोपासकः परमार्थतः साधुरेव, ततः कुतो हेतोः सर्वसावद्ययोगप्रत्याख्यानमेव स न विधत्ते नियतकालावधि त्रिविधं त्रिविधेनेति । उच्यते, सर्वसावद्ययोग-प्रत्याख्यानस्य श्राद्धेऽसंभवः, आरंभेष्वनुमतेरव्यवच्छिन्नत्वादाधनकनकादिषु चात्मीयाग्रहानिवृत्तेः । साधुश्राद्धयोश्च प्रपंचेन सूत्रे भेदा-भिधानात् । तथा चोक्तं श्रीआवश्यकनिर्युक्तौ भद्रबाहुस्वामिपादैः—

*सिक्खा दुविहा गाहा, उववायठिईगईकसाया य । बंधंतावेयंता-पडिवज्जाइक्कमे पंच ॥१॥*

व्याख्या शिक्षाकृतः साधुश्राद्धयोर्महान् भेदः । सा च शिक्षा द्विविधा आसेवन-शिक्षा ग्रहण-शिक्षा च । तत्रासेवना शिक्षा सामाचारीशिक्षणम्, तां चाऽधिकृत्य संपूर्णामेव चक्रसमाचारीं सदा समाराधयति । श्रावकस्तु कल्पकालं न तत्कालमपि संपूर्णाम-परिज्ञानादसंभवाच्च । ग्रहण-शिक्षा तु सूत्रार्थग्रहणं तां चाधिकृत्य साधुर्जघन्यतोप्यऽष्टप्रवचनमातृपादकं सूत्रं सार्थकं गृह्णाति; उत्कर्षतस्तु त्रिंदुसाराख्यचतुर्दशपूर्वपर्यंतम् । श्राद्धस्तु देश-विरतो जघन्यतस्तत्सूत्रं सार्थकम्, उत्कर्षतस्तु षड्जीवनिकां यावत् सूत्रार्थाभ्याम् । अर्थतस्तु पिंडैषणाध्ययनं यावत् । तथा गाथा, सूत्रगाथा तया च विशेषस्तथाहि—

*सामाइअम्मि उ कए समणो इव सावओ हवई जम्हा ।*

सामायिके कृते श्रमण इव श्रावकः स्यात्। यस्मात् श्रमण इव श्राद्धः प्रोक्तः सामायिके कृते न तु श्रमण एव। यथा समुद्रवत्सरो न तु समुद्रः। तथौपपातकृतो विशेषः, साधुः सर्वार्थसिद्धौ श्राद्धस्तूत्कर्षतोऽप्यच्युते, जघन्यतस्तु द्वावपि सौधर्मे। स्थितिकृतो विशेषस्तथाहि, यतेरुत्कृष्टा त्रयस्त्रिंशत् सागरोपमानि स्थितिर्जघन्या तु पल्योपमपृथक्त्व-मिता। श्राद्धस्य तूत्कृष्टा द्वाविंशत्यतराणि जघन्या तु पल्योपमम्। तथा गतिविहितो विशेषः। साधुः सुरगतौ सिद्धिगतौ च श्राद्धस्त्वविरतिश्चतसृष्वपि गतिषु। तथा कषायकृतो विशेषः, साधुः कषायोदयमाश्रित्य संज्वलनकषायापेक्षया चतुस्त्रिद्व्येककषायोदयी क्षीणकषायो वा स्यात् क्षीणमोहादिगुणस्थानवर्ती श्राद्धस्तु द्वादशकषायोदयवानविरतः अष्टकषायोदयवांश्च विरताविरतः। बंधेऽपि भेदः, साधुर्मूलप्रकृत्यपेक्षयाऽष्टविधकर्मबंधकः, सप्तविधकर्मबंधको वा, षड्विधकर्मबंधको वा, एकविधतद्बंधको वाऽबंधको वा भवेत्। श्राद्धस्तु वसु(८)विधकर्मबंधकः सप्तविधतद्बंधको वा स्यात्। तथा वेदनाविहितो विशेषः, साधुरष्टानां सप्तानां चतसृणां वा प्रकृतीनां वेदकः, श्राद्धस्तु नियमादष्टप्रकृतीनाम्। तथा प्रतिपत्तिकृतो विशेषः, साधुः पंचमहाव्रतानि प्रतिपद्यते श्राद्धस्त्वेकमणुव्रतं द्वे वेत्यादि। अथ वा साधुरेकवारमेव सामायिकं प्रतिपद्य यावज्जीवं धारयति, श्राद्धस्तु तत् पुनः पुनः प्रतिपद्यते। तथाऽतिक्रमकृतो विशेषः, साधुरेकव्रतातिक्रमे पंचव्रतातिक्रमः श्राद्धस्य पुनरेकस्यैव। एवं साधुश्राद्धयोर्महांतरसंभवेन श्राद्धः सामायिकप्रतिपत्तिसमये सर्वशब्दं न प्रयुंक्ते मा भूद्देशविरतेरप्यभावः। यदुक्तं—

*सव्वंति भाणिऊण, विरई खलु जस्स सव्विआ नत्थि। सो सव्वविरइवाई, चुक्कइ देसं च सव्वं च ॥१॥*

सर्वा निरवशेषा नास्त्यनुमतेर्नित्यं प्रवृत्तेः। अथ सामायिकसूत्रं— *'करेमि भंते! सामाइअं, सावज्जं जोगं पच्चक्खामि, जावनियमं पज्जुवासामि, दुविहं तिविहेण'*मित्यादि। इदमित्थमेव च सूत्रं मूलावश्यकवृत्तौ ऋद्धिप्राप्तस्य सामायिकग्रहणाधिकारे प्रोक्तमस्ति।

कायेन चेति षट् प्रत्याख्यानानि तत्रानाभोगादिनैकतरभंगेऽपिशेषसद्भावान्न सर्वथा सामायिकाभावः । जातु मनोदुष्प्रणिधाने च मिथ्यादुष्कृतपुरस्सरं निंदागर्हादिभिः शुद्धेर्भणनात् । तस्मात्तदंगीकारादनंगीकार एव श्रेयानिति न वाच्यम् । यद्वाऽविधिकृताद् वरमकृतमिति कैश्चिदुच्यते तदपि न यौक्तिकम् । यतः—

*अविहिकया वरमकयं असुयवयणं वयंति सव्वन्नू । पायच्छित्तं जम्हा, अकए गुरुअं कए लहुअं ॥१॥*

तस्माज्जातु मनोदुष्प्रणिधानेऽपि न सर्वथा सामायिकाभावः किंतु कृतसामायिकेन सर्वोद्यमेन मनोरोधे यतितव्यं श्राद्धेन । यतः

*सामाइअं पि काउं, गिहकज्जं जो उ चिंतए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामइअं ॥१॥*

तथा—*निंदपसंसासु समो, समो अ माणावमाणकारीसु । समसयणपरिअणमणो, सामाइअसंगओ जीवो ॥२॥*

तस्मात् सामायिकं विधाय सर्वप्रयत्नेन यतनीयं मनोरोधविषये श्राद्धेन । जातु मनोदुष्प्रणिधाने च मिथ्यादुष्कृतपुरस्सरं तन्निंदागर्हादि विधेयम् । अत्र च व्रते चंद्रावतंसकनिदर्शनम् । सद्युपोषितः सन्निशि कृतसामायिकस्तस्थौ तनूत्सर्गेण, यावद्दीपो न विधास्यति तावत् कायोत्सर्गे स्थातव्यमिति विहित-प्रतिज्ञः । दास्या तु निखिलनिशां यावदन्यान्यतैलप्रक्षेपेण प्रज्वालितो दीपः कथमऽस्मत्स्वामी तमसि स्थास्यतीत्यभिप्रायेण । स च बाढं देहे पीडितोऽपि मनागदास्यु-पर्यक्रुद्धमना स्वतनुसौकुमार्या-दुपक्रांतायुष्को धर्मध्यानादचलितस्वांतो गतो देवलोकम् । यथाऽनेन सामायिकं व्रतं सम्यक्-पालितं तथाऽपरैरपि श्राद्धपुंगवैः सम्यक् पालनीयम् । इह त्वतिचार-पंचके आद्यत्रयस्याना-भोगादिनाऽतिचारत्वमितरद्वयस्य तु प्रमादबहुलतया । एतेषु मनोदुष्प्रणिधानवर्जनकृते मनो-गुप्तौ सर्वोद्यमेन यतितव्यम् । वाग्दुष्प्रणिधानत्यजनहेतवे तु वचनगुप्तौ भाषासमितौ च प्रयत्नो विधेयः । कायदुष्प्रणिधानपरिहारकृते त्वी-

र्येषणादाननिक्षेपणपारिष्ठापनिकारूपाश्चतस्रो समितयः कायगुप्तिश्च सम्यक् पालनीयाः। यत ईर्यासमितिं विनाऽनुपयुक्तगमने हि षड्जीवनिकायविराधना स्यात्तेन कृतसामायिकेन श्राद्धेन वसतौ चक्षुःप्रेक्षणप्रमार्जनपूर्वमेव सर्वदा पदमात्रमपि गंतव्यम्, बहिस्तु सम्यग्-युगमात्रमहीप्रदेश शोधनपूर्वमेव। एवं श्राद्धेऽपि कृते सामायिके एषणा-समितिस्त्वेषणाशुद्धाशनादि-समादानरूपा, तदुपयोगस्तु प्रायो मुहूर्त्तमाने सामायिके न संभवति परं यदा पौषधं विधत्ते तदाऽहोरात्र विषये दिवस-विषये वा सामायिके कृते यश्चतुर्विधाहारपरिहारं कर्तुं न शक्नोति तस्योपवासे निहिते वारिविषयाऽत्यंताशक्तस्य त्वेकाशनादिके कृते चतुर्विधाहारविषयाप्येषणा सम्यगाराधिता विलोक्यते। तस्मात्तत्रैषणासमितेरप्युपयोगः। ननु कृतसामायिकः कथमाहारग्रहणं विधत्ते पौषधव्रती, उच्यते सूत्रप्रामाण्यात् यदुक्तं निशीथ-भाष्ये पंचदशोद्देशे साधुना गृहस्थानामन्यतीर्थिकानां वाऽशनादि न देयमित्यधिकारे, तथाहि—

जे भिक्खू असणादी दिज्जा गिहिअहवअन्नतित्थीणं। सो आणाअणवत्थं, मिच्छत्त विराहणं पावे ॥१॥

जुत्तमदाणमसीले, कडसामइओ उ होइ समण इव। तस्समजुत्तमदाणं, चोअग सुण कारणं तत्थ ॥२॥

कामी सघरंगणओ, थूलपइन्नासि होइ दट्ठव्वा। छेअणभेअणकरणे, उद्दिट्ठकडंपि सो भुंजे ॥३॥

तृतीयगाथाचूर्णिरेवं—'पंचविषया कामे इत्ति कामी, सह गृहेण सगृह', अंगना स्त्रीसहांगनया सांगनः, थूलपइन्ना देशविरतित्ति वुत्तं भवति, साहूण सव्व-विरई, वृक्षादिच्छेदन पृथिव्यादिभेदने च प्रवृत्त', सामायिकादऽन्यत्र अंतुद्दिट्ठकडं तं कडसामइओ वि भुंजइ, एवं सो सव्वविरतो न भवति, एतेण कारणेण तस्स न कप्पंति दाउं, एवं कृत-सामायिकोऽप्युद्दिष्टकृतं भुंक्ते,' इत्युक्तं तच्च द्विघटिकाप्रमाणे सामायिके घटते, तस्मादनुमीयते यो न शक्तः स्थातुमाहारं विना स पौषधव्रती कृतसामायिकोऽपि भुंक्ते। यदा च भुंक्ते तदा-

पट्कायाप्रतिष्ठितं तत्संघट्टादिविरहितं प्रागनिष्पन्नमद्रुतमविलंबितं परिशाटिरहितं विगतांगारधूमप्रमाणातिक्रमसंयोजनादिदोषं सरसरं-चवचवेत्यादिशब्दोत्पाद-विवर्जितमेवमेषणा-समिति-पालन-प्रयत्नवानप्रमत्ततया भुंजीत यतिवत्; श्रमणोपासिका वा । आदाननिक्षेपा-समितिस्तुपीठफलकादि यत् किंचिद् वस्तु समादत्ते निक्षिपति वा तत्र चक्षुःप्रेक्षणप्रमार्जनविधिकरणेन सर्वोपधेश्च विधिवत् प्रतिलेखन-प्रस्फोटन-प्रमार्जनविधानेन च समाराधिता स्यात्। अनापातासंलोकादि-प्रागुक्तदशपदविशिष्टस्थंडिले चक्षुरीक्षणप्रमार्जनपूर्वमेवोच्चारप्रश्रव-णादिपरिष्ठापनं कुर्वता पंचसमितिः सम्यक् पालिता भवेत्। कायगुप्तिस्तु पंचेंद्रियसंवरणेन निरर्थकं शरीराचालनेन कार्ये तु विलोकनप्रमार्जन-पूर्वमेव करचरणाद्यंगचालनेन पालिता भवेत्। एवं मनोदुष्प्रणिधानत्यागकृते मनोगुप्तेर्वागदुष्प्रणिधानापोहाय भाषासमितिवाग्गुप्त्योः, कायदुष्प्रणिधानवर्जनकृते त्वीर्येषणादाननिक्षेप-पारिष्ठापनिकासमितीनां कायगुप्तेश्चैवं पंच-समितीनां गुप्तित्रिकस्य परिपालनं विधेयं सामा-यिके कृते श्राद्धेन श्राध्या वा। एवमग्रे पौषधेऽपि वाच्यं यतस्तत्रापि सामायिकोच्चारः स्यात्। एवं सामायिके पौषधे च श्रावकेण श्रावि-कया वा वसु(८)मित-प्रवचनमातृसमाराधने साधुवत् सर्वप्रयत्नेन यतनीयम्। अन्यदापि स्वशक्त्यनुमानेन, इत्युक्तं नवमव्रतम् ॥९॥

अथ दशमदेशावकाशिकव्रतस्वरूपं किंचिदुच्यते। तथाहि दिग्व्रत-गृहीतदिग्परिमाणस्यैकदेशो देशस्तस्मिन्नवकाशो गमनादि-चेष्टा स्थान-देशावकाशस्तेन निर्वृत्तं देशावकाशिकं योजनशतादिना यावज्जीवं कृतदिग्व्रतप्रमाणस्य गृहग्रामादेः परतो गतिनिषेधरूपम् अणुव्रतादिकृतप्रमाणं संक्षेपरूपं वा। यथा केनचित् प्रधानमंत्रवादिनाऽऽदौ द्वादशयोजनमितक्षेत्रव्यापकं विषमतमदृग्विषाहिदृग्विषमप-सारयता पश्चादीपत्क्षेत्रे स्थापिते, यद् वा सर्ववपुर्गतविषमंगुल्येकदेशे स्थापितमेवमिहापि मुहूर्त्त-प्रहरदिनादिकालावधिनाऽरमेकदेशेऽव-स्थानाद्देशावकाशिकमुच्यते। यदुक्तं—

एगमुहुत्तं दिवसं, राई पंचाहमेव पक्खं वा । वयमिह धारेउ दढं, जावइअं उच्छहे कालं ॥१॥

अणुव्रतादिकृतप्रमाणसंक्षेपरूपं चेति यदुक्तं तद्भावना विधीयते; तथाहि तत्र प्रथमाणुव्रते श्रावकेण संकल्पतस्त्रसवधे निरर्थकं स्थावरवधे च नियम इति प्रमाणं कृतं तत्संक्षेपश्चैवं यदा कदाचिच्चित्तोत्साहः स्यात्तदा मुहूर्तं तद्द्वयं प्रहरादि यावत् कायवधमपि न विधास्ये । संकल्पादारंभतः संकल्पारंभाभ्यां वेति नियमं विधत्ते श्राद्धः, षट्कायरक्षाऽशक्तौ तु पंचानां चतुर्णां त्रयाणां द्वयोरेकस्य वा कायस्य वधे नियमं करोति मुहूर्ताद्यवधि श्राद्धः । द्वितीयव्रते तु पंचस्थूलालीकानि प्रत्याख्यातानि, सूक्ष्मेषु तेषु यतना प्रतिपन्ना । अत्र तु मुहूर्तयामदिनाद्यवधि सर्वमृषावादं प्रत्याख्याति यतिवत् श्रमणोपासकः । तृतीयव्रते तु राजनिग्रहहेतुस्थूलादत्तादानं नियमितम् । अत्र तु यामदिवसाद्यवधि सर्वमप्यदत्तं परिहरत्युपासकः । तुरीयव्रते तु स्वदारसंतोषव्रतं कृतमत्र त्वेकद्विदिनाद्यवधि स्वदारनियममपि ब्रह्मव्रतं भजते श्राद्धः । पंचमव्रते तु परिग्रहप्रमाणं कृतं तत्र च धान्यघृततैलमंजिष्ठावस्त्रकर्पासादिसर्ववस्तुक्रय-विक्रयविषयं मानं कृतमत्रैक-द्विदिनाद्यवधि तत्प्रमाणस्यापि संक्षेपं विधत्ते श्राद्धः । षष्ठव्रते तु चतुर्दिक्षु योजनशतादिदिग्गमनरूपं मानं कृतम्, अत्र त्वेकद्विवासराद्यवधि ग्रहनगरगोपुरार्द्धगव्यूतगव्यूतादिपरतो गतिनिषेधतत्संक्षेपं करोति श्रावकः । सप्तमव्रते तु भोगोपभोगमाश्रित्य सचित्त-द्रव्यादिविषयं यत् प्रमाणं कृतं तत् संक्षेपणीयम्, कर्मतस्तु यः कोऽपि कर्मादान-प्रभृतिकः सावद्यव्यापारः प्रत्याख्यातो न भवति तत्-प्रत्याख्यानं विधेयम् । अष्टमव्रते त्वपध्यानाचरितप्रभृतिके चतुर्विधेऽप्यनर्थदंडे या यतना प्रोक्ता स्यात्तत्स्थाने मुहूर्तयामदिवसाद्यवध्येकस्य द्वयोस्त्रीणां चतुर्णां वाऽनर्थदंडानां परिहारं विधत्ते श्राद्धः । एवमणुव्रतादिसंक्षेपरूपं देशावकाशिकं दिने दिने कार्यं यावज्जीवं त्वेकस्मिन् दिने चतुष्पंचादियोजनपरतो गतिनिषेधरूपम् । अस्मिँश्च व्रते आनयनप्रयोगप्रभृतयः पंचातिचाराः प्रयत्नतः परिहार्याः ।

तत्र कृतदेशावकाशिकेन श्राद्धेन नियमितक्षेत्राद् बहिः स्वयं गमनायोगे यदन्यः सचित्ताचित्तद्रव्याद्यानयने प्रयुंज्यते संदेशकप्रदानादिना त्वयेदमानेयमिति स आनयनप्रयोगः १। बलाद् विनियोज्यः प्रेष्यस्तस्य प्रयोगो यथाऽभिगृहीतप्रचारदेशव्यतिक्रमभयात् त्वयावश्यमेव तत्र गत्वा मम गवाद्यानेयमिदमिदं वा तत्र विधेयमिति यत् प्रेष्य-प्रयोगविधानं द्वितीयोऽतिचारः २। गृहादेर्बहिःस्थस्य क्षुत्कासितादिना समुत्पन्ने प्रयोजने स्वज्ञापनं शब्दानुपातः ३। मालादावारुह्य रूपदर्शनेन स्वसत्ताज्ञापनं रूपानुपातः ४। केनापि शब्दे कृते स्वज्ञापनाय नियमित-क्षेत्राद् बहिर्लोष्ठ्वादिपुद्गलप्रक्षेपणं बहिःपुद्गलप्रक्षेपः ५। एवं पंचातिचार-परिहारपुरस्सरं पवनंजयवन्निरतिचारतया व्रतमेतत् पालनीयम्। तत्कथा पूर्वमनुक्ताश्च व्रतदृष्टांतकथाः प्रतिक्रमणसूत्रवृत्तेर्विलोकनीयाः। इत्युक्तं देशावकाशिकम् ॥१०॥

अथ पौषधोपवासव्रतस्वरूपं किंचिद् भाण्यते। तथाहि—तत्र पोषं पुष्टिं प्रक्रमाद्धर्मस्य धत्ते इति पौषधः। स चाऽष्टम्यादि-पर्वदिनेष्ववश्यं विधेयो व्रतविशेषः। पौषधे उपवसनं पौषधोपवासः। स चाहारशरीरसत्कारब्रह्मचर्याव्यापारपौषधभेदाच्चतुर्द्धा। तत्रैकैको देशसर्वभेदाद् द्विविधः। तत्र देशत एकासनादि-रूपः, सर्वतस्तु चतुर्विधाहारत्यागरूपः। एवमपरेऽपि त्रयो वाच्या देशसर्वभेदाः। उक्तं च श्रीआवश्यकचूर्णौ—'*पोसहोववासे चउव्विहे सरीरसक्कारपोसहो देसे सव्वे अ। देसे अमुगं न्हाणाइ न करेइ। सव्वे न्हाणमद्दण-वन्नगविलेवणपुप्फगंधाणं वत्थाभरणाण य परिच्चाओ। अव्वावारपोसहो नाम देसे सव्वे अ। देसे अमुगं अमुगं वावारं न करेमित्ति। सव्वे ववहारसेवा हलसंगमघरपरिकम्माइआ न कीरति। बंभचेरपोसहो देसे दिवारत्तिं वा इक्कसिं वा दो वा। सव्वे अहोरत्तं बंभचारी। आहारदेसे अमुगा विगई आयंबिलं वा इक्कसिं वा दो वा। सव्वे चउव्विहो आहाराई अहोरत्तं। जो देसपोसहं करेइ सो सामाइअं करेइ वा न वा। जो सव्वे पोसहं करेइ सो निअमा करेति, जइ न करइ तो वंचिज्जइ।*' तथावश्यकचूर्णावेवं पौषधाधिकारे—

सं सत्तिओ करिज्जा, तवो उ जो वण्णिओ समणधम्मे। देसावगासिएण य, जुत्तो सामाइएणं वा ॥ १ ॥ श्रमणधर्मे चैव तपो वर्णितमावश्यकचूर्णौ -साहुणा किर चिंतेअव्वं, छमासखवण जाव करेमि न करिज्जा एगदिवसेण उणगं करेओ जाव मासा पंच ४-३-२-१। अद्धमासा चउत्थं आयंबिलं एवं एगट्ठाणं इक्कासणं पुरिमड्ढं निव्विअं पोरिसी नमुक्कारोत्ति। एवं यथा श्रमणधर्मे षाण्मासिकतपसः प्रारभ्य प्रांतेऽशक्तौ नमस्कारसहितं यावत्तपः प्रोक्तं तथा श्राद्धस्याप्यशक्तौ कृते पौषधव्रते वाच्यं शक्तौ तु चतुर्विधाहारपरिहारपुरस्सरमुपवास एव। यतः शक्तौ गोपिते वीर्याचारसंबंध्यतीचारः संभवेत्, स च सर्वथा वर्जनीय एव। यस्त्वशक्तः कृते पोषधोपवासे पानीयाहारं गृह्णाति, तेन नीरे वर्णगंधरसस्पर्श-विलोकनं विधेयम्। यत एतैरुत्कटैरेव वारिणः प्रासुकता भवेत्। यदुक्तं—

वण्णरसगंधफासा, जह दव्वे जम्मि उक्कडा हुंति। तह तह चिरं न चिट्ठइ, असुहेसु सुहेसु कालेणं ॥१॥

व्याख्या—यस्मिन् द्रव्ये यथा यथा वर्णगंधरसस्पर्शा उत्कटा उत्कटतरा भवंति तथा तथा तेन द्रव्येण सह मिश्रितमुदकं चिरं न तिष्ठति क्षिप्रं क्षिप्रतरं परिणमतीति भावः। किमविशेषेण नेत्याह येऽशुभा वर्णादय उत्कटास्तेष्वेव क्षिप्रं परिणमति। ये तु शुभा वर्णादयस्तेषूत्कटेषु कालेन परिणमति चिरादित्यर्थः। अत्रेदं निदर्शनं—

जो चंदणो कडुअरसो, संसट्ठजले अदूसणा जाओ। सो खलु दगस्स सत्थं, फासो उ उवग्गहं कुणइ ॥२॥

इह तंदुलोदकं चंदनेन क्वापि मिश्रितं तत्र च चन्दनस्य यः कटुको रसः स तंदुलोदकस्य शस्त्रं परं यस्तदीयः स्पर्शः शीतलः स जलस्योपग्रहं करोतीति कृत्वा चिरेण तत् परिणमति। एवं संसृष्टजलस्यापि या दूषणा अम्लरसता उदकस्य शस्त्रं स्पर्शस्तु शीतलस्वादुपग्रहकारी अतश्चिरेण परिणमति—

पयकिट्टविस्सगंधो, दगसत्थं महुरसी अलं ण घयं । कालन्तरमुप्पण्णा, अंबिलया चाउलोदगस्स ॥ ३ ॥

घृतस्य संबंधी यः किट्टो यश्च विस्रो गंधस्तावुदकस्य शस्त्रं यत्तु रसेन मधुरं स्पर्शेन च शीतलं वृत्तं तदुपग्रहं करोतीति शस्त्रं न भवति, अतश्चिरात् परिणमति । तथा कुकुसैरतिगुलिकैस्तंदुलोदकस्याम्लता या कालान्तरेणोत्पन्ना साप्युदकस्य शस्त्रं भवति कल्पवृत्तिचरमखंडे पत्रे १७५, एवं सति त्रिदंडोत्कलितजलं विहायेतरदच्छजलं न ग्राह्यं पौषधव्रतिना सचित्तत्यागिनाऽपरेणाऽपि श्राद्धवरेण । यतः स्वच्छवारि सचित्तं मिश्रं वा भवेत् । सचित्ते मिश्रे च वारिणि गृह्यमाणे पौषधव्रतस्य त्रिविधाहारप्रत्याख्यानस्य सचित्तनियमस्य च भंगो भवेत्तद्भंगे च चातुर्गतिकसंसृतिचक्रपरिभ्रांतिरतस्मादुत्कलितजलमग्राह्यं पौषधव्रतिना सचित्तत्यागिना च । यस्त्वत्यंताशक्ततया पौषधव्रती न शक्नोति किंतूत्कटवर्णगंधरसस्पर्शपरिणतं सद्ग्राह्यं जलम् । यतः स्वच्छवारि ... पहायेतरदुत्कट-वर्णगंधरसस्पर्शपरिणतमेव वारि ग्राह्यं पौषधव्रतिना सचित्तत्यागिना च । यस्त्वत्यंताशक्ततया पौषधव्रती न शक्नोति कर्त्तुमुपवासं तेन निर्विकृतिकादिप्रत्याख्यानं विधायावश्यं पौषधव्रतं विधेयमेवं चतुष्पर्व्यां यतश्चतुष्पर्व्यां सूत्रे श्राद्धस्य पौषधव्रतमवश्यं विधेयतया प्रोक्तं, यदुक्तं श्रीउत्तराध्ययने —

अगारि-सामाइअंगाइं सड्ढीकायेण फासए । पोसहं दुहओ पक्खं, रागगइं न हावए ॥१॥

यस्त्वत्यंताशक्ततया पौषधव्रती भोजनं विधत्ते तद्विधिः श्राद्धप्रतिक्रमणसूत्रचूर्ण्यक्षरैरेव लिख्यते, तथाहि—जदि देसओ आहारपोसहिओ तो भत्तपाणस्स गुरुसाक्खिअं पाराविता, आवस्सिअं करित्ता, इरिआसमिई एगं तु घरं इरिआवहिअं पडिक्कमइ, आगमणालोअणं करेइ, चेइए वंदेइ, तओ संडासयं पमज्जित्ता, पाउंच्छणे निसीअइ, भायणं पमज्जइ, जहोचिए भोअणे परिवेसिए पंचमंगलमुच्चारेइ, सरेइ पच्चक्खाणं, तओ वयणं पमज्जित्ता, असुरसुरं अचवचवं अदुअमविलंबिअं अपरिसाडिमणवयणकायगुत्तो भुंजइ साहुव्व उवउत्तो ॥१॥

आयमायाए भुंचा, फासुअजलेण मुह-सुद्धिं काउं नवकारसरणेण उट्ठाइ देवे अ वंदेइ, वंदणे अ दाउं संवरणं काउण पुणो वि पोसह-सालाए गंतुं सज्झायंतो चिट्ठइ।' पौषधग्रहणविधिस्तु यथासंप्रदायमवसेयः।

पौषधग्रहणानंतरं तु प्रतिक्रमणं कृत्वा क्षमाश्रमणद्वयेन च बहुवेलादेशमादाय प्रतिलेखना विधेया। तद्विधिस्तु श्राद्धेन प्रथमं मुखपोतांगप्रतिलेखने निर्माय, पादपुंछनपरिधाने प्रतिलेखनीये, श्राद्धया तु वदनवसनदेहपादपुंछनप्रतिलेखनानंतरमुत्तरीयकंचुकशाटिकाः प्रतिलेखनीयाः, तदनु क्षमाश्रमणदानपूर्वमादेशमादाय, स्थापनाचार्यप्रत्युपेक्षणपूर्वमादेशं गृहीत्वा, मुखपोतांगप्रतिलेखने कृत्वा, क्षमाश्रमणद्वैतेन चोपधिप्रतिलेखनादेशादानपूर्वं शेषः सर्वोऽप्युपधिः प्रतिलेखनीयः, तदनु वसतेः प्रमार्जनं निर्माय काजकं शुद्धकलीशायां यथा कीटिकादिजंतूनां परितापो न भवेत्ते च स्वेच्छया गच्छंति स्वस्थानेषु, षट्पदिकास्तु सम्यक् शोधयित्वा सर्वैः श्रावकैर्विभज्य ग्राह्याः, अन्ये तु जंतवो ये यत्र याति तत्र गंतुं देयास्तदनुवसतिप्रमार्जनावसरे कीटिकादिदेहिनां परितापसंभवे ईर्यापथिकी प्रतिक्रमणपूर्वं काजकमुद्धृत्य, षट्‌पदरहिते स्थंडिले दृग्विलोकन-प्रमार्जन-पूर्वं तं परिष्ठाप्येर्यापथिकीं प्रतिक्रम्य गमनागमने चालोच्य, मंडल्यां स्वाध्यायो विधेयस्तदनु पठनगुणनादि कार्यं तावद् यावत् पादोना पौरुषी स्यात्तस्यां च जातायामादेशमादाय मुखपोतिकावपुः प्रतिलेखने निर्माय, कालवेलं यावदप्रमत्ततया स्वाध्यायध्यानादि विधेयं, कालवेलायां स्वीर्याशोधनपूर्वं चैत्ये पंचभिः शक्रस्तवैर्देवा वंदनीयाः तदनु, वसतौ समागत्येर्यापथिकी प्रतिक्रमण-गमनागमनालोचने निर्माय चरम-पौरुषीं यावत् स्वाध्यायो विधेयः, यस्त्वशक्तः कर्तुमुपवासं स देववंदनादनु पूर्वोक्तविधिना भोजनं विधत्ते, प्रतिलेखनाकाले च जाते प्रथमक्षमाश्रमणेन प्रतिलेखनां करोमि, द्वितीयक्षमाश्रमणेन च पौषधशालायां प्रमार्जयामीत्यादेशद्वयमादाय, वदनवसनवपु.पादपुंछन प्रतिलेखना विधेया, भुक्तेन तु परिधानप्रतिलेखनाऽपि, श्राद्धया तु

भुक्तया मुखपोतं, तदनु पादपुंछनशाटिकाकंचुकोत्तरीयप्रतिलेखना कार्या, अभुक्तया तु प्रभात-प्रतिलेखनेव सा चरमपौरुष्यामपि विधेया, तदन्वादेश-मादाय स्थापनाचार्यान् प्रत्युपेक्ष्य प्रभातवद् वसति-प्रमार्जनादि-कार्यं, तदनूपधिमुखपोतिकां तनुं च प्रत्युपेक्ष्य, क्षमाश्रमणे-नादेशमादाय, स्वाध्यायः कार्यः तदनु ये भुक्तवंतस्तैर्वंदनदानपूर्वं प्रत्याख्यानं विधेयं, पश्चात् सर्वैरपि क्षमाश्रमणद्वयेनादेशं गृही-त्वोपधिः प्रतिलेखनीयः, उपोषितैस्तु सर्वोपधिप्रतिलेखनान्ते परिधानं प्रतिलेख्यं, तदनु कालवेलां यावत् स्वाध्यायं विधाय, तस्यां तु जातायामंतर्बहिश्चेति कृत्वा द्वादशप्रश्रवणभूमीर्द्वादश चोच्चारभूमीः प्रत्युपेक्ष्य, देववंदनपूर्वं प्रतिक्रमणं विधेयं, तदनु साधुसंभवे क्षमा-श्रमणदानपूर्वं विश्रामणां विधाय, पौरुषीं यावत् स्वाध्यायं कृत्वा, तस्यां तु जातायां चैत्यवंदनां निर्माय, वपुश्चिंतोपयोगं च कृत्वा, सर्वबाह्योपधिं प्रत्युप्रेक्ष्य, जानूपरिसंस्तारकोत्तरपट्टौ संयोज्य, यतः पादौ ततो भूमिं प्रमृज्य, शनैः शनैः संस्तारकं संस्तीर्य, वाम-पादेन च तं संघट्टयित्वा, मुखपोतांगप्रतिलेखने निर्माय, संस्तारकविधिः पठनीयः, तं च पठन्नणुजाणह जिट्ठज्जित्ति भणन्-संस्तारके उपविशते, तं च पठित्वा नमक्खारस्मरणपूर्वं रजोहरणादिना तनुं संस्तारकं च प्रमृज्य, बाहूपधानेन वामपार्श्वेण च स्वापः कार्यः, संस्तारके तु संस्तार-कोत्तरपट्टाधिकं न संस्तरणीयं, कुर्कुटीवत् पादप्रसारणं कार्यं, यदा कदाचित् पादं प्रसारयति पार्श्वं चोद्वर्त्तयति हस्तपादादिकं वा चालयति कंडूयनं वा विधत्ते तदा दिने निशायां वा रजोहरणादिना प्रमार्जनं कार्यं, तथा दिवास्वापो न विधेयो, निशायामपि प्रथमचरमया-मयोः, तथोत्सर्गतोऽवष्टंभो न विधेयः सर्वथा तथाऽशक्तौ स्तंभकुड्यादेः प्रमार्जनं विधेयं, तथा प्रमार्जनं विना द्वारोद्घाटनपिधाने न विधेये, तथा वस्त्रप्रभृति-सर्वमप्युपकरणं प्रेक्षण-प्रमार्जनपूर्वमेव ग्राह्यं मोच्यं च, तथा प्रत्युप्रेक्षिते प्रमार्जिते च स्थंडिले लघुनीतिप्रभृति-सर्वं परिष्ठाप्यं, तथा गमने आवश्यिकी प्रवेशे नैषेधिकीति वाच्यं, तथा निशि पिहित-स्थाने आ-सज्जेति भणता गंतव्यं, तथा दिने निशायां

च प्रेक्षण प्रमार्जनपूर्वमेव गंतव्यं, तथा कषायचतुष्कविकथाहास्यादित्यागः प्रयत्नेन कार्यः, आर्त्तरौद्रध्याने च सर्वथा त्याज्ये, सावद्यभाषा नैव भाषणीया, पंचेन्द्रिय-संयम सम्यक्कार्यः, किं बहुना सर्वोद्यमेवन समितिगुप्ति-पालने यतनीयं, तथा निद्रा-स्थाने श्राद्धस्य श्राद्धस्य तनुवैपयिक हस्तद्वितयमितमतर यथा स्यात्तथा संस्तारकाः प्रक्षेप्याः, अतिशीतेऽपि त्रिकाधिकमाच्छादनं न ग्राह्यं, यदा च मध्यरात्रादौ कायिके कृते समुत्तिष्ठति तदाऽन्यश्राद्धमवाशात् संस्तारकसंघट्टनं विधापयित्वा रजोहरणेन प्रमार्जयन् महीं तत्-प्रमार्जिते मात्रके कायिकीं विधायात्रस्थित्वीं कृत्वा तां च विधिना परिष्ठाप्येर्यापथिकीं प्रतिक्रम्य गमनागमने आलोच्य जघन्यतोऽपि गाथात्रयं गुणयित्वा नमस्कारं स्मरन् स्वाप कुर्य्यादशक्तोऽधिकस्वाध्यायविधाने, तदनु निशायाः पूर्णे पश्चिमे यामे शेषे निद्रां विहायेर्यापथिकीं प्रतिक्रम्य कुस्वप्नदु:स्वप्रत्ययदुरितविशुद्धयर्थं कायोत्सर्गं कृत्वा चैत्यवंदनां विधायाचार्यादीनभिवंद्य कालवेलां यावत् स्वाध्यायो विधेयः, तस्यां च जातायां प्रतिक्रमणादिप्राग्वत्तावद् विधेयं यावत् मंडल्यां स्वाध्यायकरणं, पौषधपारणविधिस्तु यथासंप्रदायमवसेयः। अयं च सर्वोऽपि पौषधविधिः स्वगच्छसामाचारीसूत्रानुसारेण प्रोक्तः। अन्यस्मिन्नपि गच्छे सूत्रानुसारी जिनाज्ञाऽविरुद्धो यः कश्चन पौषधविधिः स सर्वोऽपि प्रमाणभूत एव, यथा जिनाज्ञाऽविरुद्धमेव सर्वं धर्मानुष्ठानं प्रमाणं, जिनाज्ञा चाश्रवनिरोध-संवर-करण-रूपा। यदुक्तमेकोनविंशे वीतरागस्तवे प्रभुश्रीहेमाचार्यपादैः

आकालमियमाज्ञा ते, हेयोपादेयगोचरा। आश्रवः सर्वथा हेय, उपादेयश्च संवरः ॥ १ ॥
आश्रवो भवहेतु स्यात्, संवरो मोक्षकारणम्। इतीय मार्हती मुष्टि-रन्यदस्या प्रपंचनम् ॥ २ ॥ इत्यादि।

अत्राह कश्चिज्जिनाज्ञा चेदाश्रवनिरोध-संवरकरण-रूपा तर्हि श्राद्धेन सामायिकपौषधकरणरूपमनवद्यमेव धर्मानुष्ठानं विधेयं

न तु द्रव्यस्तवरूपं, यतो द्रव्य-स्तवे विधीयमाने पट्कायवधलक्षणः संभवेदेवाश्रवः । अत्रोच्यते—आश्रवो द्विविधः, पुण्याश्रवः पापा-
श्रवश्च । तत्र स्वदेहगेहाद्यर्थं विधीयमानः पट्कायवधः पापाश्रव आर्त्तरौद्रध्यानाभ्यां विधीयमानत्वात्, द्रव्यस्तवे तु यतना-परस्य
श्रीमदर्हद्भक्तिं करोमीतिध्यानलीनमनसो यः पट्कायवधः स-पुण्याश्रवो, धर्मध्याननिदानभूतत्वात् । यश्च पुण्याश्रवः स संवर एव,
तपःसंयमानुष्ठानसाधुविहारादिवत् । आश्रवाश्च द्विविधाः प्रोक्ताः, पुण्याश्रवाः पापाश्रवाश्च । तथा चोक्तं श्रीयोगशास्त्रे —

*मनोवाक्कायकर्माणि, योगाः कर्म शुभाशुभम् । यदाश्रवंति जंतूनामाश्रवास्तेन कीर्त्तिताः ॥१॥*

*मैत्र्यादिवासितं चेतः, कर्म सूते शुभात्मकम् । कपाय-विपयाक्रांतं, वितनोत्यशुभं पुनः ॥२॥*

*कपाय-विपया (पापाश्रवा) योगाः प्रमादाविरती तथा । मिथ्यात्वमार्त्तरौद्रे चेत्यशुभं प्रति हेतवः ॥३॥*

एवं कपायदुष्टयोगत्रयाद्या अशुभाश्रवाः, कपायविपयत्यागशुभमनोवाक्काययोगास्तु शुभाश्रवाः । ये च शुभाश्रवास्त एव भवहेतुक्रियात्याग-
संवरहेतुभूतया संवररूपतया ज्ञेयाः । अन्यच्च शुभाऽशुभकर्मबंधनिबंधनं मुख्यं मनःपरिणाम एव । यदुक्तं – 'जं जं समयं जीवो०' तथा

*'मन एव मनुष्याणां, कारणं बंध-मोक्षयोः । अन्यथालिंग्यते कांता, अन्यथालिंग्यते सुता' ॥१॥*

एवं सति द्रव्यस्तवे पट्कायवधे जायमानेऽपि पट्कायवधं करोमीति मनः परीणामो नास्ति, किं तु जिनभक्तिं करोमीत्येव चेतो-
वृत्तिः शुभतमैव भवेत् । यादृग्विधश्च मनःपरीणामस्तादृग्विधः कर्मणां बंधः । अन्यथा मुक्ति-परमांगभूते कायोत्सर्गेऽपि कृते दुर्मुख-
वचसा समुत्पन्नकोपेन प्रसन्नचंद्रराजर्षिणा मनसैव युद्धं कुर्वता सप्तमनिरयोचितमायुःकर्मोपार्जितं तेनैव च शिरसि हस्ते क्षिप्ते शिरोमुण्डत्वं
विज्ञाय समायातविवेकेनात्मनि कुनिंदां कुर्वता पंचमसंवेदनमपि समासादितम् । एवं कर्मक्षयहेतुः कायोत्सर्गोऽपि मनःपरिणाम-

विशेषतः धर्मबंधनिदानं तत्क्षयहेतुश्च समभूत्। धपर्यंश्च दुर्गतिनिदानमाधाकर्मिश्रपरमान्नसमास्वादनमपि शुद्धमेव भुंजानस्मीति शुभमनःपरिणामतः पंचमावबोधप्राप्तिहेतुः समभूत्। तस्मात् मनःपरिणाम एव कर्मणां बंधे क्षये च हेतुः। स च द्रव्यस्तव-विधाने षड्जीवनिकायवधविषयो न विद्यते किं त्वर्हद्भक्तिविषयः।

किं च समिति५गुप्ति३परिषह२२यतिधर्म१०भावना१२चारित्र५भेदैः सप्तपंचाशद्भेदः संवरः प्रोक्तस्तन्मध्ये यतिधर्मस्य क्षांति१मार्दवा२ऽऽर्जव३मुक्ति४तपः५संयम६सत्य७शौचा८किंचन्य९ब्रह्म१०लक्षणा दश भेदाः प्रोक्तास्तन्मध्ये तपो द्वादशभेदं बाह्या-भ्यंतरभेदतः। तदंतश्च प्रायश्चित्त१विनय२वैयावृत्य३स्वाध्याय४ध्यान५कायोत्सर्ग६लक्षणाः षडभ्यंतरतपो भेदाः। तेषु अर्हत्१ सिद्ध२चैत्य३श्रुत४धर्म५साधुवर्गा६चार्यो७पाध्याय८प्रवचन९दर्शन१०लक्षणेषु दशसु स्थानेषु भक्ति१बहुमान२वर्णजनना३वर्णवाद-नाशना४शातनापरिहार५रूपः पंचधा विनयो विधेय इत्युक्तम्। तन्मध्ये चैत्यशब्देनार्हत्प्रतिमा प्रोच्यते तद्भक्तिस्तु द्रव्यस्तवविधानतः। एवं विनयरूपे संवरभेदे द्रव्यस्तवोऽन्तर्भूतस्तस्माद् द्रव्यस्तवोऽपि संवर एव। एतद्विनयभेदसंवादविधायिन्यो गाथा लिख्यंते दर्शन-सप्ततिकासत्कास्तथाहि—अरिहंत१सिद्ध२चेइअ३सुए अ४धम्मे अ५साहुवग्गे अ६। आयरिअ७उवज्झाए८, पवयणे९दंसणे१०विणओ ॥१॥ अरिहंता विहरंता, सिद्धा कम्मक्खया सिवं पत्ता। पडिमा उ चेइआइं, सुअंति सामाइआईअं ॥२॥ धम्मो चरित्तधम्मो, आहारो तस्स साहुवग्गोत्ति। आयरिय—उवज्झाया, विसेसगुणसंजया जत्थ ॥३॥ पवयणमरोसमंघो, दंसणमिच्छंति इत्थ सम्मत्तं। विणओ दसएण्हमेवं, कायव्वो होइ एवं तु ॥४॥ भत्ती१बहुमाणो२वण्णजणण३नासणमवण्णवायस्स४। आसायणपरिहरण५, विणओ संखेवओ एस ॥५॥ भत्ती पडिपडिवत्ती१, बहुमाणो मणसि निज्झरापीई२। वण्णजणणं तु तेसिं, अइसयगुणकित्तणाईहिं३ ॥६॥ उड्डाहगोवणाई, भाणिओ

नासणमवत्तवायस्स ४। आसायणपरिहरणं, उचिआसणसेवणाईहिं ५ ॥ ७ ॥

तथाऽभ्यंतरतपोभेदेषु वैयावृत्यं प्रोक्तं, तच्च श्रीप्रश्नव्याकरणांगे तृतीयसंवरद्वारे दशधा प्रोक्तं, तथाहि—'पवत्ति१आयरिअ२ उवज्झाए३ सेहे४ साहम्मिए५तवस्सी६कुल७गण८संघ९चेइय१०ट्ठे अवनिज्जरट्ठी वेआवच्चं अणिस्सिअं दसविहं बहुविहं करेइ ।' अत्र चैत्य शब्देनार्हत्प्रतिमा प्रोच्यते। तद्वैयावृत्यविधानं तु द्रव्यस्तवादिना स्यादेवं वैयावृत्यरूपे आभ्यंतरतपोभेदे द्रव्यस्तवोऽन्तर्गत एवमपि वैयावृत्यतपोभेदरूपसंवरभेदांतर्भूतत्वात् द्रव्यस्तवोऽपि संवर एव। एवं च यत् प्रोक्तमाश्रवो हेयः संवरश्चोपादेय इत्याज्ञास्वरूपं तद्द्रव्य-स्तवे कृते समाराधितमेव।

किंच सावद्यत्वाद् द्रव्य-स्तवो न विधेय इति वचनमेवाश्रवो, यतः इंद्रिय५कषाय४जीवहिंसा१मृषावादा२दत्तादानं३मैथुन४ परिग्रह५मनो१वचन२तनुयोग३पंचविंशतिक्रिया२५रूपा द्विचत्वारिंशदाश्रवभेदाः प्रोक्ताः। द्रव्यस्तवापलापिनां तु सूत्र-निरुद्धवादितया मृषावादरूप एव पापाश्रवः, यतः सूत्रे श्राद्धानां द्रव्यस्तवो विधेयतया प्रोक्तस्तथाहि भक्तपरिज्ञा-प्रकीर्णके एकत्रिंशत्तमगाथायां तथाहि— विअरइ पसत्थ-पुत्थय—सुतित्थतित्थयरपूआसु ॥ १ ॥ तथा तत्रैव सप्ततितमैकसप्ततितमगा-निअदव्वमपुव्वजिणिंदभवणजिणबिंबवरपइट्ठासु । थयोस्तथाहि—'अरिहंतसिद्धचेइअ-पवयण-आयरिअ-सव्वसाहूसु । तिव्वं करेसु भत्तिं तिगरणसुद्धेण भावेण ॥ १ ॥' 'एगावि सा समत्था, जिणभत्ती दुग्गइं निवारेउं । दुलहाइं लहावेउं आसिद्धिपरंपरसुहाइं ॥२॥'

तथा गणिविद्याप्रकीर्णके 'धणिट्ठा सयभिसा साई स्सवणो अ पुणव्वसू । एएसु गुरुसुस्सूसं चेइआणं च पूअणं ॥ १ ॥ तथा चतुः-शरणप्रकीर्णके 'थुइवंदणमरिहंता, अमरिंदनरिंदपूअमरिहंता । सासयसुहमरिहंता अरिहंता हुंतु मे सरणं ॥१॥' तथा चतुर्विंशतिस्तवरूपे

श्रीआवश्यकमूलसूत्रे पुष्पादिभिः पूजा प्रोक्ता, तथाहि 'कित्तिय वंदिय महिया' एतद्व्याख्या कीर्तिता नामोच्चारेण, वंदिता मनोवचनतनुभिः, महिताः पूजिताः पुष्पादिभिः ।

तथा श्रीमहानिशीथे 'काऊण जिणाययणेहिं मंडिअं सयलमेइणीवट्टं । दाणाइचउक्केणवि सुट्ठुवि गच्छिज्ज अच्चुअं न परओ ॥' तथा श्रीउपासकदशांगे 'एहीति णं देवाणुप्पिआ ? कल्लं इह महामाहणे उप्पन्ननाणदंसणधरे तीअपडुप्पन्नमणागयजाणए अरहा जिणे केवली सव्वन्नू सव्वदरिसी तेलुक्क-महिअमहिअपूजिए सदेवमणुआसुरस्स लोगस्स अच्चणिज्जे वंदणिज्जे पूअणिज्जे सक्कारणिज्जे सम्माणणिज्जे ।' एतस्मिन्नालापके महितशब्देन पुष्पादिभिः पूजितो वर्द्धमानस्वामी, अच्चणिज्जे इति पदेन च तस्य पुष्पादि-पूजायोग्यत्वमुक्तं तेलुक्केति पदेन सदेवमणुआसुरस्स लोगस्सेति पदेन च देवा मनुजाश्च प्रोच्यंते तैर्महितः पूजितोऽर्चनीयश्च । ततः पूजा-योग्य इत्युक्तं, तत्र मनुजा मनुष्याः सम्यग्दृशः श्राद्धास्तैः पूजितः श्रीमान् वीरः । एवं स्थिते सति यत् कैश्चित् कुमतिभिः प्रोच्यते, केन श्राद्धेन विहितो द्रव्यस्तवः, उच्यते सर्वैरपि श्राद्धैर्यतः सूत्रे 'तेलुक्कमहितमहिते'त्याद्युक्तम् ।

तथा नंदिसूत्रेऽपि 'से किं तं सम्मसुअं ? सम्मसुअं जं इमेहिं अरिहंतेहिं भगवंतेहिं उप्पन्ननाणदंसणधरेहिं तेलुक्कनिरिक्खिअमहिअ-पूइएहिं तीअपडुप्पन्नमणागयजाणएहिं सव्वन्नूहिं सव्वदरिसीहिं पणीअं दुवालसंगं गणिपिडगं ।' तथा अनुयोगद्वारसूत्रेऽपि 'तेलुक्क-निरिक्खिअमहिअपूइएहिं' इति पदं प्रवर्त्तते ।

तथा विजयदेवेन श्रीअर्हत्प्रतिमिति पूजनं कृतं तदालापकश्च श्रीजीवाभिगमोपांगादर्वैर्लिख्यते तथाहि 'तए णं से विजए देवे केसालंकारेणं मल्लालंकारेणं आभरणालंकारेणं वत्थालंकारेणं चउव्विहेणं अलंकारेणं अलंकिए समाणे पडिपुण्णालंकारे सीहासणाओ अब्भुट्ठेइ, अब्भुट्ठित्ता ववसायसभं अणुपविसइ, अणुपविसित्ता जेणेव सीहासणे तेणेव

उवागच्छइ, उवागच्छित्ता सीहासणवरगते पुरत्थाभिमुहे सण्णिसण्णे । तए णं तस्स विजयस्स देवस्स आभिओगिआ देवा पोत्थयरयणं उव-णेंति । तत्तेणं से विजयदेवे पोत्थय-रयणं गिण्हइ, गिण्हित्ता जाव पोत्थय-रयणं विहाडेइ, पोत्थयरयणं वाएति, वाएइत्ता धम्मिअं ववसायं पगिण्हइ, पगिण्हित्ता पोत्थयरयणं पडिणिक्खिवति, पडिणिक्खिवित्ता सीहासणाओ अब्भुट्ठेति, अब्भुट्ठेइत्ता ववसाय-सभाओ पुरत्थिमिल्लेणं दारेणं पडिणिक्खमति । ततो जेणेव नंदपुक्खरिणी तेणेव उवागच्छइ, उवागच्छित्ता पुरत्थिमिल्लेणं तोरणेणं अणुपविस्सइ, ति-सोवाणपडिरूवेणं पच्चोरुहइ, हत्थपायं पक्खालेइ, एगं महं सेअं रययमयं विमलसलिलपुन्नं भिंगारं पगिण्हइ जाइं तत्थ उप्पलाइं पउमाइं कुसुमाइं नलिणाइं सुभगाइं सोगंधाइं पुंडरीयाइं सयपत्ताइं सहस्सपत्ताइं ताइं गिण्हइ णंदातो पुक्खरिणीतो पच्चुत्तरति । जाणेव सिद्धाययणे तेणेव पहारेत्थ गमणाए । तएणं तं विजयं देवं चत्तारिसामाणिअसाहस्सीओ जाव अन्ने बहवे वाणमंतरा देवा देवीओ अ उप्पलहत्थगया जाव सहस्सपत्तहत्थगया पिट्ठओ अणुगछंति । ततेणं तस्स विजयदेवस्य बहवे अभियोगिआ देवा देवीओ अ भिंगारहत्थगया आयंसगहत्थगया एवं थालपाई-सुप्पइट्ठाइहत्थगया रयण-करंड पुप्फचंगेरीलोमहत्थ-जाव धूवकडुच्छगया पिट्ठओ अणुगछंति ततेणं से विजयदेवे सव्विड्ढीए जाव रवेणं जेणेव सिद्धायतणे तेणेव उवागच्छइ, उवागच्छित्ता पुरत्थिमेणं दारेणं अणुपविसइ, अणुप्पविसित्ता जेणेव देवच्छंदए तेणेव उवागच्छइ, उवागच्छित्ता आलोए जिणपडिमाणं पणामं करेइ पणामं करित्ता लोमहत्थगं गेण्हइ, लोमहत्थगं गेण्हित्ता लोमहत्थएणं पमज्जइ, पमज्जित्ता सुरभिणा गंधोदएणं ण्हाणेइ१, ण्हाणइत्ता दिव्वाए सुरभीए गंधकासाईए गायाइं लूहेइ, लूहेइत्ता सरसेणं गोसीसचंद-णेणं गायाइं अणुलिंपइ, अणुलिंपइत्ता जिणपडिमाणं अहयाइं सेयाइं दिव्वाइं देवदूसजुअलाइं निअंसेइ२, निअंसित्ता अग्गेहिं वरेहिं गंधेहिं अच्चेइ अच्चेइत्ता४, पुष्फारुहणं५, मल्लारुहणं६, वण्णारुहणं७, चुण्णारुहणं८, वत्थारुहणं९, आभरणारुहणं करेइ १०,

करित्ता आसत्तोसत्त-विउलवट्टवग्घारिअ-मल्लदामं करेइ ११, अच्छेहिं सण्हेहिं रययामएहिं अच्छरसा तंदुलेहिं जिणपडिमाणं पुरओ अट्ठमंगलए आलिहइ १२, कयग्गहगहिअ-करयलपब्भट्ठ-विप्पमुक्केणं दसद्धवण्णेणं कुसुमेणं मुक्क-पुप्फ-पुंजोवयारकलिअं करेइ १३, करित्ता चंदप्पहवइर-वेरुलिअ विमलदंडकंचणमणिरयणभत्तिचित्तं कालागुरुपवरकुंदुरुक्कतुरुक्कधूवगंधुद्धुआयमाणं गंधवट्टिं विणिम्मुअ-अंतं वेरुलिअमयं कडुच्छुयं पग्गहिअपयत्तेणं धूवं दाउणं १४, अट्ठसयविसुद्धगंथजुत्तेहिं महावित्तेहिं अत्थजुत्तेहिं अपुणरुत्तेहिं संथुणइ, संथुणित्ता सत्तट्ठपयाइं ओसरइ, ओसरित्ता वामं जाणुं अंचइ, अंचेत्ता दाहिणं जाणुं धरणितलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणितलंसि पणामेइ, ईसिं पच्चुण्णमइ, पच्चुण्णमइत्ता कडग-तुडिअथंभिआओ भुआओ साहरइ, साहरइत्ता करयलपरिग्गहिअं सिरसावत्तं दसनहं मत्थए अंजलिं कट्टु एवं वयासी नमोऽत्थु णं अरिहंताणं० जाव ठाणं संपत्ताणं तिकट्टु वंदइ नमंसइ ।' एवं यथा विजयदेवेन जिनप्रतिमार्चनं कृतं तथा सूरिआभदेवेनापि । तदालापकः श्रीराजप्रश्नीयोपांगादवसेयः । तत्राप्येते चतुर्दशपूजाभेदाः प्रोक्ताः, संगीत१नृत्य२तोद्य३लक्षणं तु पूजात्रितयं जंबूद्वीपप्रज्ञप्तीजन्मस्नात्राधिकारे: सविस्तरं प्रोक्तमस्ति । एवं सप्तदशभेदा भगवद्पूजा श्रीमदागमाक्षरैः स्पष्टमेवोक्ता यैर्न मन्यते तेषां प्रकट एव भूतनिह्नवस्वरूप आश्रवः ।

नन्वेषाऽविरतैः सुरैः कृता देवस्थित्या कथं तर्हि सा प्रमाणभूता, उच्यते देवस्थितिर्भवतु परमेतौ सुरौ सम्यग्दृष्टी सम्यग्दृष्टिविहितं सुकृतं कृत्यं तु प्रमाणमेव । अन्यच्च यदा सूरिआभदेवेन भगवतोऽग्रे पृष्टमहं गौतमप्रभृतिश्रमणशिरोमणीनां नाट्यविधिं दर्शयामीति, तदा यथा भगवता मौनं कृतं तथा निषेधः किं न कृतो यदि द्रव्यस्तवो न क्रियते, यतो नृत्यपूजाऽपि द्रव्यस्तवांतर्गतैव ।

नन्वेष द्रव्यस्तवः सुरकृतस्ते त्वविरताः तर्हि विरतिमद्भिः श्राद्धैर्विहितो द्रव्यस्तव इति क्वापि ग्रन्थे प्रोक्तम्, उच्यते सर्वैः श्राद्धैः कृत इति प्रचितं श्रीमदागमे तथाहि उपासकदशांगे आनन्दस्य सम्यक्त्वालापके 'नो-खलु मे कप्पइ अज्जप्पभिइं अण्णउत्थिए

वा । *अणउत्थिअदेवाणि वा अणउत्थिअपरिग्गहिआइ वा अरिहंत-चेइआइं वा वंदित्तए वा नमंसित्तए वा ।'* अत्र चैत्यशब्देनाऽर्हत्-
प्रतिमा प्रोच्यते । साऽन्यतीर्थिक-परिगृहीता वंदितुं नमस्कर्तुं न कल्पते एतावता याऽन्यतीर्थिकपरिगृहीता न भवति जिन-प्रतिमा तद्-
वंदनादि कल्पते इति सूचितं, सूत्रं सूचनकृदितिवचनात् सूत्रं सूचामेव विधत्ते विस्तरस्तु निर्युक्तिवृत्त्यादिषु । एवं यथाऽऽनंदेन
सम्यक्त्वालापकोच्चारः कृतस्तथा सर्वैरपि श्रावकैस्तन्मध्ये च जिन-प्रतिमावंदनादि-सूचितं, तस्माद् विरतिमतामपि सर्वश्रावकाणां
द्रव्यस्तवः सूत्रे प्रतिपादितो विधेयतया ।

नन्वेष द्रव्यस्तवो यथा सूत्रे प्रतिपादितः सूचया तथा नामग्राहमनेन श्राद्धेन श्राद्धया वा विहित इति क्वापि सूत्रे दर्श्यताम्,
उच्यते भगवद्वर्द्धमानस्वामिजनकेन सिद्धार्थनृपेण कृतो द्रव्यस्तवः । तथा च श्रीकल्पसूत्रं—*'तएणं सिद्धत्थे राया दसाहिआए ठिइवट्टि-*
*आए वट्टमाणीए सइ अ साहस्सिए अ सयसाहस्सिए अ जाएअ दाएअ भाएअ दलमाणे आ दवावेमाणेअ सइएअ साहस्सिएअ सयसा-*
*हस्सिएअ लभे—पडिच्छमाणेअ पडिच्छावेमाणेअ एवं विहरइ'* एतद् व्याख्या दशाहिकायां दशदिवसमानायां स्थितौ कुलमर्यादायां
पतिताऽऽगता या पुत्रजन्मोत्सवप्रक्रिया तस्यां वर्त्तमानायां शतकान् शतपरिमाणान् साहस्रिकान् सहस्रप्रमाणान् शतसाहस्रिकान्
लक्ष-प्रमाणान् यागान् देवपूजाः दायान् पर्वदिवसदानानि भागान् लब्धद्रविणभागान् ददन् दापयन् लाभान् प्रतीच्छन् गृह्णन्
प्रतिग्राहयन् विहरत्यास्ते । एवं श्रीसिद्धार्थनृपेण चेद्देवपूजा कृता तर्हि कथमन्यैः श्राद्धैः सा न क्रियते । तथांबडपरिव्राजकेन देशविर-
तेन सता जिनप्रतिमावंदननमस्करणादिकृतं तथा चोक्तं श्रीउपपातिकोपांगे *'अम्मडस्स णो कप्पइ अणउत्थिए वा अणउत्थिअदेवयाणि वा*
*अणउत्थिअपरिग्गहिआणि अरहंतचेइआणि वा वंदित्तए वा णमंसित्तए वा जाव पज्जुवासित्तए वा णणत्थअरिहंते वा अरिहंतचइआणि वा'* एवं

श्राद्धेषु नामग्रहणपूर्वं यथैतयोर्द्रव्यस्तवविधानं प्रोक्तं तथा श्रीमहानिशीथे बहूनां श्रमणोपासकानां नामग्राहं द्रव्यस्तवविधानं प्रोक्तमस्ति।

अथ श्राद्धीषु द्रौपदीनिदर्शनं तत्संबंधश्च श्रीज्ञाताधर्मकथाङ्गे 'तएणं सा दोवई रायवरकन्ना जेणेव मज्जणघरे तेणेव उवागच्छइ उवागच्छित्ता मज्जणघरं अणुपविसइ, अणुपविसित्ता ण्हाया कयबलिकम्मा कयकोउअमंगलपायच्छित्ता सुद्धप्पावेसाइं मंगल्लाइं वत्थाइं पवरपरिहिअमज्जणघराओ पडिणिक्खमइ, पडिणिक्खमित्ता जेणेव जिणघरे तेणेव उवागच्छइ, उवागच्छित्ता आलोए जिणपडिमाणं पणामं करेइ करित्ता लोमहत्थयं परामुसइ, परामुसित्ता एवं जहा सूरिआभो जिणपडिमाओ अच्चेइ तहेव भाणियव्वं' इत्यृषभदेवपूजालापकस्तु प्राग्लिखितविजयदेवपूजालापकवद् विज्ञेयः। एवं द्रव्यस्तवे श्राद्धेषु सिद्धार्थनृपाद्यौ निदर्शनं श्राद्धीषु तु द्रुपदजा।

ननु द्रुपदजा राजवरकन्यैव प्रोक्ता न तु श्रमणोपासिका, तत् कथं तत्कृतो द्रव्यस्तवः प्रमाणम्, उच्यते द्रौपदी चेत् श्रमणोपासिका न स्यात्तदा कथं तयाऽविरततया नारदस्याऽभ्युत्थानादिर्विनयो न कृतः, कथं वा पूजाते शक्रस्तवः पठितः, कथं वा तया भगवत्पूजाविधिरवगतो नह्येतत् सर्वमनवगतजिनवचने मिथ्यात्विनि संभवति; तस्माद् ज्ञायते सा श्रमणोपासिकाऽभूत्तदापि। कन्येति यदुक्ता सा तदपरिणीततया, यतोऽपरिणीता स्त्री कन्येति प्रोच्यते। यतो राजीमती स्वीकृतश्रामण्यापि श्रीउत्तराध्ययने राजवरकन्येत्युक्ता, तथाहि—'अह सा रायवरकन्ना सुट्ठिआ निअमव्वए। जाईकुलं च सीलं च, रक्खमाणी तयं वए' ॥१॥ तस्मादवसीयते श्रमणोपासिकाऽपि द्रौपद्यपरिणीततया कन्येति निगदिता। किं च श्री नेमिजिनवारके जिनगृहजिनप्रतिमातदर्चादि समभूत्, तदा च तेन श्रीनेमिपरमेष्ठिना तन्न निषिद्धं सत्यपि तन्निमित्ते षट्कायवधे, तर्हि किं भवत्सु श्रीजिनादधिकतरं कृपापरीतचित्तत्वं यद् भवद्भिस्तन्निषिद्ध्यते षट्कायवधः स्यादत्रेति कथयित्वा। किं च द्रुपदनृपगृहे यज्जिनगृहं जिनप्रतिमा च समभूत्तन्निर्मापणं केनापि श्राद्धेनैव

कारितमभून्न तु मिथ्यात्विना, यतो मिथ्यात्विनः किं प्रयोजनं जिनप्रतिमानिर्मापणेन यतस्तस्य हरिहरादिप्रतिमा एव पूज्यतया
प्रतीताः । यथा च तज्जिनसदन-जिनप्रतिमितिनिर्मापणं कारितमभूत्तदा षट्कायवधस्यावश्यं संभवः । एवं सति यैर्जिनप्रतिमादि
निषिद्ध्यते षट्कायवधः स्यादेतत्‌विधापने इत्युदीर्य तेषां प्रकट एव भूतनिन्हवस्वरूपोऽशुभाश्रवः ।

तथा जिनप्रतिमाधिकारः श्रीभगवत्यां चमरोत्पाताधिकारे तथाहि 'असुरकुमारदेविंदा णणत्थं अरिहंते वा अरिहंतचेइआणं वा
अणगारस्स वा भाविअप्पणो नीसाए उ ' उप्पयंति' इत्यालापके । तथा श्रीजिनप्रतिमावंदनाधिकारः साधूनामपि तथा च पंचमांगे
'कइविहाणं भंते चारणा पन्नत्ता ? गोअमा दुविहा पन्नत्ता, तंजहा विज्झाचारणा जंघाचारणा य । से केणट्ठेणं भंते एवं वुच्चइ विज्झाचारणा
वि, तस्स णं छट्ठं छट्ठेणं अणिकित्तेणं तवोकम्मेणं विज्जाए उत्तरगुणलद्धिं खममाणस्सचारणलद्धी णामं लद्धी समुप्पज्जइ, से तेणट्ठेणं जाव-
विज्झाचारणा । विज्जाचारणस्स णं भंते कहं सीहा गती कहं सीहे गइ विसए पन्नत्ते ? गोयमाअयं णं जंबुद्दीवे जाव किंचिविसेसाहिए
परिक्खेवेणं देवेण महिड्ढिए जावमहे सक्खे जाव इणामेव इणामेवत्ति जंबूदीवं दीवं तिहिं अच्छरसानिवाएहिं तिखुत्तो अणुपरिअट्टित्ताणं
हव्वमागच्छेज्जा विज्जावरणस्स णं गोतमा तहा सीहं गतिविसए पन्नत्ते । विज्जाचारणस्स णं भंते तिरिअं केवइए गइविसए पन्नत्ते ? गोयमा
से णं एगेणं उप्पाएणं माणुसुत्तरे पव्वए समोसरणं करेइ, करित्ता तहिं चेइआइं वंदइ वंदित्ता बितिएणं उप्पाएणं णंदिस्सरवरे दीवे समोसरणं
करेइ, करित्ता तहिं चेइआइं वंदइ, वंदित्ता पडिणिअत्तए इहमागच्छइ, इह चेइआइं वंदइ, विज्जाचारणस्स णं गोतमा तिरिअं एवइए
गतिविसए पणत्ते । विज्जाचारणस्स णं भंते उड्ढं केवइए गतिविसए ? गोयमा-से णं एगेणं उप्पातेणं णंदणवणे स० करेइ, क० तहिं चेइआइं
वंदइ, त० बितिएणं पंडगवणे स० गो० पंड० करित्ता तहिं चेइआइं वंदइ, त० तओ इहमागच्छइ, इ० इह चेइआइं वंदइ, विज्जाचर-

णस्स णं गो० उड्ढं एवं० गइ० प० । से णं तस्स ठाणस्स अणालोइअ अपडिक्कंते कालं करेइ, नत्थि तस्स आराहणा । आलोइअ० कालं करेइ तस्स अत्थि आराहणा । से केणं० जंघाचरणे गो० तस्स णं अट्ठमं० अट्ठमं० अणि० तवो० अप्पा० भा० जं० लद्धी समु० । से ते० जंघाचारणस्स णं भंते कहं सीहा गती कहं सीहे गति० पं० । गो० अयं० णं जंबुद्दीवे जहेव विज्जाचारणस्स णं चरति सत्तखुत्तो अणु० हव्वमाग० जंघा० स्स णं गो० तहा सीहा ग० प० सेसं तं चेव । जंघा० स्स णं भंते तिरिअं केवइए गइ० से णं एगेणं उप्पाएणं रुअगवरे दीवे० समो० करे० क० तहिं चेइआइं वं० ततो पडिनिअत्तमाणा बितिएणं उ० णंदीसरवरदीवे स० क० णं० णं० तहिं चेइआइं वं० त० चे० इहमागच्छइ । इहंपि चेइआइं वं । जंघा० गो० तिरिअं एवं० ग० जंघा० स्स णं भंते उड्ढं केव० ग० प० । गो० से णं पत्तो एगेणं उ० पंडगवणे स० क० पंड० स० प्पा० तहिं चेइआइं वंदइ तहिं चे० वं० तओ पडि० बितिएणं उ० णंदणवणे स० क० स० प्पा तहिं चेइआइं वं० त० इहमागच्छइ इह चेइआइं वंदइ जंघा० स्स णं गो० उड्ढं एवं० गइ० । से णं तस्स ठाण० अणा-अप० नत्थि तस्स आ० आलो० प० ते का० अत्थि तस्स आराहणा ।' एवं विद्याचरणजंघाचारणश्रमणैरपि शाश्वता अशाश्वताश्च प्रतिमा वंदिताः । एवं साधूनामपि प्रतिमा वंदनीयाः किं पुनः श्राद्धानां याश्च तैरत्र प्रतिमा वंद्यंते ताः केनापि श्राद्धेनैव कारिता न तु मिथ्यात्विना । यच्च तेषां तस्य स्थानस्यानालोच्याप्रतिक्रम्य कालं कुर्वाणानां विराधकत्वमुक्तं तल्लब्धिप्रयोगादिकमाश्रित्योक्तं, यतः साधूनां लब्धिप्रयोगादिकप्रायश्चित्तमायाति तेन तदनालोचने विराधकत्वम् ।

तथा 'अरिहंतचेइआणं करेमि काउस्सग्ग'मित्यत्रापि प्रतिमाधिकारः । तथा साधूनामतिचारचिंतनगाथायामपि प्रतिमाधिकारस्तथाहि—'सयणासणन्नपाणे, चेइअजइसिज्जकायउच्चारे । समिई भावणगुत्ती, वितहायरणे य अईआरो ॥१॥ तथा साधूनां पाक्षिक-

इत्यस्मिन्। 'अहमवि वंदामि चेइआइं' इत्यस्मिन् ।

क्षामणकेऽपि तथाहि–'पुव्विं चेइआइं वंदित्ता नमंसित्ता ।' अत्र गुरुवचनेऽपि 'अहमवि वंदामि चेइआइं' इत्यस्मिन् । संजयविरय-पडिहय-पच्चक्खाय-पावकम्मे

तथा यतिजीतकल्पेऽपि, तथा श्रीमहानिशीथेऽपि, जे केइ भिक्खू वा भिक्खुणी वा संजयविरय-पडिहय-पच्चक्खाय-पावकम्मे दिक्खादिआपभिईओ अणुदिअहं जावज्जीवाभिग्गहेणं सुवीसत्थे भत्तिभरनिब्भरे जहुत्तविहीए सुत्तत्थमणुसरमाणे अणन्नमाणसेगग्गचित्ते तग्गयमाणससुहज्झवसाए थयथुईहिं न ते कालिअं चेइए वंदिज्जा, तस्स णं एगाए वाराए खमणं पयच्छित्तमुवइसिज्जा, बीआए वेयं, तइयाए उवठावणं, अविहीए चेइआइं वंदेतओ पायंचिअं जओ अविहीए चेइआइं वंदेमाणेऽन्नेसिं असद्धं संजणेइ इअ काउणं ।'

तथा बृहत्कल्पभाष्येऽपि, 'चेइअपूआ रायानिमंतणं सन्निवाइक्खवगधम्मकही संकिअपत्तपभावणपवित्ति कुज्जाउ उड्डाहो ?। संद्धावुद्धी रत्तोपूआइ थिरत्तणं पभावणया पडिघाओ अ अणत्थे अतथा य कया हवइ तित्थे तित्थे तथा लूआकोलिगजालगकोच्छलगारीअ उवरिगेहे अ साडिंतमसाडिंते लहुगा गुरुणा अ भत्तीए ॥१॥' तथा 'तं पुण चेइअनासे, तद्दवविणासणे दुविहभेदे । भत्तोवहिवोच्छेदे, अभिवायणबंधघायाती ॥१॥' एतानि कुर्वाणो नृपादिर्गुरुणेत्थं प्रतिबोध्यस्तथाहि 'वितहं वितहरमाणं सत्थेण विहाणओ न हाडेइ । अम्हं सपक्खदंडे, न चोरिसो दिक्खिए दंडो ॥२॥ तथा 'आयरिअ साहुवंदणचेइअनीअल्लए तहासन्नी । गमणं विदेसदंसण वइगाइसु एवमाईणि' इत्यादिकार्यैर्गमनं विहारं करोति यतिः, एवं आबृहत्कल्पभाष्ये बहुष्वपि स्थानेषु साधूनां प्रतिमावंदनाद्यधिकारः ।

श्रीकल्पचूर्णेपि 'विहारभूमिं वा' इत्यत्र विहारभूमिशब्देन चैत्यवंदनगमनं व्याख्यातमस्ति । तथा — श्रीउत्तराध्ययन-निर्युक्तौ 'चरिमसरीरो साहू आरुहती णगवरं ण अण्णोत्ति । एयं तु उदाहरणं, कासीअ तहिं जिणवरिंदो ॥१॥ सोउण तं भगवओ, गच्छइ तहिं गोअमो पहिज्जकित्ती । आरुहइ तं णगवरं, पडिमाओ वंदइ जिणाणं ॥२॥' एवं प्रत्ये एतत्संबंधिभाष्यनिर्युक्त्यादिबहुस्थानेष्वपि साधूना-

यनेऽपि 'जो जिणदिट्ठे भावे, चतुविह सद्दहाइ सयमेव । ...

मपि प्रतिमावदनाद्यधिकारः किं पुनः श्राद्धानाम् ।

एवं सति ये जिनप्रतिमातत्पूजादि च निषेधयंति कुमतिहतास्तेषां प्रत्यक्ष एव मृषावादरूप आश्रवः । ननु जिनप्रतिमिति-निर्मापणतत्पूजास्नात्रादिषु पृथिव्यप्कायादिकायानां महानारंभः प्रत्यक्ष एव वीक्ष्यते, तत् कथं द्रव्यस्तवो विधीयते । उच्यते-सूत्रोक्तत्वात् प्रागपि सम्यग्दृष्टिसुरेंद्रनरेंद्रादिभिः कृतत्वात् ।

तथा च श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रे सुरेंद्रकृतो जन्मस्नात्राधिकारस्तथाहि तएणं से अच्चुए देविंदे देवराया महिड्ढिए देवदत्ते आभि-ओगिए देवे सद्दावेति स० एवं वयासी खिप्पामेव भो महग्घं महरिहं विउलं तित्थयराभिसेअं उवट्ठवेह, तएणं ते हट्ठतुट्ठे जाव पडिसुणित्ता उत्तर पुरत्थिमं दिसिभागं अवक्कमित्ता वेउव्विअसमुग्घाएणं जाव समोहणित्ता अट्ठसहस्सं सोवण्णिअकलसाणं एवं रुप्पमयाणं मणिमयाणं सुवण्णमणिमयाणं अट्ठसहस्सं भोमेज्जाणं अट्ठसहस्सं चंदणकलसाणं एवं भिंगाराणं आदंसाणं थालाणं पातीणं सुपतिट्ठाणं रयण करंडगाणं । पुप्फचंगेरीणं एवं जहा सूरिआभस्स सव्वचंगेरीओ सव्वपडलगाइं विसेसिअतराणि भाणिअव्वाइं, सीहासणछत्तचामरतेल्लसमुग्गाजाव सरिस-मुग्गा ताअवट्ठा जाव अट्ठसहस्सं कडुच्छयाणं विउव्वेत्ता साभाविए अ वेउव्विए अ कलसे अ जाव कडुच्छुए अ गिण्हित्ता जेणेव खीरोदे समुद्दे तेणेव खीरोदगं गेण्हंति जाइं तत्थ उप्पलाइं जाव सहस्सपत्ताइं गेण्हंति, एवं पुक्खरोदाओ जाव भारहेरवताणं मागहादीणं तित्थाणं उदगं मट्टिअं गेण्हंति एवं गंगादीणं महानदीणं जाव चुल्लहिमवंताओ सव्वतुअरे सव्वपुप्फसव्वगंधे सव्वमल्ले जाव सव्वोसहीओ सिद्धत्थए अ गेण्हंति गेण्हित्ता पउमद्दहाओ दहोदगं उप्पलादीअ एवं सव्व-कुलपव्वएसु वट्टवेअड्ढेसु सव्वमहद्दहेसु सव्ववक्खवट्टिविजएसु अंतरनदीसु विभासेज्जा जाव उत्तरकुरुसु जाव सुदंसणभद्दसालवणे सव्वतुअरे जाव सिद्धत्थए सरसं च गोसीसचंदणं दिव्वं च सुमणदामं गेण्हंति

*एवं सोमणसपंडगवणाओ सव्वतुअरे जाव सुमणदामंदद्दरमालसुगंधे आगेण्हंति आ० एगयओ भेलंति ए० जेणेव सामी तेणेव उवागच्छति उवा० तं महत्थं जाव तित्थयराभिसेअं उवठवेत्ति ।'* एवमच्युतादिभिः सुरेंद्रैर्जन्मस्नात्रं कृतं तत्र चैतावतामप्कायपृथ्वीकायवनस्पतिकायादीनां विराधना समभूत्तर्हि सम्यग्दृष्टिभिरपि सुरेंद्रैः सा किं कृता चेद् द्रव्यस्तवो न प्रमाणभूतस्तज्ज्ञायतेऽत्र जिनभक्तिरेव प्रमाणभूता । नरेंद्रेषु तु दशार्णभद्रनृपेण श्रीवीरवंदनावसरे महाविस्तरकरणरूपो द्रव्यस्तवो विहितस्तत्संबंधश्च श्रीउत्तराध्ययने तथाहि—

*दसन्नरज्जं मुइअं चइत्ताणं मुणी चरे । दसन्नभद्दो निक्खंतो, पत्तो गइमाणुत्तरं ॥१॥'* (सक्खं सक्केण चोइओ)

तथा श्रीआर्यसुहस्तिगुरोः सदुपदेशमाकर्ण्य श्रीसंप्रतिनृपतिना कृतस्तत्संबंधस्तु श्रीनिशीथभाष्ये तच्चूर्णौ च तथाहि *'अणुजाणे अणुजाई पुप्फरुहणं च उक्किरणगाइं । पूअं च चेइआणं ते वि सरज्जेसु कारंति ॥१॥ अणुजाणं रहजेत्ता तासु सो राया अणुजाणइ भडचडगरसहिओ रहेण सह हिंडइ रहेसु पुप्फारुहणं करइ रहग्गाओ अ विविहफले खज्जगे अ वड्डुगवत्थमाईहिं उक्किरणे करेइ अन्नेसिं च चेइअहरठिआणं पूअं करेइ ते वि रायाणो सरज्जेसु कारविंति' ॥२॥* तेऽपि संप्रतिनृपतिसेवकनृपाः स्वस्वराज्येषु रथयात्रादिमहामहान् कुर्वंतिस्म ।

तथा श्रीश्रेणिकनृपेण प्रतिदिनमष्टोत्तरशतमितसौवर्णिकयवजिनप्रतिमा-स्वस्तिक-करणादिरूपो द्रव्यस्तवो विहितः । एवं गणनातिगैरपि नरेंद्रैश्चतुष्षष्टिभिः सुरेंद्रैर्विहितत्वात्सूत्रोक्तत्वाच्च द्रव्यस्तवो विधेयः श्राद्धैः सत्यपि सन्निमित्ते पृथिव्यादिविराधने ।

किं च श्रीजिनप्रतिमाधिकारः स्थानांगेऽपि 'जणवयसम्मयठवणे'त्यादिदशसत्याधिकारे स्थापनासत्यमध्ये । तथा श्रीउत्तराध्ययनेऽपि *'जो जिणदिट्ठे भावे, चतुविहे सद्दहाइ सयमेव । एमेव नन्नहत्ति अ, स निसग्गरुइत्ति नायव्वो॥१॥'* अत्र द्रव्यक्षेत्रकालभावभेदतो-

सति यदुक्तमाश्रवो हेयः संवरश्चादेय इत्याज्ञास्वरूपं तद् विधिवद् द्रव्यस्तवकारिभिः समाराधितं, तन्निषेधकारिभिश्च विराधितम् । किं च द्रव्यस्तवापलापिनां मिथ्यात्वमोहनीयनीचैर्गोत्रविघ्नपंचकरूपदुष्कर्मणां बंधः । यदुक्तं श्री-कर्मप्रवादपूर्वोद्धृते श्रीकर्मविपाके तथाहि 'उम्मग्गदेसणामग्गनासणादेवदव्वहरणेहिं । दंसणमोहं जिणमुणिचेइअसंघाइपडिणीओ ॥१॥' तथा 'गुणपेही मयरहिओ, अज्झयण-उझावणारुई निच्चं । पकुणइ जिणाइभत्तो, उच्चं नीअं इअहराउ ॥ २ ॥ जिणपूआविग्घकरो, हिंसाइपरायणो चयइ विग्घं ।' इति द्रव्यस्तवकारिणां तु साम्राज्यरिद्धिसमृद्ध्यादयः स्युः कुमारपालक्ष्मापालादीनामिव । उक्तं च 'पूजया पूज्यते सर्व-पूज्यो भवति पूजया । ऋद्धिवृद्धिकरी पूजा, पूजा सर्वार्थसाधनी ॥१॥' एतत्फलमनंतरम्, पारंपर्येण तु परमपदं यदुक्तं पूआए मणसंती, मणसंतीए अ होइ सुहभावो । सुहभावाओ मुक्खो, मुक्खे सुक्खं अणाबाहं ॥१॥ इत्युक्तं प्रसंगगतं द्रव्यस्तवस्वरूपम् ।

अथ प्रक्रांतमेव प्रतन्यते । तथाहि इदं च पौषधव्रतं चतुष्पर्व्यामवश्यमेव विधेयमन्यदापि चेत् करोति तदा वरं षड्जीव-कायदयाहेतुतया प्रागपि श्राद्धैर्विहिततया च । तथा च श्रीविपाकश्रुतांगसूत्रं तएणं से सुबाहूकुमारे अन्नया कया चाउद्दसट्ठमुद्दिट्ठ-पुण्णमासिणीसु जेणेव पोसहसाला तेणेव उवागच्छइ उवागच्छित्ता पोसहसालं पमज्जइ पमज्जित्ता उच्चारपासवणभूमिं पडिलेहेइ पडिलेहित्ता दब्भसंथारयं संथरइ संथरित्ता दब्भसंथारयं दुरुहइ दुरुहित्ता अट्ठमभत्तं पगिण्हइ पोसहसालाए पोसहिए अट्ठमभत्तिए पोसहं पडिजागर-माणे विहरइ' प्रथमाध्ययने तथा श्रीज्ञाताधर्मकथांगे प्रथमज्ञाते जेणेव पोसहसाला तेणेव उवागच्छइ उवागच्छिता पोसहसालं पमज्जइ उच्चारपासवणभूमिं पमज्जइ पमज्जित्ता दब्भसंथारयं संथरइ दब्भसंथारयं दुरुहइ दुरुहित्ता अट्ठमभत्तं पगिण्हइ पगिण्हित्ता पोसहसालाए पोसहिए बंभयारी जाव पुव्वसंगतिअं देवं मणसीकरेमाणे चिट्ठइ तएणं तस्स अभयकुमारस्स अट्ठमभत्ते परिणममाणे पुव्वसंगइअस्स

देवस्स आसणं चलइ ।' एवमभयकुमारश्रमणोपासकेन दिनत्रयं यावत् पौषधः कृतस्तथा वसुदेवहिंडौ विजयराज्ञः पर्वान्यदिनेष्वपि पौषधः ग्रहणाधिकारस्तथाहि 'मतीहिं से वेसमणपडिमा पगतिसमगेहिं अभिसित्ता सेविआ राओवयारेण सिरिविजओ वि दब्भसंथारो-वगओ सत्तरत्तं परिचत्तारंभपरिग्गहो बंभयारी संविग्गो पोसहं लेइ सत्तमे अ दिवसे सभं तओ मेहा पाउब्भूआ सलिलभारगया पवणवेग-पवित्थरमाणा विज्जुज्जोवि अ पासायजणणं निरगज्जिअसणा तओ मज्झण्हकाले पासाया वेसमणपडिमं चुण्णयंती इंदासणी पडिआ राया अहिनंदिओपगईहिं नमो अरिहंताणंत्ति निग्गओ पोसहसालाओत्ति दिट्ठो अ तुट्ठेण परिअणेण' तथा श्रीआवश्यकचूर्णौ 'सव्वेसु काल-पव्वेसु, पसत्थो जिणमए तहा जुग्गो । अट्ठमि पन्नरसीसु, निअमेण हविज्ज पोसहिओ ॥१॥' पञ्चदश्या उपलक्षणत्वाच्चतुर्दश्यपि ग्राह्या पर्वसु नियमेन पौषधाभिधानात् शेषदिनेष्वनियमेन पौषधग्रहणमित्यर्थादायातम् । अस्मिंश्च पौषधव्रते पंच विचाराः प्रयत्नतः परिहार्यास्ते चाप्रत्यु-पेक्षितदुष्प्रत्युपेक्षितशय्यासंस्तारकाऽ१प्रमार्जितदुष्प्रमार्जितशय्यासंस्तारका २ प्रत्युपेक्षितदुष्प्रत्युऽक्षितोच्चारप्रश्रवणभूम्य ३ऽप्रमार्जितदुष्प्रमा-र्जितोच्चारप्रश्रवणभूमि४पौषधोपवाससम्यगऽननुपालन५रूपाः । तत्र शय्या शयनीयं संस्तारकः कंबलादिमयस्तृणादिमयो वा तयोश्च-क्षुषाऽप्रत्युप्रेक्षिते दुष्प्रत्युप्रेक्षिते उपवेशनशयनादि विदधतः प्रथमः १ । एवं रजोहरणादिना तयोरप्रमार्जितयोरुपवेशनादि कुर्वतो द्वितीयः । एवमुच्चारप्रश्रवणभूम्योरपि द्वौ वाच्यौ उच्चारप्रश्रवणे निष्ठ्यूतस्वेदमलाद्युपलक्षणे कृतपौषधोपवासेन श्राद्धेन द्वादशोच्चारस्थंडिलानि द्वादश च प्रश्रवणस्थंडिलानि प्रत्युपेक्षणीयानि प्रमार्जनीयानि च । तेषां चाऽप्रत्युपेक्षणे दुष्प्रत्युपेक्षणेऽप्रमार्जने दुष्प्रमार्जने चाऽति-चारौ ४ । चतुर्विधस्यापि पौषधस्य सम्यगननुपालरूपः पंचमः । सम्यगननुपालनं तु यथाकृतचतुर्विधाहारपौषधस्य पौषधे पूर्णे ईदृशमीदृशमाहारं ग्रहीष्ये एवं स्नानादि करिष्ये स्वकलत्रं सेवयिष्यामि अमुकममुकं च गृहहट्टादिव्यापारं विधास्ये इत्यादि चिंतना-

रूपम् । एवं पंचातिचारपरिहारपूर्वं कामदेवश्राद्धवत् पौषधव्रतं पालनीयं यथा तेन सुरविहितपिशाचमत्तमतंगजकृष्णपन्नगरूपत्रयोपसर्गैरपि पौषधव्रतं न खंडितं तथाऽन्यैरपि श्राद्धैर्न खंडनीयम् । तदनु स सुरः स्वरूपं प्रकटीकृत्य युक्तमेव भवान् शचीपतिना स्तुत इत्यादि वचनैः प्रशंसां विधाय तत्पदोर्निपत्य तमपराधं क्षमयित्वा ययौ सुरालयम् । पश्चान्निरुपसर्गमिति कृत्वा प्रतिमां पारयित्वा ययौ श्रीवीरवंदनकृते । तत्र भगवतापि मुनीनां पुरतस्तस्य व्रतनिश्चलता वर्णिता । स श्राद्धः सौधर्मस्वर्लोकेऽरुणाभविमाने चतुष्पल्योपमायुः परिपूर्य महाविदेहेषु मुक्तिं गमी । इत्युक्तं प्रोषधव्रतम् ॥११॥

अथातिथिसंविभागव्रतमुच्यते । तथाहि तिथिः पर्वादि लौकिकव्यवहारपरिहाराद् भोजनसमयोपस्थायी श्रावकस्यातिथिः साधुरुच्यते । तस्यातिथेः संगतो निर्दोषो न्यायमार्गागतानामाधाकर्मादिदोषरहिततया कल्पनीयानामन्नपानादीनां देशकालश्रद्धासत्कारक्रमयुक्तः पश्चात्कर्मादिदोषवर्जनेन विशिष्टो भाग आत्मानुविधेयं पौषधोपवासपारणके त्वतिथिसंविभागव्रतं नियमतः सत्यापनीयं सति संयतयतियोगे । तदयोगे तु दिगालोकः कार्यो भोजनसमये । उक्तं च श्रीउपदेशमालायां *पढमं जईणदाऊण० ॥१॥ साहूणकप्पणिज्जं० ॥२॥* अथ देशकालादीनां व्याख्या, यस्मिन् देशे यत् शाल्यादि द्रव्यमुत्कृष्टं यच्च हितं तत् साधूनां देयम् । एवं शीतोष्णादौ सुभिक्षुदुर्भिक्षादौ वा काले यद्धितं तद्देयम् । श्रद्धानुविशुद्धचित्ताध्यवसायरूपतया देयम् । सत्कारस्त्वऽभ्युत्थानासनदानवंदनानुव्रजनादिरूपस्तत्पूर्वं वितरणीयम् । क्रमस्तु पाकस्य पेयादि परिपाट्या विश्राणनम् । यथा श्राद्धेन नियमात् पौषधोपवासपारणके एतद्व्रतमासेवनीयं तथैतद्व्रताराधनाय स्वविभवानुमानेन वसति१शयना२शन३भक्त४पानौ५पध६वस्त्र७पात्रादि८दानं विधेयम् । यदुक्तं श्रीउपदेशमालायां *वसही सयणासणभत्तपाण० ॥१॥* तथा साधर्मिकवात्सल्यप्रतिवर्षनियमपूर्वसप्तक्षेत्रवित्तव्ययाद्येतत्व्रताराधनाय दर्शनदीप्तये च चिंत-

नीयम् । अस्मिंश्च व्रते सचित्तनिक्षेपणता १ सचित्तपिधानता २ कालातिक्रम ३ परव्यपदेश ४ मत्सरिता ५ रूपाः पंचातिचाराः प्रयत्नतः परिहार्याः । तत्र दानोचितस्याशनादेरदानबुद्ध्याऽतिक्रमादिभिरनाभोगेन मायया वा सचित्ते पृथिव्यादौ निक्षिपतः सचित्तनिक्षेपणता १, एवं सचित्तेन पिदधतः सचित्तपिधानता २ । साधूनामुचितो यो भिक्षाकालस्तस्मिन्ननागतेऽतिक्रांते वा भोजनं विदधतः कालातिक्रमः ३ । स्वकीयमप्यशनादि परकीयमिदमित्यभिदधतः परव्यपदेशः ४ । परोन्नतिवैमनस्यं मात्सर्यं यथा तेन निःस्वेनापि मुनीनां दत्तं तत् किमहमतोऽपि न्यून इति मात्सर्याद्ददतो मत्सरिता ५ । एवं पंचातिचारपरिहारपूर्वं व्रतमेतत् पालनीयम् । अत्र च श्रीविपाकश्रुतांगोक्तानि सुबाहुप्रमुखानि दश ज्ञातानि । तेषां यथा सुपात्रदानमाहात्म्यादुत्तमकुलोत्पत्तिनाऽरिशिवासिद्धिशिवशर्मप्राप्ति पर्यंता फलप्राप्तिः संभविनी तथाऽन्येषामपि सा संभविनी । यथा वा संगमगोपस्य घृतादिसमन्वितपरमान्नदानमाहात्म्यतः सत्कुलोत्पत्तिनृभवदेवभोगाद्यखिलचारित्रादानानुत्तरविमानोत्पादादिपर्यंता फलावाप्तिरभवत्तथाऽन्येषामपि सा भविनी । इत्युक्तं द्वादशं व्रतम् ॥१२॥

एतेषु पंचाणुव्रतानि त्रीणि च गुणव्रतानि यावत्कथितानि एकशः समाचान्यपि यावज्जीवं पालनीयानि । सामायिकादीनि चत्वारि शिक्षाव्रतानीत्वराणि तत्र प्रतिदिनानुष्ठेये सामायिकदेशावकाशिके पुनः पुनरुच्चार्येते इत्यर्थः । पौषधोपवासाऽतिथिसंविभागौ तु यथोक्तदिवसेषु नियमादनुष्ठेयौ । अन्यदा त्वनियतौ । एवमेवं द्वादशव्रतानां पंचपंचातिचाराः सप्तमव्रतस्य तु विंशतिः सर्वमीलने व्रतातिचाराः पंचसप्ततिर्भवंति ते च प्रयत्नतः परित्याज्याः ।

अथापश्चिममारणांतिकसंलेखनाजोषणाऽऽराधनीयाः । पंचातिचाराः प्रोच्यंते । तत्र पश्चिमैवापश्चिमा मरणमेवांतस्तत्र भवा मारणांतिकी संलिख्यतेऽनया तनुकषायादीति संलेखना तपोविशेषस्तस्या [illegible]

सम्यक्श्राद्धधर्ममाराध्य प्रांते संलेखनाकरणपूर्वमेवानशनप्रतिपत्तिर्विधेया। यतोऽसंलिखिततनुकषायस्यानशनप्रतिपत्तौ जात्वाऽऽर्त्तध्यानोत्पत्तौ गतिर्विनश्यति। तस्मात् संलेखना विधेया श्राद्धेनानशनात् पूर्वं सा च निरतिचारा कार्या। तस्याश्चेहलोकाशंसाप्रयोग१परलोकाशंसाप्रयोग२जीविताशंसाप्रयोग३मरणाशंसाप्रयोग४कामभोगाशंसाप्रयोग५रूपाः पंचातिचाराः परिवर्जनीयाः। तत्र इहलोको मनुष्यलोकस्तद्विषयाऽऽशंसाऽभिलाषस्तस्याः प्रयोगः। श्रेष्ठी स्यां नृपः सचिवो वा चेत्यादिरूपः १। एव परलोको देवलोकस्तत्र सुर-सुरपतिर्वा स्यामित्यादिरूपः २। जीविताशंसाप्रयोगस्तु कृतानशनस्यापि संघजनविधीयमाननानागीतगाननृत्यविधानबहुजनवंदनार्थसमागमनश्रीगुरुजनसिद्धांतश्रावण-विवेकिलोककल्पितोपश्लोकादिपूजादर्शनादनशने सत्यपि जीवितवाञ्छारूपः ३। कृतानशनस्य प्रागुक्तजनकृतपूजाऽयोगे तुदाद्यर्तिसंभवे वा मृतिवांछा मरणाशंसाप्रयोगः ४। कामो शब्दरूपगंधस्वरूपा भोगो तु रसस्पर्शौ तदाशंसाप्रयोगस्तु नंदिषेणवन्ममास्य तपसो माहात्म्यात् प्रेत्य सौभाग्यादि भूयादित्यभिलापरूपः ५। एवमेते पंचातिचारा संलेखनायां वर्जनीयाः। तथा श्राद्धैर्विधिवत् षोढा बाह्यं षोढाऽभ्यंतरं च तपः कार्यं यथाशक्ति। एवं द्वादश तपआचारविषया अतीचारास्त्याज्यास्तथा श्रीजिनोक्तक्रियायां मनोवचनतनुवीर्यगोपनरूपास्त्रयो वीर्याचारातिचाराः परिवर्ज्याः श्राद्धैस्तत्र श्राद्धोचितव्रतसामायिक-पौषधोपवाससप्तक्षेत्रवित्तव्ययतपःकष्टानुष्ठानधर्म्मध्यानादिविषये मनोवीर्यं न निगूहनीयम्। वचनबलं तु पठनगुणन-सद्गुरुमुखयथाश्रीजिनधर्मकथनयथायुक्ति-श्राद्धाद्यहितनिवारणादिविषये न गोपनीयम्। तनुबलं तु प्रतिक्रमणकायोत्सर्गविधनवैयावृत्त्ययतिजनविश्रामणाकरणविधिवत्क्षमाश्रमणदानप्रतिलेखनाविधानवंदनकदानजीवयतनानिमित्यादिविषये न गोप्यम्। एवं त्रयो वीर्याचारातिचारास्त्याज्याः। एवमष्टौ ज्ञानाचारस्य दर्शनाचारस्य चारित्राचारस्य,५चसम्यक्त्वस्य पंचसप्ततिर्द्वादशव्रतानां पंच संलेखनाया द्वादश तपआचारस्य त्रयो

वीर्याचारस्य एवं श्राद्धैश्चतुर्विंशतिशतमतीचाराः प्रयत्नतः परिहार्याः । एवं श्राद्धधर्मः । अस्य च श्राद्धधर्मस्य मूलभूतं द्वारभूतं प्रतिष्ठानभूतमाधारभूतं निधानभूतं च श्री सम्यग्दर्शनं शंकादिदूषणपंचकरहितमुपशमसंवेगादिपंचलक्षणलक्षितं कौशल्यतीर्थसेवादिपंचभूषणभूषितं यावज्जीवं धारणीयम् । तदनु पंचाणुव्रतानि मूलगुणरूपाणि त्रीणि गुणव्रतानि चत्वारि च शिक्षाव्रतान्युत्तरगुणरूपाणि यावज्जीवं पालनीयानि । अपरा श्राद्धैः प्रत्याख्याना१०भिग्रह४प्रभृतय एकोननवतिरुत्तरगुणा अखंडतया पालनीयास्ते च पूर्वसूरिकृता गाथया लिख्यंते, तथाहि 'पच्चक्खाणा१० निग्गह४ सिक्खा७ तव१२ पडिम११ भावणा१२ किरिया१ । धम्मो४ चिंता३ पूआ१७, गिहिउत्तरगुणगुणनउई ॥१॥' एतद् गाथाव्याख्यैतद् ग्रंथानुसारेण ग्रन्थांतरानुसारेण च स्व-मनीषया मनीषिभिः कार्या । एवं चाङ्गीकृतश्रीसम्यक्त्वमूलद्वादशव्रतेन श्राद्धेन नियमपूर्वमुभयकालं प्रतिक्रमणं विधेयम् । यतः सम्यक्त्वाणुव्रतादिमलिनताहेतुशंकादिबाधातिचारसंभवे करणीयानां च स्त्रीकृतत्रिकालश्रीजिनपूजनप्रत्याख्यानविधानादिनियमानां खंडने निगोदादिसूक्ष्मविचारणामश्रद्धानेऽनाभोगादिनोन्मार्गप्ररूपणे कृते प्रतिक्रमणं कृतं निलोक्यते । तस्मादुभयसंध्यं श्राद्धेन नियमात् प्रतिक्रमितव्यम् । यदुक्तं श्राद्धप्रतिक्रमणसूत्रे 'पडिसिद्धाणं करणे १ ।' अयं च श्राद्ध-धर्मो योग्यस्यैव देयो नत्वयोग्यस्य । योग्यत्वं चैकविंशतिगुणपरिष्ठस्य पंचत्रिंशद्गुणोपेतस्य वा भवेत् । तत्रैकविंशतिगुणाः संबोध सप्ततिका गाथाभिर्लिख्यंते । तथाहि—'धम्म-रयणस्स जुग्गो, अक्खुद्दो रूववं पगइसोमो । लोगप्पिओ अकूरो, भीरू असढो सदक्खिन्नो ॥१॥ लज्जालुओ दयालू, मज्झत्थो सोमदिट्ठिगुणरागो । सक्कहसुपक्खजुत्तो, सुदीहदंसी विसेसन्नू ॥२॥ वुड्ढाणुगो विणीओ, कयन्नुओ परहिअत्थकारी अ । तह चेव लद्धलक्खो इगवीसगुणो हवइ सड्ढो ॥३॥' पंचत्रिंशद्गुणास्तु श्रीयोगशास्त्रोक्ताः, 'न्यायसंपन्नविभवः, शिष्टाचारप्रशंसकः । कुलशीलसमैः सार्द्धं, कृतोद्वाहोऽन्यगोत्रजैः ॥ ४ ॥ पापभीरुः प्रसिद्धं च,

देशाचारं समाचरन् । अवर्णवादी न क्वापि, राजादिषु विशेषतः ॥४८॥ अनतिव्यक्तगुप्ते च, स्थाने सुप्रातिवेश्मिके । अनेकनिर्गमद्वार-विवर्जितनिकेतनः ॥४९॥ कृतसङ्गः सदाचारैर्मातापित्रोश्च पूजकः । त्यजन्नुपप्लुतं स्थान-मप्रवृत्तश्च गर्हिते ॥५०॥ व्ययमायोचितं कुर्वन्, वेषं वित्तानुसारतः । अष्टभिर्धीगुणैर्युक्तः, शृण्वानो धर्ममन्वहम् ॥५१॥ अजीर्णे भोजनत्यागी, काले भोक्ता च साम्यतः । अन्योऽन्याप्रतिबन्धेन, त्रिवर्गमपि साधयन् ॥५२॥ यथावदतिथौ साधौ, दीने च प्रतिपत्तिकृत् । सदानभिनिविष्टश्च, पक्षपाती गुणेषु च ॥५३॥ अदेशाकालयोश्चर्यां, त्यजन् जानन् बलाबलम् । वृत्तस्थज्ञानवृद्धानां, पूजकः पोष्यपोषकः ॥ ५४ ॥ दीर्घदर्शी विशेषज्ञः कृतज्ञो लोकवल्लभः । सलज्जः सदयः सौम्यः, परोपकृतिकर्मठः ॥५५॥ अन्तरङ्गारिषड्वर्गपरिहारपरायणः । वशीकृतेन्द्रियग्रामो, गृही धर्माय कल्पते ॥५६॥'' इति-श्लोकैर्वाच्याः । एवमुक्त-गुणगरिष्ठ एव श्राद्ध-धर्मस्य योग्यतामुपैति । योग्येनैव धर्म्मप्रतिपत्तिः कारापणीया । यथा यावज्जीवं तां निष्ठां नयति । इमां च देशविरतिं निरतिचारामाराध्योत्कर्षतः प्रथमसंहननवानच्युतं यावद् याति जघन्यतस्तु सौधर्मे सेवार्त्तसंहननवानपि । ततश्च्युतः पुनर्बोधिलाभं प्राप्नोति एवं परंपरया सर्वविरतिमपि ततश्च मोक्षम् । इत्युक्तं देशविरतिस्वरूपं तदुक्तौ च प्रपंचितं चारित्रम् ।

इति श्रीमत्तपागच्छालंकारहारभट्टारकघटाकोटीरहीरश्रीसोमजयसूरिशिष्यशिरोमणिश्रीइंद्रनंदिसूरिराज-विनेयाणुसिद्धान्तसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरमपर्यायश्रीऋषभदेशनाभिधायां तृतीयलहर्यां देशविरति-वर्णननामा संपूर्णः पंचमस्तरंगः ।

## तृतीयलहर्यां-षष्ठस्तरङ्गः

अथैतस्यामेव श्रीऋषभदेशनाभिधानायां तृतीयलहर्यां षष्ठस्तरंगः प्रारभ्यते । तत्र प्राक्तरंगत्रये चारित्रस्वरूपमुपवर्णितम् । चारित्रेण तु दुष्कर्मागमो निषिध्यते महातडागस्य जलागम इव सदागममार्गे निरुद्धे । भवकोटीसमुपार्जितं तु प्राक्तनं दुरितं तपसा विधिविहितेन क्षयमुपैति महासरसो नीरमिवाऽरघट्टघट्यादिभिरुदंचनेन सहस्रकरकरनिकरतापेन च । उक्तं च त्रिंशे श्रीउत्तराध्ययने—'जहा महातलागस्स, संनिरुद्धे जलागमे । उस्सिचणाए तवणाए, कमेणं सोसणा भवे ॥१॥ एवं तु संजयस्सावि, पावकम्मअणासवे । भवकोडिसंचिअं पावं, तवसा निज्जरिज्जई ॥ २ ॥' अतो हेतोरेतस्मिंस्तरंगे तपःस्वरूपं प्ररूप्यते । तच्च द्विविधं बाह्यमाभ्यंतरं च; प्रत्येकं षोढा । तत्र प्रथमं बाह्यतपसः षड्भेदाः प्ररूप्यंते । तथाहि अनशनं१ न्यूनोदरिका२ भिक्षाचर्या वृत्तिसंक्षेपापरनामिका३ रसत्यागः४ कायक्लेशः५ संलीनता६ च ।

तेष्वनशनं द्विविधमित्वरं यावत्कथिकं च । तत्रेत्वरं श्रेणि१प्रतर२घन३वर्ग४वर्गवर्ग५प्रकीर्णकतपो६भेदात् षड्विधम् । तत्र श्रेणिः पंक्तिस्तदुपलक्षितं तपः श्रेणितपस्तच्च चतुर्थादिक्रमेण क्रियमाणं षाण्मासिकतपोंतमवसेयम् । तत्र प्रथमं चतुर्थप्रत्याख्यानं पश्चात् पारणकं तदनुषष्ठमेवं द्विपर्यंता प्रथमश्रेणिः । एवं सपारणाश्चतुर्थषष्ठाष्टमैस्त्रिपर्यंता द्वितीया श्रेणिरेवं तावद् वाच्यं यावच्चतुर्थादारभ्य प्रांते षाण्मासिकतपःपर्यंतैकत्रिंशतैकोनाशीतितमा श्रेणिः । एतत् श्रेणितपः १ ।

अथ प्रतरतपः श्रेणिरेव श्रेण्या गुणिता प्रतर उच्यते, तदुपलक्षितं तपः प्रतरतपः। तत्र सपारणैश्चतुर्थषष्ठचतुर्थैर्द्विपर्यंत-
प्रतरतपः स्थापना।

| | |
|---|---|
| १ | २ |
| २ | १ |

एवं श्रेणिवत्त्रिपर्यंतादीन्यपि प्रतरतपांसि वाच्यानि। त्रिपर्यंत-प्रतरस्थापना एवं चतुष्पर्यंतादि

| | | |
|---|---|---|
| १ | २ | ३ |
| २ | ३ | १ |
| ३ | १ | २ |

प्रतराणामपि स्थापनाऽवसेया। एतत् प्रतरतपः।

अथ घनतपः पदचतुष्टयात्मक एव द्विपर्यंतप्रतरः पदद्वयस्वरूपया श्रेण्या गुणितो घनः स्यादागतमष्टौ। नवरं बाहुल्यतोऽपि पदद्वयात्मकत्वम् एवं सपारणैश्चतुर्थषष्ठषष्ठचतुर्थचतुर्थषष्ठषष्ठचतुर्थैर्घनतपसो द्विपर्यंतम्। अथ त्रिपर्यंतघनतपः नवपदात्मक एव प्रतरः पदत्रयात्मकया श्रेण्या गुणितस्त्रिपर्यंतो घनः स्यादागतं सप्तविंशतिरेवं सपारणैश्चतुर्थषष्ठाऽष्टमषष्ठाऽष्टमचतुर्थाऽष्टमचतुर्थषष्ठषष्ठाष्टम-चतुर्थाष्टमचतुर्थषष्ठचतुर्थषष्ठाष्टमाष्टमचतुर्थषष्ठचतुर्थषष्ठाष्टमषष्ठाष्टमचतुर्थैस्त्रिपर्यंतघनतपः। नवरं बाहल्यतोऽपि पदत्रयात्मकत्वम्। एवं चतुष्पर्यंतप्रभृतीन्यपि घनतपांसि वाच्यानि ३।

अथ वर्गतपः घन एव घनेन गुणितो वर्गतपः। यथाष्टपदात्मके द्विपर्यंत एव घनोऽष्टभिर्गुणितो वर्गतपो भवेच्चतुष्षष्टिपदसंख्यः। स्थापना एवं त्रिपर्यंतादीन्यपि वर्गतपांसि वाच्यानि एतद् वर्गतपः४। वर्ग एव वर्गेण गुणितो वर्गवर्गतपो यथा चतुष्षष्टि पदात्मको द्विपर्यंतो वर्गश्चतुष्षष्टिपदात्मकेनैव वर्गेण ताडितः षण्णवत्यधिकचतुःसहस्रपदात्मकं स्यादंकतो यथा ४०९६ एतावंति स पारणानि चतुर्थषष्ठानि द्विपर्यन्ते वर्गवर्गतपांसि एवं त्रिपर्यंतादीन्यपि वर्गवर्गतपांसि स्वमत्या भावनीयानि ५।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | २ | २ | १ | १ | १ | १ | २ |
| २ | १ | १ | २ | १ | २ | २ | १ |
| २ | १ | १ | २ | १ | २ | २ | १ |
| १ | २ | २ | १ | २ | १ | १ | २ |
| २ | १ | १ | २ | १ | २ | २ | १ |
| १ | २ | २ | १ | २ | १ | १ | २ |
| १ | २ | २ | १ | २ | १ | १ | २ |
| २ | १ | १ | २ | १ | २ | २ | १ |

षष्ठं तु प्रकीर्णतपस्तच्च श्रेण्याद्युक्तरचनारहितं शक्त्यपेक्षया विधीयमानं नैकविधम्। एतच्च नमस्कारसहितादारभ्य श्रीवीरतीर्थे पाण्मासिकतपोन्तं यथा कथंचित् विधीयमानम्। श्रीऋषभतीर्थे तु सांवत्सरिकतपोंतम्। अस्मिंश्च तपसि श्रीज्ञाताधर्मकथांगाऽन्तकृद्दशांगादिसूत्रोक्ता गुणरत्नसंवत्सरसिंहनिष्क्रीडितकनकावलीमुक्तावलीरत्नावल्येकावलीभद्रमहाभद्रसर्वतोभद्रमहासर्वतोभद्रादितपोभेदा अशठगीतार्थाचीर्णाश्च सर्वेऽपि तपोभेदा अंतर्भवंति। तेषां तु स्वरूपं ग्रंथतः सामाचारीतश्चाऽवसेयम्। अत्र गुणरत्नसंवत्सरस्तपसि स्कंदकमेघकुमारादयो दृष्टान्ताः, कनकावल्यादितपोभेदेषु कृष्णदयितादयो निदर्शनम्। गुणरत्नसंवत्सरादिके तु सूत्रोक्ते तपसि प्रायोऽनुक्रमोऽयं। 'पढमम्मि सव्वराम, पारणगं बीआए विगइवज्जं। तइअम्मि अलेवाडं, आयंबिलमो चउत्थम्मि॥१६॥' एतत् चतुर्विधमित्वरं तपः सावकांक्षं पारणके भोजनाभिलापसंभवात् इत्युक्तमित्वरमनशनम् १।

अथ यावत्कथिकानशनभेदा दर्श्यंते। तथाहि यावत्कथिकानशनं द्विविधं कायचेष्टामाश्रित्य सविचारम्१विचारं२च। तत्र सविचारं सकायचेष्टमनशनं द्वेधा भक्तप्रत्याख्यान१मिंगिनीमरणं२च। तत्राद्यं गच्छांतर्वर्त्ती श्रीगुरुदत्तालोचनो विधिवत् संलेखनां विधाय त्रिविधमाहारं प्रत्याख्याति। मरणोद्यतसंलेखनाविधिश्चायं बहूनि वर्षाणि श्रामण्यपर्यायमनुपाल्य नानादेशेषु विहृत्य बहून् जीवान् प्रतिबोध्य विनेयान्निष्पाद्य तदनु संलेखना विधेया यतिसत्तमैः। तत्र संलेखना त्रिविधा उत्कृष्टा१मध्यमा२जघन्या३ च। तत्रोत्कृष्टा द्वादशवार्षिकी, मध्यमा तु सांवत्सरिकी, जघन्या तु पाण्मासिकी। तत्र द्वादशवार्षिक्यां संलेखनायां प्रथमे वर्षचतुष्के विकृतित्यागः कार्यो निर्विकृतिकस्याचाम्लस्य वा विधानेन विचित्रतपसः पारणके द्वितीये चतुष्के षष्ठाष्टमादिविचित्रतपश्चरेत्। तत्र च पारणके संप्रदायः 'उग्गमविसुद्ध सव्वं, कप्पणिज्जं पारेइ' निशीथचूर्णौ तु 'अण्णे चत्तारि वरिसे विचित्तं तवं काउं आयंबिलेण पारेइ

*निव्विएण वा पारेइ'* इत्युक्तम् । एवं श्रीउत्तराध्ययननिर्युक्तावपि । अत्र च बहुश्रुता एवं वदंति उभयथापि करणे न दोषः । यतः सूत्रमपि प्रमाणभूतं निर्युक्तिनिशीथचूर्ण्यौ अपि प्रमाणभूते । तदनु नवमदशमवर्षयोश्चतुर्थप्रत्याख्यानं पारणके त्वाचामाम्लम् । तदनु वर्षार्द्धेनातिविकृष्टमष्टमादितपः कुर्यात् । तदनु संवत्सरार्द्धं विकृष्टमेव तपः कुर्यात् पारणके त्वाचामाम्लम् । द्वादशे तु वर्षे कोटीसहितमाचाम्लं कार्यं, काष्ठावग्रभागे प्रत्याख्यानाद्यंतकोणरूपे सहितेमिलिते यस्मिंस्तत्कोटीसहितम् । विवक्षितदिने प्रातराचामाम्लं प्रत्याख्याय तच्चाहोरात्रमाराध्य द्वितीयदिने आचामाम्लमेव विधत्ते ततो द्वितीयस्यारंभकोटिः प्रथमस्य तु पर्यंतकोटिरुभे-अपि मिलिते स्यातां यत्र तत्कोटी सहितं प्रत्याख्यानम् । अन्ये त्वेवमाहुरेकस्मिन् दिने आचामाम्लं विधाय द्वितीयेऽह्नि तपोंतरमनुष्ठाय पुनस्तृतीयवासरे आचामाम्लमेव विदधतः कोटीसहितं स्यात् । उभयार्थसंवादिनी चेयं गाथा *'पट्ठवणउ अ दिवसो, पच्चक्खाणस्स निट्ठवणेअ । जहि अंसमिति दुन्निवि तं भणइ कोडिसहिअं तु ॥ २ ॥'* एषो द्वादशवार्षिक्याः संलेखनाया विधिः प्रोक्तः । एवमन्ययोरपि तयोर्भावनीयः । एवं कृतसंलेखनः पक्षक्षपणमासक्षपणादिरूपतपसा त्रिविधमाहारं प्रत्याख्याति । यथा समयं च चतुर्विधमपि । अनशनप्रतिपत्तिसमये च श्रीगुरुमुखेन महाव्रतोच्चारं करोति यतिश्चेदखंडितचरितः खंडितचरितो वा भवेत् श्राद्धस्तु देशविरतोऽणुव्रतोच्चारं छिन्नस्वजनधनदेहादिममत्वस्तु संस्तारकदीक्षामपि प्रतिपद्यते । द्वादशवार्षिक्यां तु संलेखनायां द्वादशे वर्षे एष निशीथचूर्णिप्रोक्तसंप्रदायः *'तहा वारसमे वरिसे आहारं परिहावेइ जहा आहारसंलेहणा आउअं च समं निट्ठइ वारसमस्स वासस्स पच्छिमा जे चत्तारि मासा तेसु तिल्लगंडूसं निसिद्धं धरेउं खेलमलुए निच्छुभइमाअइरुक्खत्तणउ मुहजंतवि संवाउभविस्स'* इति तस्य *'वि संवाए नो सम्मं नमुकारमाराहेइ'* इत्युक्तं संक्षेपेण भक्तप्रत्याख्यानं विस्तरार्थिना तु भक्तपरिज्ञाप्रकीर्णकं विलोकनीयम् । कृतभक्तप्रत्याख्यानस्तु समास्तृतमृदुसंस्तारकः

समुत्सृष्टशरीरोपकरणममत्वः स्वयमेवोच्चारितनमस्कारः पार्श्वस्थसाधुदत्तनमस्कारो वा गत्वा गत्वा स्वयमेवोद्वर्तते च अजितिरिक्तायां चान्यैरपि कारयत्युद्वर्तनादिकं १ ।

अथेङ्गिनीमरणमुच्यते । तथाहि गीतार्थः यतिः शुद्धस्थण्डिले एकचतुर्विधाहारप्रत्याख्यानः प्रतिपत्तिं करोतीङ्गिनीमरणस्य स च स्थण्डिलस्यान्तश्छायाया उष्णं उष्णतश्च छायां स्वयं संक्रामति उद्वर्तनादि च स्वयमेव विधत्ते २ । इमे द्वे अपि सविचारे । उद्वर्तनादिकायाः चापचेष्टायाः संभवात् । अविचारं तु पादपोपगमनं, तत्र देवगुरून्नत्वा गर्त्तादि चतुर्विधाहारप्रत्याख्यानं विधाय महाशाखी गिरिकन्दरादिषु दण्डायतादिस्थानस्थित उद्वर्तनादिक्रियाभावात् पादपविशेषः प्रतिपद्यते यतिः । स च दिव्यमानुष्यतैर्यग्योनिकरूपमहाघोरबहिर्विविधोपसर्गसंभवेऽपि नाङ्गं मनागपि चालयति । एतद्द्वयोः चापचेष्टाया अभावात् । अथवा सपरिकर्माऽपरिकर्मभेदतो द्विविधमनशनम् । तत्र सह परिकर्मणा निषदनशयनादिना विश्रामणादिना च यद् वर्तते तत् सपरिकर्म । तच्च प्रागुक्तप्रत्याख्यानेङ्गिनीमरणरूपम् । तत्राद्ये परिकर्म स्वयं करोति परेण कारयति १ । द्वितीयं तु स्वयमेव विधत्ते । एतद्विपरीतं त्वपरिकर्म तच्च पादपोपगमनं यद्वा परिकर्म संलेखना सा यत्रास्ति तत् सपरिकर्म तद्विपरीतं त्वपरिकर्म तत्र व्याख्याता प्रथमपर्यन्तं सूत्रार्थाभिधनिष्ठितो निष्पादितशिष्यो संलेखनापूर्वमेव करोति यतिः अन्यथार्त्तध्यानसंभवः । यदुक्तं '*देहंमि असंलिहिए, सहसा धाऊहिं खिज्जमाणेहिं । जायइ अट्टज्झाणं सरीरिणो चरमकालंमि ॥ १ ॥*' व्याघाते तु पर्वतपतनसर्पदंशाग्निदाहादिरूपे संलेखनां विनापि इत्युक्तं यावत्कथिकमनशनं २ । इत्युक्तमनशनं १ ।

अथ न्यूनोदरिकास्वरूपमुच्यते तथाहि यो यस्य भोजनाहारस्तस्मान्न्यूनतां किमपि भोजनं कुर्वतो न्यूनोदरिका स्यात् । तत्र

नरस्य द्वात्रिंशत्कवला आहारप्रमाणं सूत्रे गीयते वनितायास्तु वसुविंशति(२८)मिताः। यदुक्तं *'बत्तीसं किर कवला, आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए, अट्ठावीसं भवे कवला ॥ १ ॥ कवलाण य परिमाणं, कुक्कुडिअंडगपमाणमित्तं तु। जो वा अविगिअवयणो, वयणम्मि छुहिज्ज वीसत्थो ॥ २ ॥* एवमुक्तप्रमाणान्न्यूनन्यूनतरमाहारं गृण्हतो न्यूनोदरिका भवेत्। एवं तावद् वाच्यं यावत् प्रांते एकमेव सिक्तं भुज्यते। इत्युक्तं संक्षेपेण न्यूनोदरिक्यं तपः। विशेषार्थिना श्रीउत्तराध्ययनादिसूत्राणि विलोकनीयानि २।

अथ भिक्षाचर्यापरनामकप्रवृत्तिसंक्षेपतपःस्वरूपं प्ररूप्यते। तथाहि—अष्टविधाग्रगोचरस्तथा सप्तैषणा द्रव्यक्षेत्रकालभावाभिग्रहाश्च वृत्तिसंक्षेपतपः कीर्त्यते। तत्राष्टविध आधाकर्मादिनिखिलदोषपरिहारेणाग्रः प्रधानो गोचरः, अष्टविधत्वं त्वेतस्यैवं पेटा१ऽर्द्धपेटा२गोमूत्रिका३पतंगवीथिका४ऽभ्यंतरशंबूका५बहिःशंबूका६ऋज्वा७यतगमनप्रत्यागमनरूपा८ऽष्टविधा भिक्षाचर्या भवेत्। तत्र पेटिकेव चतुष्कोणा पेटा, यथा पेटा चतुरस्रा भवति एवं यस्यां भिक्षाचर्यायां चतुरस्रगृहपंक्तौ गम्यते सा पेटा १। पेटार्द्धसंस्थानसंस्थिताऽर्द्धपेटा भावनीया प्राग्वत् २। एवं गोमूत्रिकेव चक्रसदनपंक्तौ यस्यां गम्यते सा गोमूत्रिका ३। एवं पतंगोड्डयनसदृशा पतंगवीथिका। यथा पतंग उड्डीयोड्डिय याति एवं यस्यां बहूनि गृहाणि विमुच्यैकस्मिन्नेकस्मिन् गृहे गम्यते सा पतंगवीथिका ४। शंबूकः शंखस्तद्वदावर्त्तो यस्यां सा शंबूकावर्त्ता, तत्र यस्यां शंखाकाररूपे गृहसमुदये मध्याद् भिक्षामाददानैर्बहिर्गम्यते साऽभ्यंतरशंबूका ५। तद्विपरीता तु बहिःशंबूका ६। ऋज्वी तु यथासंप्रदायं वाच्या ७। आयतगमनप्रत्यागमनं रूपायास्त्वेवं संप्रदायः *'ऋजुअं गंतूण निअट्टइ ८।'* सप्तैषणाश्चेमाः *'संसट्ठ१मसंसट्ठा२उद्धड३तह अप्पलेविआ ४चेव। उग्गहिआ५पग्गहिआ६उज्झिअधम्मा७य सत्तमिआ ॥ १ ॥'* आसां तु स्वरूपं प्रागुक्तं नात्र पुनः प्रतन्यते। द्रव्याभिग्रहस्त्विदमेव चेद् द्रव्यं दाता दास्यति तदा पारयिष्ये नान्यथेति नानाद्रव्यविषयः १।

क्षेत्राभिग्रहस्तु ग्रामनगरराजधानीनिगमाकरपल्लीखेटकर्वटद्रोणमुखपत्तनमटंबसंबाधाश्रमपदविहारसन्निवेशसमाजघोषस्थलीसेना-स्कंधावारसार्थप्रभृतिक्षेत्रविषय एकग्रामादिसदनविषयस्तदेकदेशविषयो वा । तत्र ग्रसति गुणान् गम्यो वाऽष्टादशकराणामिति ग्रामः । नात्र करोऽस्तीति नगरम् । राजाऽनया धीयते इति राजधानी, राज्ञः पीठिकास्थानम् । निगमः प्रभूतवणिग्निवासस्थानम् । आकरो हिरण्याद्युत्पत्तिस्थानम् । पाल्यन्ते दुरितविधायिनो जना अनयेति पल्ली । प्रांतजननिवासस्थानं धूलिप्राकारपरिक्षिप्तं खेटम् । कर्वटं कुनगरम् । द्रोण्यो नावो मुखमस्येति द्रोणमुखं, जलस्थलनिर्गमप्रवेशं, यथा भृगुकच्छादि । पत्तनं द्विधा, जलपत्तनं स्थलपत्तनं च । तत्र जलपत्तनं जलान्तस्थं पत्तन स्थलपत्तनं तु स्थलान्तःस्थ मथुरावत् । परितः सर्वदिक्ष्वर्द्धतृतीययोजनमध्ये ग्रामो नास्ति तत् मटंबम् । संबाधशब्देन प्रभूतचतुर्वर्णनिवासस्थान निगद्यते । आ समंतात् श्राम्यंति तपः कुर्वंत्यस्मिन्नित्याश्रमस्तापसावसथादिस्तदुपलक्षितं पद्रं स्थानमाश्रमपदम् । विहारो देवगृहं भिक्षुनिवासस्तत् प्रधानो ग्रामादिरपि विहारः । सन्निवेशो यात्रायातजननिवासः । समाजः पथिकजनसमूहः । घोषो गोकुलं । स्थल्युच्चभूभागरूपा । सेना चतुरङ्गसैन्यस्कंधावारस्तु तद्रचनाविशेषः । सार्थस्तु गणिमादिभृतवृषभादिसंघातः । अहं ग्राम एव नगर एव राजधान्यामेव वाऽशनादि ग्रहीष्ये एवं निगम एवेत्याद्यपि वाच्यम् । एवं ग्रामादिविषयक्षेत्रविषयोऽभिग्रहः क्षेत्राभिग्रहः । अथ चैकस्मिन् सदने यल्लभिष्याम्यथवा गृहद्वये यल्लभ्यं तद् ग्रहीष्ये इत्यादि गृहसंख्याविषयोऽप्यभिग्रहः क्षेत्राभिग्रहः । गृहैकदेशविषयस्तु गृहद्वारे देहल्यां वा स्थिता चेद्दात्री दास्यति तदा ग्रहीष्ये नान्यथेत्यादिगृहैकदेशविषयोप्यऽभिग्रहः क्षेत्राभिग्रहः १२ ।

अथ कालाभिग्रहस्वरूपं प्रोच्यते । तथाहि साधोरुत्सर्गतस्तृतीया पौरुषी गोचरचर्याकालः, शेषस्त्वकालो यदुक्तं श्रीसामाचार्य-

ध्ययने *'तइआए पोरिसीए, भत्तपाणं गवेसए । छण्हमण्णयरागम्मि, कारणम्मि उवट्ठिये ॥१॥'* अपवादपदे तु चत्वारोऽपि प्रहरा गोचरचर्यासमयः, यदुक्तं श्रीकल्पसूत्रे *'छट्ठभत्तिअस्स भिक्खुस्स कप्पंति दो गोअरकाला । अट्ठमभत्तिअस्स भिक्खुस्स कप्पंति तओ गोअरकाला, विगिट्ठभत्तिअस्स भिक्खुस्स कप्पंति सव्वेवि गोअरकाला; भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा ।'* एवमाद्यपवादपदे तु चत्वारोऽपि यामा गोचरचर्याकालः । उत्सर्गतस्तु तृतीया पौरुषी । तस्यां च चतुर्घटिकासावशेषायां त्रिघटिकासावशेषायां, द्विघटिकासावशेषायां वाऽऽहारं गृहीष्ये नान्यदेति प्रभृतिकः कालाभिग्रहः ३ ।

अथ भावाभिहस्वरूपं प्रोच्यते । तथाहि नरो नारी वा तिलकांगदमुद्रिकादिकं कुंडलकनककंकणहारार्द्धहारनूपुरादिकं वाऽलंकारं परिधायाऽपरिधाय वा चेद् दास्यति तथा गृहीष्ये नान्यथेति भावाभिग्रहः । एवं बालस्तरुणो वृद्धो वा नर एवंविधा वनिता वा चेद्दास्यति तदा लास्ये इत्ययमपि । एवं कृष्णो गौरः पीतो नीलो रक्तवर्णो वा नर एके द्वे त्रीणि चत्वारि पंच वा वस्त्राणि परिधाय दास्यति तदैव गृहीष्ये, एवं वशाविषयेऽपि वाच्यम् । एवं हसन् रुदन् गायन् कूपितो वा चेद्दाता दात्री चैवंविधा वितरिष्यति तदाऽहमाहारं विहरिष्ये इत्यमपि भावाभिग्रहः । एवं साधुना दिने दिने यथाशक्ति द्रव्यक्षेत्रकालभावविषया अभिग्रहा ग्राह्याः । यतो जीतकल्पे प्रायश्चित्तं प्रोक्तमभिग्रहग्रहणाभावे ।

अत्र चतुर्विधाभिग्रहग्रहणे भगवान् श्रीवर्द्धस्वामी निदर्शनं तदभिग्रहस्वरूपं तु पूर्वसूरिविहितवृत्तेनैव लिख्यते । तथाहि—
*पृथ्वीनाथसुता भुजिष्यचरिता, जंजीरिता मुंडिता, क्षुत्क्षामा रुदती विधाय पदयोरंतर्गता देहलीम् । कुल्माषान् प्रहरद्वयव्युपरमे, चेत् शूर्पकोणे स्थितान्, दद्यात् पारणकं तदा भगवतः, सोऽयं महाभिग्रहः ॥१॥* अत्र द्रव्यभिग्रहस्तु सूर्पकोणस्थितकुल्माषविषयः १ । क्षेत्रा-

मयं समयमऽतिवाहयतिस्म कियंतम् । अन्यदा च भगवान् श्रीमन्महावीरो ग्रामानुग्रामं विहरन् समवसृतस्तस्यां नगर्यां सहस्राम्रवणे । वनपालकवदनाज्जिनागमनं निशम्य तस्य वर्द्धापनिकां दत्वा जितशत्रुनृपः सपौरजनो निर्ययौ श्रीवीरवंदनकृते । भगवद्वंदनेन स्वं धन्यं कर्त्तुमना धन्योऽपि निर्ययौ निजपरिकरपरिकरितः । सर्वेऽपि यथाविधि जगन्नाथमभिवंद्य यथास्थानं निविष्टाः । तदा च भगवता निर्मिता सुकृतदेशना भवनिर्वेदनिदानम् । तां च निशम्य स समुत्पन्नपरमवैराग्यो विज्ञपयांबभूव भगवंतमेवम् । 'भगवँस्तत्रभवतां भवतां वचोभिरवगतं मया यथास्थितं भवनाटकस्वरूपम् । तेन जननीमापृच्छ्य स्वीकरिष्ये श्रीपूज्यपादानां समीपे श्रामण्यमगण्यगुणनिधानं निर्वृतिस्थानं गंतुमनाः ।' इति तेनोक्ते भगवतोक्तं 'यथा सुखं, परं तत्र गतेन त्वया प्रतिबंधो न विधेयः ।' तदनु स सवित्रीसविधौ गत्वा स्वचित्तभावमाविश्चकारनिर्विकारमनाः । साऽपि तं बहुप्रकारैर्निवारयामास तद्विषये । तेनापि युक्तिप्रतियुक्तिभिर्निरुत्तरीकृता सा जितशत्रुनृपं विज्ञपयामास । नृपेणापि तच्चरितांगीकारविषयं निश्चयमवधार्य महाविभूत्या निष्क्रमणमहश्चक्रे तस्य थावच्चासुतस्येव वासुदेवेन । यस्मिन्नेव च दिने धन्येन श्रामण्यमंगीकृतं तस्मिन्नेव दिवसे भगवंतमभिवंद्य विज्ञपयामास स एवं 'भगवन्निच्छामि भवद्भिरनुज्ञातो यावज्जीवं षष्ठप्रत्याख्यानं विधातुं, षष्ठस्यापि पारणके मम कल्पते आचाम्लप्रायोग्यं नेतरत्, तदपि च संसृष्टं नत्वसंसृष्टं, तदप्युज्झितधर्मकं नत्वनुज्झितधर्मकं, तदपि च यदन्ये बहवः श्रमणब्राह्मणातिथिकृपणवनीपकादयो नेच्छंति' इति तेनोक्ते भगवतोक्तं 'यथासुखम्' । एवं स धन्यर्षिर्भगवतानुज्ञातः स्वीकरोत्यभिग्रहं यथोक्तम् । तदा च स धन्यर्षिः प्रथमषष्ठपारणके प्रथमपौरुष्यां स्वाध्यायं विधत्ते, द्वितीयपौरुष्यां तु ध्यानं, तृतीयपौरुष्यां तु गौतमस्वामिवद्भगवंतमापृच्छ्य काकंद्यां नगर्यामुच्चनीचमध्यमकुलेषु भिक्षायै पर्यटति । तदा च प्रागुक्ताभिग्रही स धन्यर्षिः काकंद्यां पर्यटन् यदि भक्तं पर्याप्तं प्राप्नोति तदा न पानकं तादृशम् ।

अथ चेत् पानं तदा न भक्तम् । तथाप्यदीनचित्तः सम्यगेषणायामुद्युक्तो यथाप्राप्तं सामुदानिकं भैक्षमादाय काकंद्या बहिः सहस्राम्रवने भगवदन्तिके समागत्य श्रीगौतमस्वामिनदीर्यापथिकीं प्रतिक्रम्य गमनागमने आलोच्य भक्तपानके स दर्शयतिस्म भगवतः । तदनु भगवतानुज्ञातोऽरक्तद्विष्ट स तद् विधिना भुङ्क्तेस्म । भुक्त्वा संयमेन तपसा चात्मानं भावयन् विहरति । तदा चाऽन्यदा कदाचिद् भगवान् श्रीवर्द्धमानस्वामी काकन्दीपुर्या निजद्वारान्यत्र जनबोधनकृते । धन्यर्षिश्च भगवता समर्पितः स्थविराणां द्विविधशिक्षाशिक्षणकृते । स चैकादशाङ्गान्यधीतवान् स्थविराणामन्तिके । अधीत्य च संयमतपोभ्यामात्मानं भावयन् विहरति धन्यर्षिश्च तेनोदारेण तपसा कृश तनुरतीव समभूत् । तत्कृशतावर्णनं च श्रीअनुत्तरोपपातिकाङ्गाक्षरैरेव लिख्यते । तथाहि—

'धण्णस्स णं अणगारस्स पादाणं अयमेयारूवे तवरूवलावण्णे होत्था । से जहा णाम ते सुक्कछल्लीति वा कट्ठपाउआति वा जरग्गओवाहणाति वा, एवामेव धण्णस्स अणगारस्स पादा सुक्का लुक्खा णिम्मंसा अट्ठिचम्मछिरत्ताए पण्णायति णो चेव णं मंससोणिअत्ताए । धण्णस्स णं अणगारस्स पादंगुलिआणं अय० से जहा णामते कलसंगलिआति वा मुग्गमाससंगलिआति वा तरुणिआ छिण्णा उण्हे दिण्णा सुक्का समाणी मिलायमाणीर चिट्ठति, एवामेव धण्णस्स अणगारस्स पादंगुलिआतो सुक्कातोजाव णो सोणिअत्ताए । धण्णस्स णं जंघाणं अयमे०, से जहा काकजंघाति वा कंकजंघाति वा देणिआलिजंघाति वा जाव णो सोणिअत्ताए । धण्णस्स णं जाणूणं अय०, से जहा कालिपोरेइ वा मऊरपोरेइ वा देणिआलिआपोरेति वा एवं जाव णो सोणिअत्ताए । धण्णस्स णं ऊरूणं से जहा०, सामकरेल्लेति वा बोरीकरील्लेति वा सल्लइ० सामलि० तरुणए० छिन्ने उण्हे जाव चिट्ठति, एवामेव धणस्स ऊरू जाव णो सोणिअत्ताए । धण्णस्स कडिपट्टयस्स अय०, से जहा०, उट्टपदेति वा जरग्गपदेति वा महिसपदेति वा जाव णो सोणिअत्ताए । धण्णस्स उदरभायणस्स अय०, से जहा सुक्क-

दतिएति वा भज्जणयकभल्लेति वा कट्ठकोलंवएति वा एवामेव धण्णस्स उदरं सुक्के भुक्खं निम्मंसं अट्ठिचम्मच्छिरत्ताए पणायति णो चेव णं मंससोणिअत्ताए । धण्णस्स पांसुलिकंडयाणं अय०, से जहा थासयावलीति वा पाणावलीति वा मुंडावलीति वा० धण्णस्स० पिट्ठिकरंड-याणं अय०, से जहा०, कन्नावलीति वा वट्टयावलीति वा एवामेव०, धण्णस्स उरकडयस्स अय०, से जहा चित्तकट्टरेति वा विअणपत्ते-ति वा तालिअंटपत्तेति वा एवा मेव० । धण्णस्य बाहाणं अय०, से जहा नामए समिसंगलिआति वा वाहायासंगलिआति वा आगत्थि असंग एवामेव । धण्णस्स हत्थाणं अय०, से जहा सुक्कछगणिआति वा वडपत्तेति वा पलासपत्तेत्ति वा एवामेव० । धण्णस्स हत्थंगुलिआणं अयमेवारूवे से जहा नामए कलायसंगलिआति वा समिसंगलिआति वा मुग्गमाससंग० तरुणीआ०, छिन्ना आतवे दिन्ना सुक्का समाणी एवामेव० । धण्णस्स गीवाए अय०, से जहा करगगीवाइ वा कुंडिआगीवाति वा उच्चट्ठवणएति वा एवामेव० । धण्णस्स हणुआए अय०, से जहा लाउअफलेति वा हकुवफलेति वा अंबगट्ठआति वा एवामेव० । धण्णस्स उट्ठाणं अय०, से जुहा सुक्कजलोआति वा सिलेसगुलि-आति वा अलत्तगुलिआति वा एवामेव० । धण्णस्स जिब्भाए अय०, से जहा वडपत्तेति वा उंवरपत्तेति वा पलासपत्तेति वा सागपत्तेति वा एवामेव० । धण्णस्स णासाए अय०, से जहा अंबगपेसिआति वा अंबाडगपेसिआति वा मातुलिंगपेसिआति वा तरुणिआए एवामेव० । धण्णस्स अच्छीणं अय०, से जहा वीणाछिड्डेति वा वद्धीसगछिड्डेति वा पाभातिअतारगति वा एवामेव० । धण्णस्स कण्णाणं अय०, से जहा मूलाच्छल्लिआति वा वालुंकछल्लीइ वा कारेल्लाछल्लीइ वा एवामेव० । धण्णस्स सीसगस्स अय०, से जहा तरुणगलाउएति वा तरुणगए-लालुएति वा सिण्हालतेति वा तरुणए जाव चिट्ठति एवामेव धण्णस्स अणगारस्स सीसं सुक्कं जाव णो सोणितत्ताए । धण्णेणं अणगारेणं सुक्केणं भुक्खेणं पातजंघोरुणा विगततडिकरालेणं कडिकडाहेणं पिट्ठिमिस्सितेणं उदरभयणेणं जोइज्जमाणेहिं पांसुलिअकडएहिं अक्खसुत्तमाला

ति वा गणिज्जमाणेहिं पिट्ठिकरंडगसंधीहिं गंगातरंगभूतेणं उरकडगदेसभाएणं सुक्कसप्पसमाणेहिं बाहाहिं सिढिलकडालीविव चलंतेहिं (लंबंतेहि) अग्गहत्थेहिं, कंपणवातिओ विव वेवमाणीए सीसघडीए, पव्वायवदणकमले, उब्भडघडामुहे, उव्वुड्डणयणकोसे जीवं जीवेणं गच्छति जीवं जीवेणं चिट्ठति, भासंभासिस्सामित्ति गिलाइ, भासं भासमाणे गिलाइ, भासं भासित्ता गिलाइ, से जहा णामए इंगालसगडिआति वा जहा खंदओ जाव हुतासणे इव भासरासिपलिच्छन्ने भासुरतरेणं तेणं तवतेअसिरीए उवसोभेमाणे उवसोभेमाणे चिट्ठति।'

अथ च स धन्यर्षिरेवं कृशीकृततनुर्भगवता श्रीवीरेण समं विहारं कुर्वन् समाययौ राजगृहनगरे। तदा च श्रेणिकनृपतिर्भगवंतमागतं निशम्य सपौरजनो ययौ वंदनार्थम्। तदा च भगवता निर्मिता धर्मदेशना। तां च निशम्य पौरजनो ययौ यथास्थानम्। श्रेणिकस्तु भगवंतमभिवंद्य विज्ञपयामास 'भगवँश्चतुर्दशश्रमणसहस्रेषु कतमो मुनिर्महादुष्करकारको महाकर्मनिर्जरी च?', भगवानाऽऽचख्यौ 'धन्यर्षिः', श्रेणिकेनोक्तं 'कस्माद्', भगवानाह तस्य श्रामण्यग्रहणप्रभृतिनिखिलस्वरूपम्। तच्च समाकर्ण्य हृष्टतुष्टचित्तः श्रेणिकनृपः श्रीवीरमभिवंद्य धन्यर्षिसमीपे ययौ। तत्र च गत्वा प्रदक्षिणात्रयकरणपुरस्सरं तमभिवंद्यैवमवदत् नृपः 'त्वं धन्योऽसि कृतार्थोऽसि समासादितं च भवता मनुजजन्मजीवितफलमिति तं स्तुत्वाऽभिवंद्य च भगवत्समीपे गत्वा भगवंतं च नत्वा ययौ यथागतं नृपतिः। धन्यर्षेरन्यदा कदाचिद्धर्मजागर्यां कुर्वाणस्यैवं मनःसंकल्पः समुत्पेदे यदहमनेन तपसाऽतीव कृशतनुरभूत्तेन भगवंतमापृच्छ्य करोमि चतुर्विधाहारपरिहारमिति निश्चित्य भगवंतमापृच्छ्य स्थविरैः समं विपुलगिरिमारुह्य मासं कृतानशनो नवमासान् श्रामण्यमनुपाल्य सर्वार्थसिद्धमहाविमाने समुत्पन्नः सुरतया। ततश्च्युतो विदेहेषु मोक्षंगमी। एवं यथा धन्यर्षिणाऽनशनादितपश्चतुष्कं कृतं तथाऽन्यैरपि साधुसिंहैस्तद्विधेयम्। इत्युक्तं रसत्यागतपःस्वरूपम् ४।

अथ कायक्लेशतपःस्वरूपमुच्यते, तथाहि पर्यंकवीरासनादीन्यासनानि लोचादिकारणं च कायक्लेशतपः कीर्त्यते । तानि चेमानि पर्यंकासनं वीरासनं च ज्ञानासनं पद्मासनं भद्रासनं दंडासनं उत्कटिकासनं गोदोहिकासनं कायोत्सर्गासनं एतानि श्रीयोगशास्त्रोक्तानि अपराण्यपि शास्त्रांतरोक्तानि गरुडासनादीन्यप्यासनानि विज्ञेयानि । पर्यंकासनादीनां तु स्वरूपं श्रीयोगशास्त्रोक्तश्लोकैरेव लिख्यते, तथाहि— "स्याजंघायोरधोभागे, पादोपरिकृते सति । पर्यंको नाभिगोत्तानदक्षिणोत्तरपाणिकः ॥ १ ॥ वामोऽह्रिर्दक्षिणोरूर्ध्वं, वामोरूपरि दक्षिणः । क्रियते यत्र तद् वीरोचितं वीरासनं स्मृतम् ॥२॥ पृष्ठे वज्राकृतीभूते, दोर्भ्यां वीरासने सति । गृह्णीयात् पादयोर्यत्रांगुष्ठौ वज्रासनं हि तत् ॥३॥ सिंहासनाधिरूढस्यासनापनयने सति । तथैवावस्थितिर्या तामन्ये वीरासनं विदुः ॥४॥ जंघाया मध्यभागे तु, संश्लेषो यत्र जंघया । पद्मासनमिति प्रोक्तं, तदासनविचक्षणैः ॥५॥ संपुटीकृत्य मुष्काग्रे, तलपादौ तथोपरि । पाणिकच्छिपिकां कुर्याद्, यत्र भद्रासनं हि तत् ॥६॥ श्लिष्टांगुली श्लिष्टगुल्फौ, भूश्लिष्टोरू प्रसारयेत् । यत्रोपविश्य पादौ तद्दंडासनमुदीरितम् ॥७॥ युतपार्ष्णिसमायोगे, प्राहुरुत्कटिकासनम् । पार्ष्णिभ्यां तु भुवस्त्यागे तत्स्याद् गोदोहिकासनं ॥८॥ प्रलंबितभुजद्वंदमूर्ध्वस्थस्याऽऽसितस्य वा । स्थानं कायानपेक्षं यत्, कायोत्सर्गः स कीर्त्तितः ॥ ९ ॥' अत्र कायोत्सर्गासनमासनधिकारात् प्रोक्तं परं कायोत्सर्गस्त्वंतरतपोभेदेषु वक्ष्यते । अत्र कायक्लेशतपसि गुणरत्नसंवत्सरं कुर्वाणाः स्कंदककुमारप्रभृतयो दृष्टांताः । तत्स्वरूपं तु सूत्रादवसेयम् । इत्युक्तं कायक्लेशतपः ५ ।

अथ संलीनतातपःस्वरूपं प्ररूप्यते तथाहि संलीनता चतुर्द्धा इंद्रियसंलीनता१, कषायसंलीनता२, योगसंलीनता३, विविक्तचर्यासंलीनता ४ । तत्रेन्द्रियसंलीनता पंचेंद्रियगुप्ततारूपा । अस्यां च श्रीस्थूलभद्रमुनिर्निदर्शनं तेन हि कोशावेश्यासदनस्थितेन तथेंद्रियाणि

गुणानि यथाऽतिनिपुणयापि तया हावभावादिभिर्न वशीकृतानि । साधुना हि सम्यग्जीवपतनानिधानस्वगुरूपदेशसमाकर्णनपटनगुणन-निनपैयावृत्त्यप्रभृतिधर्मिजनोचितरातहिता हतुक्रिया निमित्तिविषये निजेन्द्रियाणि प्रवर्तनीयानि । निजगुणस्तुतिपरनिदाविकथाऽकृत-निमन्त्रणाद्याकर्णनसुरूपनरनारीशरीरावयवनेपथ्यालङ्कारनगरग्रामशोभानृपतिनिर्गमप्रवेशाडम्बरवरसौधाद्युत्तमपरिजनापि रूपकासारदीघि-कोद्यानश्वतारगिरिकन्दरपुष्पितफलिततरुमालाद्यालोकनधनसारकस्तुरिकाकेतकादिसुरभिवस्तुसौरभ्याघ्राणदधिदुग्धपक्वान्नतीमनप्रभृतिसर-सतमाहारसमास्वादनतूलिकापल्यङ्कमस्तारकोत्तरपट्टातिरिक्तसस्तारकशयनशीतसमयनिर्गतभ्यानोष्णकालसनात्प्रदेशशयनोपविशनसुकु-मालनानाविधवस्तुस्पर्शरूपपञ्चप्रकारविषयप्रवीचारविषये यथाक्रमं श्रोत्रनेत्रनासारसनास्पर्शनरूपाणि पञ्चेन्द्रियाणि निवर्तनीयानि अमनो-ज्ञेन्द्रियार्थेषु च न निवर्तनीयानि । एव च निधीयमाने पूज्यता सर्वेन्द्रियाणाम् । उक्तं च श्री उपदेशमालायां 'निहयाणि हयाणि अ, इंदिआणि घाएण पयत्तेण । अहिअत्थे निहयाइं हि, अकज्जे पूअणिज्जाइं ॥१॥' इत्युक्ता करणसंलीनता १ ।

अथ कषायसलीनता प्रोच्यते तथाहि क्रोधमानमायालोभरूपचतुष्कषायाणां दुर्गतिहेतुत्वं विभाव्य तदुदयनिवारणं कषाय-सलीनता । तत्र क्रोधसलीनतायां चण्डरुद्राचार्यविनेयो निदर्शनम् । तत्कथा चैवम्—

उज्जयिन्यां चण्डरुद्रसूरयोऽतिरोषणतया यतिभ्यः पृथक् स्थिता मा भून्मम रोषोत्पत्तिरिति हेतोः । अथ च कश्चिदिभ्यसुतु-र्नवपरिणीतो दुर्ललितगोष्ठीपरिवृत समाजगाम मुनिसमीपे । तदा च हास्यप्रियैस्तन्मित्रैरुक्तम्, 'अयं श्रामण्यं जिगृहीषुस्तेनैन प्रव्राजयत ।' मुनिभिरपि शठा एत इति विज्ञाय दर्शिता आचार्याः 'इमेऽस्माकं गुरव' इति । गतास्तत्समीपं ते तत्रापि तदेवोक्तं तैः । गुरुभिरपि रोषगतया प्रोक्तं ढौकयतास्य शिरसि भूतिं, तैरपि तथाकृते ... ... ...

... ...या लोचः', विलक्षीभूतास्ते तत्स्वजनभयाद् गता

निजसदनेषु । विनयेनोक्तं यावन्मम स्वजना नायांति तावदन्यत्र गम्यते, गुरुभिरुक्तं 'निशि नाहं पश्यामि, तेन गच्छ त्वं मार्गं च निरीक्ष्याऽऽगच्छ ।' कृतं तथा तेन प्रवृत्तौ तौ निशि मार्गे नम्नोन्नतप्रदेशस्खलने सूरेः समभूद्रोपप्रबलप्रकर्षः 'अरे दुष्टशैक्षक ! किं भवतेदृग् विलोकित'मित्यादि रुषा वदँस्तं ताडयामास शिरसि दंडेन । तदा च विनेयश्चिंतयामास 'हहा ! मंदभाग्येन महात्माऽसौ कीदृक्संकटे पातित' इति । एवं गुरुणा पुनः पुनस्ताडनेऽप्यात्मनिंदापरस्य शुक्लध्यानोपगतचित्तस्य तस्य समुत्पन्नं केवलं ज्ञानम् । तथा च सूरिं सम्यग्मार्गेण नेतुं प्रवृत्तः प्रभाते च लोहितलिप्ततनुं तं निरीक्ष्य सूरिश्चिंतयामास 'अहोऽस्याभिनवदीक्षितस्यापि कीदृग्विध उपशमः । मम तु कीदृग् मुधा कोपानलत्व'मित्याद्यात्मनिंदापरमसंवेगमुपगतस्य सूरेरपि समुत्पेदे पंचमावबोधः । इति श्रीउपदेशमालाकथानके । श्री आवश्यकबृहद्वृत्तौ तु प्रतिक्रमणसंग्रहिण्यामिदमेवम् । तथाहि 'चंडरुद्दो आयरिओ उज्जेणिं बाहिरगामातो अणुज्ञाणपेक्खओ आगओ सो अतीवरोसणो तत्थ समोसरणे गणिआघरविहेडितो जातिकुलादिसंपण्णो इब्भादारओ सेहो उवट्ठितो तत्थ अण्णेहिं असद्दहंतेहि चंडरुद्दस्स पासे पेसिओ ऽकलिणा कलीघस्सउत्ति सो तस्स उवट्ठितो तेण सो ताहे चेव लोअं काओ पव्वावितो पच्चूसे गामं वच्चं ताणं पुरतो सेहो लट्ठितो चंडरुद्दो पच्छरे आवडितो रुट्ठो सेहं दंडेण मत्थए अभिहणंति कथं ते पच्छरोण दिट्ठित्ति सेहो सम्मं सहइ आवस्सयवेलाए रुधिरापालित्तो दिट्ठो चंडरुद्दस्स तं पासिऊण मिच्छामिदुक्कडत्तिवेरग्गेण केवलनाणं उप्पण्णं सेहस्स वि कालेण केवलणाणमुप्पण्णं । अत्र च कथानके श्रीउपदेशमालावृत्तेरावश्यकबृहद्वृत्तेश्च भेदो दृश्यते, तन्निर्णयस्तु केवलिगम्यः ।

मानसंलीनतायां तु बाहुबलीदृष्टान्तोऽन्वयव्यतिरेकाभ्याम् । तेन हि प्रथमं मानो यदा कृतस्तदा वार्षिकतपसापि नापत् स केवलज्ञानम् । यदा तु श्रीऋषभदेवप्रेपितब्राह्मीसुंदरीवचनेन मानस्त्यक्तस्तदोत्पाटिते पदे पंचमावबोधी स समभूत् ।

अथ मायासंलीनतायां श्रीकालिकाचार्यकथा। तथाहि तुरुमण्यां दत्तनामा द्विजन्मा नृपमंत्रीसामंतान् वशीकृत्य जितशत्रुनृपं निष्काश्य स्वीकृतराज्यो यागाननेकान्निष्टितवान्। अन्यदा च तन्मातुलः श्रीकालकसूरिस्तत्र समवसृतस्तदंतिके च गतो दत्तनृपः सपरिवरो वदनार्थं, गत्वा च तेन पृष्टं यज्ञफलम्। गुरुराह 'अहिंसासाध्यो धर्मः'। स प्राह 'यज्ञफलं ब्रूहि' गुरुभिरुक्तं 'हिंसादुर्गतिहेतुः' स अवोचत् 'किमिदं शुद्धमार्गेणे वृंताकरूर्षप्रायमप्रस्तुतभणनं' गुरुरूचे चेदेवं तर्हि 'निरयगतिर्यज्ञफलं' तेनोक्तं 'किमत्राभिज्ञानम्' आचार्यैरुक्तं 'सप्तमे दिवसे वदननिपतिताऽशुचिबिंदुकुंभीपाके पक्ष्यसीत्यभिज्ञानं' स प्राह 'त्वं क्व गमिष्यसि' गुरुरवोचत् 'कृतसुकृतः स्वर्लोकमहं गमिष्ये' ततः स क्रोधाक्रांतो नरान् गुरुनिरोधकृते नियुज्य प्रमार्जितनिखिलराजमार्गः केनापि नाशुचिव्युत्सर्गो विधेयो राजमार्गे इत्युद्घोषणां विधापयित्वा स्थितः शुद्धांते। सप्तमेऽह्न्यष्टमदिनभ्रांत्या हन्मि तं दुष्टमुनिमिति विचिंत्य राजमार्गे गच्छतस्तस्यास्येऽतिवेगाक्रांतमालिकृतकुसुमस्थगिताशुचिलवः पतितस्तदास्वादादुत्पन्नप्रत्ययो मृतिभयभीतः प्रवृत्तो निवर्तितुं ततो विरक्ततया सज्जीकृतजितशत्रुनृपतेः पुनर्दुग्रहो भविष्यतीति निभृत्य सामंतैर्बध्वा सह सारमेयैः कुंभे प्रक्षिप्तो विलापपरो महाक्लेशेन मृतो गतो निरयं गुरवस्तु सम्यक्पालितश्रामण्यपर्याया जग्मुः स्वर्लोकम्। यथा श्रीकालकाचार्यैर्दत्तप्रश्ने मायां विमुच्य सम्यगुक्तं तथाऽन्यैरपि माया त्याज्या सर्वत्र इत्युक्ता मायासंलीनता।

अथ लोभसंलीनता प्रोच्यते तथाहि लोभमहासमुद्रः संतोषसेतुबंधेन प्रसरन्निवारणीयः सुकृतार्थिना कपिलकेवलिनेव। तत्कथा चैवं कौशाम्ब्यां जितशत्रुनाम्ना नृपेण काश्यपद्विजन्मनि निधनमुपगते तदधिकारोऽपरद्विजस्य प्रदत्तः। अन्यदा च स विप्रः साडंबरं व्रजन् काश्यपदयितया जयाख्यया ददृशे। तं दृष्ट्वा च सौधदयिताधिकारमन्यत्र गतं वीक्ष्य सा तारस्वरं रुरोद। तदा च काश्यपसुतः

कपिलः पितृपरगमनरूपं सवित्रीरोदननिदानं निश्चित्य विद्यापठनार्थं गतः श्रावस्त्यां तातमित्रेंद्रदत्तद्विजांतिके, भणितश्च शालिभद्रव्य-वहारिणा स नित्यकशनादिकृते । तत्र भणन् परिवेषणादिकारिदास्या समं लग्नस्तत्प्रेरणात् धनकमाषद्वयार्थं धनश्रेष्ठिसदनेऽतिप्रभाते गच्छन्नारक्षकैर्धृत्वा नृपस्यार्पितः । नृपप्रश्ने सद्भावोक्तौ तुष्टेन तेन स प्रोक्तो यत्ते मतं तद् याचस्व तदन्वशोकवनिकांतः किं मार्ग-यामीति चिंतयतः कोटिं यावदिच्छावर्द्धने समायातसंवेगो जातिं स्मृत्वा स्वयं संबुद्धः कचलोचं विधाय संनिहितदेवतादत्तलिंगो नृपपु-रतः समागत्य गाथामिमामवादीत्स मुनिः । 'जहा लाहो तहा लोहो, लाहा लोहो पवड्ढई । दोमासकयं कज्जं, कोडीए वि न निट्ठियं॥१॥ तदनु स विजहार वसुंधरायाम् । अन्यदा च स केवलीजातोऽष्टादशयोजनमानायामटव्यां पंचशतमितान् बलभद्रादीनिक्कडदासा-ख्या-विख्यातांश्चौरान् बोधयितुं गतः । स्तेनैश्चोक्तं 'भो यतेः! नृत्यस्व' तदनु स 'अध्रुवे असासयम्मी'त्यादि ध्रुवकं श्लोकांतरे २०, गायन्नृत्यति तस्कराश्च तालान् कुट्टयंतः केचिदाद्यश्लोके, केचित् द्वितीयश्लोके, एवमध्ययन-समाप्तौ परिसर्वेऽपि प्रतिबुद्धाः श्रामण्यमंगी-चक्रुः । एवं कपिलकेवलिवल्लोभसंलीनता विधेया । इत्युक्ता कषायसंलीनता २ ।

अथ योगसंलीनता प्रोच्यते । तथाहि योगा मनोवचनतनुरूपास्तत्संलीनता तु विजयनृपवद् विधेया । तत्संबंधश्चैवं विजय-वर्द्धनपुरे विजयनामा नृपस्तत्पट्टदेवी चंद्रलेखा श्रमणोपासिका । तदुपदेशतत्संगाभ्यां भूपेनापि प्रतिपन्नो जिनधर्मः । अन्यदा विशा-लापतिना चंद्रलेखागुणसमाकर्णनसमुत्पन्नप्रेम्णा दूतः प्रेषितस्तत्प्रार्थनकृते । विजयेन च दूतोऽपमानितः । कुपितो विशालापतिः । सर्व-बलेन चलितो विजयकृते । विजयोऽपि सैन्यं सज्जीकृत्य संमुखं समेतः । परस्परं समरे प्रहारजर्जरिततनुर्विजयः संग्रामभूमेर्निर्गत्य पंचमौष्टिकं कचलोचं निर्माय समात्तश्रामण्यापिहित-सर्वाश्रवस्थिततरतनूत्सर्गेण । तदा च विगलल्लोहितगंधनिर्गतपिपीलिकाभिश्चालिनी-

तुष्पछलयपा सप्तमदिनेऽयहत्त्वेश्वली जातः । चंद्रलेखाऽपि तदाकर्ण्य शीलरक्षणकृते रहो निर्गत्य संयति समीपे गत्वा श्रामण्यमादाय देवलोकमगमत् । यथा विजयनृपेण योगसंलीनता तनूत्सर्गेण कृता तथान्यैरपि मोक्षार्थिभिर्विधेया ३ ।

अथ विविक्तचर्यासंलीनतास्वरूपं कथ्यते । तथाहि—एकांते वनितापशुपंडकाद्यापातावस्थितिविरहिते शयनासनसेवनं विविक्तचर्यासंलीनता प्रोच्यते । उक्तं च श्रीउत्तराध्ययने 'एगंतमणावाए, इत्थीपसुविवज्जिए । सयणासणसेवणया, विवित्तं सयणासणं ॥' अत्र च बलदेवविदुराहरणम् । स हि रूपालोकनव्याक्षिप्तचित्तवनिताकुंभभ्रांतिकीरर्भकंठरज्जुबंधनरूपं निजरूपापराधं निरीक्ष्य कृतवानरण्यप्रवासस्थितिमभिग्रहपूर्वम् । एवं यथा बलदेवेन विविक्तचर्या कृता तथाऽपरैरपि कार्याऽयं यतिषु दृष्टांतः, श्राद्धेषु तु राज्याधिष्ठायकपथमरनप्रतिमास्थायी सुदर्शनश्रेष्ठी निदर्शनं सागरचंद्रो वा । तत्रथा द्वैधे द्वारिकायां बलदेवसुनुः सागरचंद्रस्य नभःसेनप्रदत्तकमलामेलाकन्यारूपं चित्रलिखितं नारदेन दर्शितम् । तद्दर्शनात् प्ररूढप्रेमातिरेकस्य सर्वं जगत् कमलामयमेव पश्यतस्तस्य लोचने शांबेन स्थगिते हास्यविधिना । तदा च सोऽवोचत् 'मुंच मां कमलामेले' तदा च शांबेनोक्तं 'नाहं कमला, किंतु कमलामेलः' तदा च गावपानीभूतेन तेन शांबमुखलग्न प्रोक्तं चेदेवं तर्हि 'मीलय त्वं कमलामेलां' शांबेन चिंतितं वचनच्छलेऽहं पतितस्तन्निर्वाहणीयं स्ववचनमिति निश्चित्य विवाहलग्नागता सा तेन सह विवाहिता ललनोद्याने शांबेन । तत्प्रभृति सागरचंद्रोपरि प्रद्विष्टो नभःसेनस्तच्छिद्राणि मार्गयते । अन्यदा श्रीअरिष्टनेमिस्वामिसमीपे प्रतिपन्नाणुव्रतः सागरचंद्रस्तीव्रतरसंवेगात्स्थो तनुत्सर्गेण स्मशानसमीपे दृष्टश्च स नभःसेनेन, चिंतितं च कालेऽपि वधूवैरमिति निश्चित्य तन्मूर्ध्नि मृदा पालिं बध्वा पूरितं तत् खादिरांगारैः । सागरचंद्रोऽप्यचलितसत्त्वो धर्मध्यानं ध्यायन् गतः स्वर्गम् । यथाऽनेन श्राद्धेन सता विविक्तचर्या कृता तथान्यैः श्रमणैः श्रमणोपासकैश्च विधेया । इत्युक्तम्

*'इंदिअकसायजोगे, पडुच्च संलीणया मुणेअव्वा । तह जा विवित्तचरिआ, पन्नत्ता वीअरागेहिं ॥१॥'*

विविक्तचर्यासंलीनता । अत्र सूत्रगाथा–

इत्युक्तं षोढा बाह्यं तपः ६ ।

अस्मिन्नेव च तपसि श्रीआवश्यकाद्युक्तानि दशप्रत्याख्यानान्यंतर्भवंति तानि च नमस्कारसहितप्रभृतीन्यनागतप्रभृतीनि वा । तत्र नमस्कारसहितं घटिकाद्वये पूर्णे नमस्कारे कथिते पूर्यते १ । द्वितीयं पौरुषीप्रत्याख्यानं पौरुष्यां पूर्णायां पौरुषीभणनात् सार्द्धपौरुष्यपि ग्राह्या २ । तृतीयं पूर्वार्द्धप्रत्याख्यानं पूर्वार्द्धं यावत्; पूर्वार्द्धभणनादपार्द्धप्रत्याख्यानमपि संग्रहीतम् । एतानि नमस्कारसहितप्रभृतीनि प्रत्याख्यानानीत्वरेऽनशनेऽतर्भवंति ३ । तुरीयपंचमे एकाशनैकस्थानरूपे । तत्रैकाशनमेकवारभोजनरूपम् ४ । एकस्थानमप्येवं नवरं कवलक्षेपादिकार्यवर्जनांगोपांगचालनवर्जनरूपम् ५ । इमे द्वे अपि प्रत्याख्याने वृत्तिसंक्षेपेऽतर्भवतोऽभिग्रहविशेषरूपत्वात् । एकाशनभणने द्व्यशनमपि संगृहीतम् । षष्ठमाचाम्लं तत्तु रसत्यागेऽतर्भवति ६ । सप्तममभक्तार्थरूपं तदपीत्वरेऽनशनेऽतर्भवति ७ । अष्टमं चरिम-प्रत्याख्यानं दिनपाश्चात्यप्रहरचतुर्विधाहारपरिहाररूपं तदपीत्वरेऽनशनेऽतर्भूतम् ८ । नवममभिग्रहप्रत्याख्यानं कवलदत्त्यादिसंख्या-रूपं तदपि वृत्तिसंक्षेपांतर्गतं ९ । दशमं विकृतिपरित्यागरूपं निर्विकृतिकं तदपि रसत्यागांतर्गतम् १० । अत्र गाथा *'नवकारसहियपो-*

*रिसिपुरिमड्ढेगासणेगठाणे अ । आयंबिलअभत्तट्ठे चरिमे अ अभिग्गहे विगई ॥१॥*

अथाऽनागतप्रभृतीनि प्रत्याख्यानानि श्रीआवश्यकनिर्युक्तिसार्द्धगाथया लिख्यंते । तथाहि *'अणागय१मइक्कंत२कोडीसहिअं३*

*निअंटिअं चेव४ । सागार५मणागारं६परिमाणकडं७निरवसेसं ॥१॥ संकेअं९चेव अद्धाए१०पच्चक्खाणं तु दसविहं ।* व्याख्या-अनागत-विधानादनागतं पर्युषणचतुर्मासकादावाचार्यग्लानतपस्विप्रभृतिवैयावृत्यकरणांतरायनिवारणायाऽऽरत एव तत्तपोविधानम् १ । एवमति-

ग्राने पर्युषणादौ गणादतिक्रान्तम् २ । कोटीभ्यां सहितं कोटीसहितं मिलितोभयप्रत्याख्यानकोटी, चतुर्थं विधाय पुनरुग्गतं चतुर्थमेव विधत्ते इत्यादि च । नियमयत्ने ग्लानत्वे वा यावदायु प्रतिज्ञातदिने हौ पश्चिमपूर्वे विधीयते तन्नियन्त्रितम् । इदं तु प्रथमसंहनन एव साधत तु व्यवच्छिन्नं तदा तु चतुर्दशपूर्विणो जिनकल्पिका अपरे स्थविरा अपि कृतवन्तः ४ । सहमाकारैर्महत्तरादिभिर्यद् वर्त्तत तत् साकारम् ५ । एतद् विपरीतमनाकारम् । एतच्च कान्तारदुर्भिक्षादौ सप्रयोजनस्य साधोः संभवेत् पर दावेगुल्यादनाभोगात्सहसा वा वदने प्रक्षिप्तेऽनेनैव आकारावुच्चायौं ६ दत्तिप्रभृतिभिर्विहितप्रमाणं कृतपरिमाणम् ७ । निरवशेषं तु समस्ताशनादि परित्यागविषयम् ८ । संकेतप्रत्याख्यानं पुनरङ्गुष्ठमुष्टिसाहृतादिभेदेन सांकेतिकम् । अयं भावः पूर्णेऽपि पौरुष्यादिप्रत्याख्याने श्रमणः श्रमणोपासको वा यावन्न भुङ्क्ते न तत् किमपि संकेतमभिगृह्णाति यतो न युज्यते प्रत्याख्यानरहिततया क्षणमपि स्थातुम् । ततोऽङ्गुष्ठं यावन्न मुञ्चामि तावन्मे प्रत्याख्यानम् । एवं यावन्मुष्टिं ग्रन्थिं वा न छोटयामि, यावद् गृहं वा न प्रविशामि, यावत् स्वेदो वा न शुष्यति यावद् वा एतावंत उच्छ्वासाः, यावद् वा पानीयमञ्चिकायामेतावन्तः स्तिबुका जलबिन्दवो न शुष्यन्ति, यावद् वा दीपोऽयं प्रज्वलति, तावत् मया न भोक्तव्यम् । एवमनेकप्रकारं संकेतप्रत्याख्यानमवसेयम् ९ । अद्धा कालस्तद्विषयं तु प्रत्याख्यानं पौरुषीपूर्वार्द्धप्रभृतिकं १० । एतेष्वनागतातिक्रान्तप्रत्याख्यानेऽनशनेऽन्तर्भवतः । कोटीसहितनियन्त्रिते अपि चतुर्थादिरूपेऽनशनेऽन्तर्भवतः । निर्विकृतिगाचाम्लरूपे तु रसत्यागे । एकाशनैकस्थानरूपे त्वभिग्रहप्रत्याख्याने । साकारं तु किंचिदनशने किंचिद् वृत्तिसंक्षेपे किंचिद् रसत्यागे । अनाकारं त्वनशने कृतपरिमाणं त्वभिग्रहे निरवशेषं त्वनशने । संकेतप्रत्याख्यानमप्यनशने । एवमद्धाप्रत्याख्यानमपि । एवं द्वेधाऽपि दशप्रत्याख्यानानि षड्विधे बाह्यतपस्यन्तर्भवन्ति । एतस्य षड्विधस्य बाह्यतपसो माहात्म्येन नानाविधा आमर्षौषधिप्रभृतयो

*'जं आमोसहि विप्पोसहीओ संभिन्नसोअयमुहाओ । लद्धीओ*
प्रभृतिलब्धयः समुत्पद्यंते प्राणिनां दुरापतमाः । यदुक्तं पुष्पमालायां
*हुंति तवसा, दुलहा सुरवराणं पि ।* किं बहुना तत् किमपि कार्यं त्रैलोक्ये नास्ति यन्न तपसा विधिविहितेन न सिद्ध्यति । उक्तं च—
*'पायाले सुरलोए नरलोए वा वि नत्थि तं कज्जं । जीवाणं जं न सिज्झइ, तणेव विहिणाणुचिन्नेणं ।* सार्वभौमा अपि मागधवरदाम-
प्रभासतीर्थाद्यधिपतीन् देवाँस्तपसैव साधयंति । तथाहि दिव्याद्युपसर्गा अपि तपसा निराक्रियंते, यथा कृष्णद्वीपायनाऽसुरोपसर्गो
द्वारिकायाः । तथा तपसा कंपितासनाः सुपर्वाणः साधयंति नराणां कार्याणि, यथाऽभयकुमारस्यैकस्तंभधवलगृहविरचनम् । तथा
तपसा चित्तेष्टं सर्वं संपद्यते धम्मिल्लस्येव, षाण्मासिकाचाम्लतपसा नृपाऽमात्यादिसुतद्वात्रिंशत्-कन्यापरिणयनेन चेतोऽभिमतभोग-
सुखावाप्तिः एतदैहिकं तपसः फलं, पारलौकिकं तु स्वर्लोकसुखावाप्तिः सार्वभौमादिपदवीप्राप्तिः परंपरया निखिलकर्मक्षयान्मोक्षसुखावाप्तिश्च ।
एतच्च तपो निर्निदानं विधेयं, सनिदानं तु ब्रह्मदत्तचक्रिजीवस्य संभूतस्यैव न भवेत् शिवसुखसाधकम् । निर्निदानं तु संजायते
इषुकारनरपतिभृगुपुरोहितादीनामिव शिवसुखसाधकम् । तस्मान्निर्निदानमेव तपः कार्यमहार्घ्यसुखार्थिना सुकृतिना । एतच्च तपो नेह-
लोककृते कार्यं, नापि परलोककृते, न च कीर्तियशःकृते, किं तु कर्मनिर्जरार्थमेव विधेयम् । इदं च तपः संयमेन समं कार्यं तं
विना तपसो निरर्थकत्वात् । यदुक्तं *'नाणं चरित्तहीणं लिंगग्गहणं च दंसणविहीणं । संजमहीणं च तवं जो चरइ निरत्थयं तस्स ॥१॥*
अनेन च विधिविहितेन तपसा किं न सिद्ध्यति यदुक्तं 'यद्दूरं यद्दुराराध्यं० ॥१॥' तस्माद् षड्विधमिदं बाह्यं तपो विधिवद् विधेयं
इति प्रपंचितं किंचिद् बाह्यतपःस्वरूपम् ।

## तृतीयलहर्यां सप्तमस्तरङ्गः ।

अथैतस्यामेव ऋषभदेशनाभिधानायां तृतीयलहर्यां सप्तमस्तरंगः प्रस्तूयते । तत्र षष्ठतरंगे बाह्यतपःस्वरूपं प्ररूपितं, अत्र त्वाभ्यंतरतपःस्वरूपमुपवर्ण्यते । तथाहि आभ्यंतरमपि तपः षड्विधं प्रायश्चित्त१विनय२वैयावृत्त्य३स्वाध्याय४ध्यानो५त्सर्ग६भेदात् । तत्र प्रायश्चित्तं दशविधमालोचन१प्रतिक्रमण२मिश्र३विवेक४व्युत्सर्ग५तप६श्छेद७मूला८ऽनवस्थाप्य९पारांचिक१०भेदतः । तेष्वा-मर्यादया 'जह बालो जंपतो' इत्यादिरूपया लोचनं गुरोः पुरतो दुष्कृतानां स्ववचसा प्रकटीकरणमालोचनम् । एतावन्मात्रेणैव यस्य पातकस्य शुद्धिस्तदालोचनार्हं तद्विशोधिकरं प्रायश्चित्तमप्युपचारादालोचनार्हम् । एवं सर्वत्र भावनाकार्या । आलोचनार्हं त्वाहारोच्चारादिकार्ये कुलगणसंघादिका वा हस्तशताद् बहिर्गमनप्रभृतिकम् १ । प्रतिक्रमणं मिथ्यादुष्कृतदानं, तेन यत् शुद्ध्यति तत् प्रतिक्रमणार्हं, तदर्हं तु यथा सहसाऽनुपयुक्तेन किंचित् प्रक्षिप्तं न तु प्राणिघातादिकं कंचन दोषमापन्न इत्यादिकमन्यदपि मिथ्यादुष्कृतमात्रेणैव यच्छुद्ध्यति । न तु गुरोः पुरत आलोच्यते तत् प्रतिक्रमणार्हम् २ । मिश्रं त्वालोचनप्रतिक्रमणार्हरूपं यत्कंचनाऽतिचारं प्रतिसेव्य गुरोः पुरत आलोच्यते तदुपदेशेन च विशोधिकृते मिथ्यादुष्कृतं दीयते तदाऽऽलोचनप्रतिक्रमणार्हम् । तदर्हं तु सहसाऽनाभोगादिना संभ्रमभयादिभिर्वा सूक्ष्मेषु सर्वव्रतातिचारेषु इष्टानिष्टेषु शब्दादिषु मनसा रागद्वेषं गमने वा विज्ञेयम् । एवमन्यदप्यालोचनाग्रंथोक्तम् ३ । विवेकार्हं त्वशु-

पयोगादिनाऽशुद्धाहारादिकं गृहीतं तच्च विधिना परित्यज्यत्येतावतैव शुद्ध्यति यत्तद् विवेकार्हम् ४। व्युत्सर्गः कायोत्सर्गस्तदर्हं तु दुःस्वप्नादिकं तनुकायोत्सर्गेण शुद्ध्यति ५। यस्मिन् प्रतिसेविते निर्विकृतिकप्रभृतिषाण्मासिकान्तं तपो दीयते तत्तपोऽर्हम् ६। यथा शेषाङ्गरक्षार्थं व्याधिग्रस्तमङ्गं छिद्यते, एवं व्रतशेषपर्यायरक्षणाकृते अतीचारानुमानेन दूषितः पर्यायो यत्र छिद्यते तच्छेदार्हम्। इदं च तपोगर्वितस्य तपस्यक्षमस्य तपोदुर्दमस्य वा तादृग्विधेऽतीचारे समागते सति दीयते ७। यस्मिन् प्रतिसेविते सर्वव्रतपर्यायमपनीय पुनर्महाव्रतारोपणं विधीयते तन्मूलार्हम् ८। यस्मिन् प्रतिसेविते उत्थापनाया अयोग्यतया यावदनाचीर्णविशिष्टतपास्तावदनवस्थाप्यो विधीयते आचीर्णतपास्तु पुनर्महाव्रतेषु स्थाप्यते तदनवस्थाप्यार्हमेतदुपाध्यायप्रभृतेर्भवति ९। लिंगक्षेत्रकालतपोभिर्बहिष्कृतस्तपसाऽपराधस्य पारमंचति, ततो दीक्ष्यते यः स पारांची, पारांच्येव पाराचिकः। यत्र प्रतिसेविते पाराचिकः क्रियते तत् पाराचिकम्। एतदाचार्यस्यैव स्यात्। एतेषु तपोऽनवस्थाप्यस्तप.पारांचिकश्च प्रथमसंहनन एव व्यवछिन्नः, शेषाः पुनर्लिंगक्षेत्रकालैरनवस्थाप्याः पारांचिकाश्च यावत्तीर्थं भविष्यति १०।

अथ ये केचनाविदितश्रीमदागमरहस्या इत्थं प्रतिपादयंति नास्तीदानीं प्रायश्चित्तं न संति च तद्दातारश्चारित्रिणो गुरवस्तन्निराकरणं श्राद्धवृहजीतकल्पगाथाभिरेव विधीयते। तथाहि—'जो भणइ णत्थि इण्हि, पच्छित्तं तस्स दायगा वावि। सो कुव्वइ संसारं, जम्हा सुत्ते विणिद्दिट्ठं ॥१॥ सव्वंपि अ पच्छित्तं, नवमे पुव्वम्मि तइअवत्थुम्मि। तत्तोच्चि अ निजूढं, थेरेहिं सुविहिअहिअट्ठा ॥२॥ तम्मि धरंते अज्झवि तह धारे अ कह तुमं भणसि। वुच्छिन्न पच्छित्तं तद्दायारो अ जा तित्थं ॥३॥' अनेन च विधिविहितेन प्रायश्चित्तेन निरतीचारः सन् रत्नत्रयमाराध्य सिद्धिगामी भवेद् भवी। यदुक्तमेकोनत्रिंशे श्रीउत्तराध्ययने पायच्छित्तकरणेण भंते जीवे किं जणयइ ? पायच्छित्त-

*करणेणं पावकम्मविसोहिं जणयइ, निरईआरे आवि भवइ, सम्मं च णं पायच्छित्तं 'पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ, आयारं*
करणेणं पावकम्मविसोहिं जणयइ, निरईआरे आवि भवइ, सम्मं च णं पायच्छित्तं ' पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ, आयारं
च आयारफलं च आराहेइ ।' एतद् व्याख्या पायच्छिनत्ति प्रायश्छित्तं वा विशोधयतीति निरुक्तया प्रायश्चित्तमालोचनादि । तस्य
करणेन पापकर्मणां विशोधिरभावस्तां जनयति । ततश्च मार्गो ज्ञातावाप्तिनिदानं सम्यग्दर्शनं तं च तत्फलं च मुक्तिमाराधयति ।
तस्माच्छुद्ध्यर्थिना विधिवदालोचनादिप्रायश्चित्तं विधेयं, यश्च विधिवद् विदधाति प्रायश्चित्तं स आराधकः श्रीगौतमस्वामिवत्तथाहि–
अन्यदा कदाचित् श्रीगौतमगणभृत् षष्ठक्षपणपारणके वाणिजग्रामे उच्चनीचमध्यमकुलेषु यथाप्राप्तं भक्तपानं समादाय ततः प्रतिनिवृत्तः
कोल्लाकसन्निवेशस्य समीपे व्रजन् बहुजनस्यांतिके एवमाकर्णयामास यद् भगवतः श्रीवर्द्धमानस्वामिनोऽतेवासी आनंदनामा श्रमणोपासकः
कृतश्राद्धप्रतिमः पौषधशालायां विहितचतुर्विधाहारपरिहारो विहरति जीवितमृत्यनवकांक्षी । एतन्निशम्य तदवलोकनकृते गतः श्रीगौत-
स्तदंतिके तदा चानंदश्राद्धः श्रीगौतममागतं निरीक्ष्य हृष्टतुष्टमनास्तमभिवंद्यैवमवादीत्, 'भगवन्नहमेतेनोदारेण तपसा कृशीकृततनुर्न
शक्तोऽस्मि तत्रभवतां भवतां समीपे समागत्य स्वीयशिरसा त्रिश्चरणाभिवंदनं विधातुं, तेनात्र पादाववधारयंतु भवंतः सौवेच्छया यथा
मस्तकेन त्रिः श्रीपूज्यपादपादवंदनं विदध्याम्,' इत्यानंदेन विज्ञप्ते श्रीगौतमस्तदंतिके समाजगाम । तदा चानंदः श्रीगौतमपदौ त्रिः
स्वीयमूर्ध्नाऽभिवंद्य प्रश्नयामास 'भगवन् ? देशविरतस्य समुत्पद्यतेऽवधिसंदर्शनम्' श्रीगौतमः प्राह 'समुत्पद्यते ।' चेदेवं 'तदा ममापि
समुत्पन्नमवधिज्ञानं प्राग् दक्षिणतः पश्चिमतश्च लवणार्णवे पंचयोजनशतमितं क्षेत्रं जानामि पश्यामि; उत्तरतस्तु क्षुल्लहिमवत्पर्वतं यावत्,
ऊर्द्ध्वं तु सौधर्म्मस्वर्लोकं यावत्, अधस्तु चतुरशीतिसंवत्सहस्रस्थितिकनैरयिकं लोलाख्यनिरयावासकं यावत्' इति तेनोक्ते श्रीगौतमः-
प्राह 'आनंद ? समुत्पद्यते गृहिणोऽवधिस्तदावरणकर्मणः क्षयोपशमेन, नत्वेवं महान् । तेन त्वमेतत् पापस्थानमालोचय तदर्हं च तपः–

वर्षसहस्रायुर्नैरयिको भविष्यसि ।' तदा च सा रेवती तेनैवमुक्ता सत्येवमवोचत् 'हा नो मया समं प्रीत्या महाशतकः अपध्याता
चाहमनेन न ज्ञायते केनापि कुमारेण मारणं मे भविष्यतीति'भीतोद्विग्ना सती स्वगृहे प्रत्यागताऽपहतचेतःसंकल्पा दुर्ध्याननिरतांतःसप्त-
रात्रस्याऽलसकेन व्याधिनाऽभिभूता सती समुत्पन्ना लोलाख्यनिरयावासके । अस्मिँश्च समये श्रीवीरः समवसृतः पर्षदागता प्रत्यागता
च तदा च श्रीवीरः श्रीगौतमं प्रत्याह 'यत् श्रमणोपासकस्य प्रतिपन्नानशनस्य न कश्चित् कल्पतेऽनिष्टवचनैः संभाषयितुं, महाशतकेन
तु प्रतिपन्नानशनेन रेवत्यनिष्टवचनैराक्रुष्टा, तद् गच्छ त्वं महाशतकं प्रतिकथय, यत् श्रीवीर एवमाख्याति अनशनिना श्राद्धेन न
कोप्यनिष्टवाक्यैः संभाषणीयस्त्वया तु रेवतीदुर्वचनैः संभाषिता तत् त्वमालोचय प्रतिपद्यस्व तदर्हं च प्रायश्चित्तम् ।' तदा च श्री गौतमः
श्रीवीरोक्तं तथेति प्रतिपद्य महाशतकांतिके गत्वा कथयामास सर्वम् । तदनु महाशतकेन तत्पापस्थानमालोच्य प्रतिपन्नं तदर्हं प्रायश्चित्तम् ।
तदनु संपूर्णे मनुष्यायुषि समुत्पन्नः सौधर्मेऽरुणावतंसके चतुष्पल्यायुः सुरतया । ततश्च्युतो विदेहेषु स्वीकृतश्रामण्यो गमिष्यति मोक्षम् ।
यथाऽनेन सम्यक्प्रायश्चित्तं प्रतिपन्नं तथाऽन्यैरपि प्रतिपत्तव्यम् ।

यस्तु न प्रतिपद्यते प्रायश्चित्तमालोचनापूर्वं स विराधकः सौभाग्यसुंदरीवत् । तत्कथा चेयं वसंतपुरे इभ्यदत्तः श्रेष्ठी ।
तस्य वसुदत्तरुपदत्तगुणदत्तश्रीदत्तनामानश्चत्वारः सुतास्तदुपर्येका पुत्री सौभाग्यसुंदरी यथार्थाभिधाना । सा चैकेन चिन्महेभ्यसुतेन
समं विवाहिता । अथ च दैवयोगादकस्मादेव तत्पतौ परासुतां प्राप्ते तामतीवशोकपरां निरीक्ष्य तत्तोपकृते पित्रा तस्याः सपाद-
लक्षमूल्यं रत्नचतुष्टयं दत्तम् । सा च तद्रत्नचतुष्टयं क्वापि विशिष्टस्थाने स्थापयित्वा संयती समीपेऽध्ययनप्रतिक्रमणादिकं कुरुते ।
तस्याश्च प्रतिक्रमणादिसुकृतक्रियां कुर्वाणायाश्चेतो रत्नचतुष्टये याति यन्मा मदीयानि रत्नानि कोऽपि गृह्णातु । अन्यदा तया

। तत यन्मनःस्थिरतां विना धर्मक्रिया निष्फलैवेति तच्चित्तस्थैर्यकृते कोऽप्युपायो विधीयते इति विचिन्त्य तया सूत्रधारस्योक्तं 'यदेतानि रत्नानि पट्टिकामध्ये सगोपय ।' तेन तथा कृते ता चित्रसारं थिरिता निर्म्मापयित्वा निश्चिन्ता सती सुकृतक्रिया मा करोति स्म। अथ चाध्ययनादिनिरतायास्तस्यास्तपस्यामनोरथे समुत्पन्न पितृभ्यां श्रीगुरवो निजमास्तैश्चानुमते पितृकृतमहामहा तत्पार्श्वे मुक्तलापित-पट्टिका जग्राह दीक्षा सा श्रीगुरुसमीपे । संयतीभिः प्रोक्तं 'सर्वसंगत्यागे पट्टिकायाः किं प्रयोजनम् ।' सा प्रतिवक्ति योगोद्वहनावसरे स्थापनाचार्यस्थापनादिकम् । साध्वीभिरप्युक्तं तर्हि भवत्वेवम् । अथ च प्रवर्तिनी समीपे ग्रहणा-सेवना शिक्षाशिक्षणपरया तया क्रमेणै-कादशाङ्गान्यधीतानि । क्रमेण च श्रीगुरुभिस्तस्या महत्तरापदे दत्ते पट्टिकोपरिस्थापनाचार्यान् संस्थाप्य धर्मानुष्ठानं करोति कारयति च सा, देशनाकलया च बहुजनं सा धर्मे स्थापयति । अन्यदा महत्तरा सोदरैः श्रीगुरुपादाः समं महत्तराभिवमंतपुरे चतुर्मासीं स्थापिताः । अथ च दैवयोगान्महत्तराणामतीवग्लानतायां श्रीगुरुभिराराधना कारिता सोदरैश्च तदुत्सवश्चक्रे । अथ च समयं विज्ञाय श्रीगुरुभिर्महत्तरायाः अनशनं वितीर्णम् । तदा च महत्तरा नयनाभ्यामश्रुपातं चकार । गुरुभिरुक्तं भवतां कातरता न युक्ता धीरतैव विलोक्यते, यतः सचितपुण्यपाथेयानां किं भयम् । यदुक्तं—'संचिततपोधनानां, नित्यं व्रतनियमसंयमरतानाम् । उत्सवभूतं मन्ये, मरणमनपराधवृत्तीनाम् ॥१॥' महत्तरा प्राह—'मरणह केरु कवण भयं, जहिं जण सयलु जाइ । मन महलुं नीमवलु, तिणि कारणि डोलाइ ॥१॥' गुरुभिरवगतं किंचित् शल्यं महत्तरायाश्चित्ते वर्त्तते, महत्तरा तु महत्यत्यतिभयेन तद्नालोच्यैव परासुरभूत् । सोदरैः श्रीसंघेन च महाविभूत्या तद्देहदाहः कृतः । श्रीगुरुभिः संयतीनां शोकमुत्तार्य पुस्तकादि योग्यमासाभ्याः समर्पितम् । अथ च नियति समये व्यतिक्रान्ते गृहगोधा तत्पट्टिकोपरि समारुह्योपविशति हक्किताऽपि पुनस्तत्रैवोपविशति । तत्स्वरूपं संयतीभिः श्रीगुरूणामग्रे

निगदितम्। गुरवस्तु तदीक्षणकृते संयत्युपाश्रये गताः दृष्टा सा पट्टिकोपर्यारूढा गुरुभिः पट्टिकाविलोकनकृते प्रार्थिता संयतीभिस्तु संवट्टभयादनभ्यर्हिततया श्रीगुरुहस्ते मुच्यमाना भूमौ पतिता जीर्णतया तु संधितो विशीर्णा रत्नानि च भुवि पृथक् पृथक् पतितानि। तदा च विस्मृतैर्गुरुभिर्वृद्धसाध्व्यः पृष्टास्ताभिरुक्तमेषा महत्तराणां गृहवासेऽपि समभवत्। तदनु गुरुभिस्तत्सहोदराः पृष्टाः, तैर्यथास्थितं रत्नस्वरूपं प्रोक्तं गुरूणामपि प्रांतसमयसंकेतः स्मृतः। तदनु गुरुभिः संयतीनां लोभत्यागशल्याऽऽलोचनादिविषया धर्मदेशना दत्ता। यथैतया शल्यालोचनं विना श्रामण्यं विराधितं तथाऽन्यैर्न विराधनीयम्। इत्युक्तं प्रायश्चित्तस्वरूपम् १।

अथ विनयस्वरूपमुच्यते तथाहि लोकोपचारा१ऽर्थ२काम३भय४मोक्ष५विनयभेदाद् विनयः पंचभेदः। तत्र लोकोपचार-विनयो लोकप्रसिद्धोऽभ्युत्थानाभिगमनातिथिपूजाप्रभृतिकः१। अर्थवियनस्तु धनकृते नृपतिश्रेष्ठ्यादिष्वमात्यवणिक्पुत्रादिभिर्विधीयमानः२। कामविनयस्तु कामिनीविषये कामिभिः क्रियमाणः ३। भयविनयस्तु स्वाम्यादिभयात् कर्मकरादिभिर्विरच्यमानः ४। एभिश्चतुर्भि-र्विनयैर्नात्र प्रयोजनम्। अत्र तु मोक्षविनयस्यैवाधिकारः। मोक्षविनयोऽपि दर्शन१ज्ञान२चारित्र३तप४औपचारिकविनय५भेदात् पंचप्रकारः। तत्र द्रव्यक्षेत्रकालभावभेदतश्चतुर्विधान् श्रीजिनोक्तान् भावान्निसर्गादुपदेशाद् वा सम्यक्श्रद्धानस्य दर्शनविनयः १। ज्ञान-विनयस्तु सम्यग्ज्ञानाचारपालनात् परिज्ञाय क्रियाकरणाच्च २। चारित्रविनयस्तु सम्यक्चारित्राऽऽचाराराधनात् च ३। तपोविनयस्तु विधिवत्तपसो विधानात् ४। औपचारिकविनयस्तु प्रतिरूपयोगयुंजनाऽनाशातनाविनयभेदाद् द्विविधः। तत्र प्रतिरूपयोगयुंजनविनयस्तु कायिको वाचिको मानसिकश्चेति त्रिप्रकारः। तेष्वभ्युत्थानां१जलियोजना२सनप्रदाना३सनाभिग्रह४कृतिकर्म५शुश्रूषा६नुगच्छन७सं-साधनभेदैः८कालिक औपचारिकविनयोऽष्टभेदः। तत्रासनाभिग्रहः स्वयमासनेऽनुपविशनम्। शुश्रूषा तु तदादेशं प्रति श्रोतुमिच्छा, पर्यु-

पासना वा। अनुगच्छनसंसाधने तु सन्मुखगमन-गुरुयानानुगमरूपे शेषभेदास्तु प्रतीताः। वाचिकविनयस्तु हित१मित२परुष३विमृश्यवादित्वभेदैश्चतुर्विधः। मानसिकविनयस्त्वकुशलमनसो निरोधः, कुशलमनमथोदीरणमिति द्विप्रभेदः। एवं प्रतिरूपयोगयुंजनविनयश्चतुर्दशप्रदेशः।

अनाशातनाविनयस्तु द्विपंचाशद्भेदस्तथाहि तीर्थंकर१सिद्ध२कुल३गण४संघ५क्रिया६धर्म७ज्ञान८ज्ञान्या९चार्यो१०पाध्याय११स्थविर१२गणिरूपेषु१३त्रयोदशसु स्थानेष्वनाशातना१भक्ति२बहुमान३वर्णसंज्वलन४भेदैश्चतुर्द्धा विनयो विधेय इति त्रयोदशचतुर्गुणिता द्विपंचाशद्भेदा भवंत्यनाशातनाविनयस्य। एतेष्वनाशातनाविनयस्तीर्थंकरादीनामाशातनावर्जनरूपः१। भक्तिस्त्वेतेषु बहिःप्रतिपत्तिकरणरूपा२। बहुमानस्त्वेतेष्वेव मानसिकप्रीतिकरणरूपः३। वर्णसंज्वलनं तु तेषामेवाऽतिशयगुणकीर्त्तनादिरूपः४। एवं पंचविधो मोक्षविनयो विधेयो निधेयसुकृतिजनैर्निर्वाणमिच्छुभिर्यतो धर्म्मस्य मूल विनय एव सूत्रे निगद्यते। यदुक्तं श्रीदशवैकालिके *'मूलाउ खधप्पभवो दुमस्स, खंधाउ पच्छा समुविंति साहा। साहप्पसाहा विरहंति पत्ता, तओ सि पुप्फं च फलं रसो अ ॥१॥ 'एव धम्मस्स विणओ, मूलं परमो से मुक्खो, जेण कित्तिं सुअं सिग्घं, नीसेसं चाभिगच्छई ॥२॥'* अन्यत्राप्युक्तं *'विणयंता चेव गुणा, संतंतरसाकिया उ भावंता। कत्थं च नाडयंत राहावेहं तमीसत्थं ॥१॥'* यस्तु विनयं विधत्ते स प्राप्नोत्यभीप्सितं यस्तु न करोति स तु न। उक्तं च 'विणओ सामणे मूलं०॥१॥' 'विणओ आवहइ सिरिं०॥२॥' अत्रान्वयव्यतिरेकाभ्यां श्रेणिकनृपतिरुदाहरणं यदा श्रेणिकेन सिंहासनोपविष्टेन श्वपाकसतिके विद्या मार्गिता तदा विनयं विना सा नागमत्। यदा तु तं सिंहासने निवेश्य करयोजनपूर्वं सा मार्गिता तदा स्वल्पेनैवायासेन साऽऽयाता। एवं यथा पश्चात् श्रेणिकेन विनयः कृतस्तथा सर्वैरप्यार्हतमतकोविदैर्विधेयः। इत्युक्तं विनयस्वरूपम्२।

अथ वैयावृत्यस्वरूपमुच्यते, तथाहि आचार्यो१पाध्याय२स्थविर३तपस्वि४ग्लान५शैक्ष६साधर्म्मिक७कुल८गण९संघ१०रूपेषु
दशसु स्थानेषु यथाशक्तिविश्रामणान्नपानसंपादनादिभिः प्रकारैर्वैयावृत्यं विधेयम् । उक्तं च *'आयरिअ१उवज्झाय२थेर३तवस्सी४*
*गिलाण५सेहाणं६ । साहम्मिअ७कुल८गण९संघ१० संगयं तमिह कायव्वं ॥१॥'* एतेष्वेकाचार्यसंततिः कुलं द्वयोस्तु कुलयोर्मिथः
सापेक्षतयाऽवस्थाने गणः प्रोच्यते । शेषपदानि तु प्रतीतानि । श्री प्रश्नव्याकरणांगे तु दशधा वैयावृत्यमेवं प्रोक्तं तथाहि *'पवत्ति१*
*आयरिअ२उवज्झाए३सेहे४साहम्मिए५तवस्सी६कुल७गण८संघ९चेइअट्ठे अ१० निज्जरट्ठी वेआवच्चं अणिस्सिअं दसविहं बहुविहं करेइ ।*
एतच्च वैयावृत्यं नियमपूर्वं प्रागुक्तेषु दशसु स्थानेषु विधेयं, यत इतरत् सुकृतं कषायादिभिर्विफलतामपि भजेत् नतु वैयावृत्योपार्जितम् ।
यदुक्तं *'वैयावच्चं निअयं, करेह उत्तमगुणे धरंताणं । सव्वं किर पडिवाई, वेआवच्चं अपडिवाई ॥१॥ पडिभग्गस्स मयस्सवि, नासइ चरणं*
*सुअं अगणणाए । न हु वेयावच्चं कयं, सुहोदयं नासए कम्मं ॥२॥'* एतच्च वैयावृत्यं विधिकृतं तीर्थंकरनामकर्मनिबंधनं संपनीपद्यते ।
यदुक्तमेकोनत्रिंशे श्रीउत्तराध्ययने *'वेआवच्चेणं भंते जीवे किं जणयइ ? वेआवच्चेणं तित्थयरनामगोअं कम्मं निबंधइ ।'* एतच्च वैयावृत्य-
माचार्यादिकेषु दशसु स्थानेषु कर्त्तव्यं नतु गृहिणः, यदुक्तं श्रीदशवैकालिके *'गिहिणो वेयावडिअं न कुज्जा, अभिवायणवंदणपूअणं वा ।*
*असंकिलिट्ठेहिं समं वसिज्जा, गुणी चरित्तस्स जओ न हाणी ॥१॥'* पुष्पमालायामप्युक्तं *'गिहिणो वेआवडिए, साहूणं वण्णिआ बहूदोसा;*
*जह साहुणी सुभद्दाइ, तेण विसए तयं कुज्जा ॥१॥'* आचार्यादीनां सर्वेषामपि ग्लानतावस्थायां विशेषतो वैयावृत्ये यतनीयं सर्वसाधुभिः ।
यदुक्तं श्रीसूत्रकृदंगे *'इमं च धम्ममादाय, कासवेण पवेइअं । कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहिए ॥१॥'* श्रीउपदेशमालाया-
मपि प्रोक्तं *'निच्चं पवयणसोहा-कराण चरणुज्जुआण साहूणं । संविग्गविहारीणं सव्वपयत्तेण कायव्वं ॥१॥ हीणस्स वि सुद्धपरूवगस्स,*

*नाणाहिअस्स कायव्व । जणचित्तग्गहणत्थं करंति लिंगावसेसेवि ॥२॥'* अत्र च वैयावृत्ये नंदिषेणश्रमणशिरोमणि-निदर्शनं यथा षष्ठक्षपणपारणके तेन देवविकुर्वितमुनिवैयावृत्यं कुर्वता न मनागपि मनःकालुष्यं कृतम्। तथाऽन्यैरपि न विधेयं वैयावृत्यं कुर्वद्भिः। भरतबाहूबलिनोर्वा बाहुसुबाहू वा मुनी दृष्टांतौ। तत्र बाहुना मुनिनामशनपानरूपं वैयावृत्यं कुर्वता भोगफलं कर्म समुपार्जितं तेन स युगादौ भरतनामा सार्वभौमः समभूत्। सुबाहुना तु तेषां विश्रामणा कृता तेन समरे स बाहुबली भरतेनापि न जित इत्युक्तं किंचिद् वैयावृत्यस्वरूपम्।

अथ स्वाध्यायस्वरूपं। किंचिदुच्यते। तथाहि वाचना१प्रतिप्रच्छना२परावर्त्तना३ऽनुप्रेक्षा४धर्म्मकथा५भेदेन स्वाध्यायः पंचविधः स्यात्। तत्र पूर्वं वाचना कार्येति प्राग् वाचनाया उपन्यासः। वक्ति शिष्यस्तं प्रति गुरोः प्रयोजकता वाचना पाठनमित्यर्थः। अनया वाचनया कर्मनिर्जरां जनयति श्रुतस्याऽनाशातनायां च प्रवर्त्तते जीवः। यदुक्तमेकोनत्रिंशे श्रीउत्तराध्ययने *'वायणाए णं भंते जीवे किं जणयइ ? वायणाएणं निज्जरं जणयइ सुअस्स अणासायणयाए वट्टइ। सुअस्स अणासायणयाए वट्टमाणे तित्थधम्मं अवलंबइ। तित्थधम्मं अवलंबमाणे महानिज्जरे महापज्जवसाणे भवइ।'* व्याख्या=श्रुतस्यानाशातनायां प्रवर्त्तते। तदकरणे ह्यवज्ञातश्रुतमाशातितं स्यात्ततस्तीर्थं गणधरस्तस्य धर्म आचारः श्रुतप्रदानलक्षणस्तमवलंबमान आश्रयन् महानिर्जरो महत्प्रशस्याऽवसानमंतःकर्म्मणो भवस्य वा यस्य स तथा १। प्राग्गुरुसमीपेऽध्ययने कृतेऽपि संशयाद्युत्पत्तौ प्रतिप्रच्छना विधेयेति वाचनाया अनंतरं प्रतिप्रच्छनाया उपन्यासः। पूर्वं कथितस्य सूत्रादेः पुनः प्रच्छना प्रतिप्रच्छना। तया सूत्रमर्थं तदुभयं च संशयादिमालिन्यापनयनेन निर्मलीकरोति। उक्तं च तत्रैव *'पडिपुच्छणाए णं भंते जीवे किं जणयइ ? पडिपुच्छणाएणं सुत्तत्थ-तदुभयाइं विसोहेइ, कंखामोहणिज्जं कम्मं वुच्छिंदइ॥'* व्याख्या=विशोध-

यति संशयादिमालिन्यापनयनेन । तथा कांक्षेदमित्थमित्थं च ममाध्येतुमुचितमितिवांच्छा, सैव मोहयतीति मोहनीयं कर्माऽना-
भिग्रहिकमिथ्यात्वरूपं व्युच्छिनत्ति २ । सूत्रस्य मा भूद् विस्मरणमिति प्रतिप्रच्छनानंतरं परावर्त्तनाकथनम् । परावर्त्तनया
व्यंजनानि जनयति व्यंजनलब्धिं चोत्पादयति । उक्तं च तत्रैव 'परिअट्टणयाए णं भंते जीवे किं जणयइ ? परिअट्टणयाए णं
वंजणाइं वंजणलद्धिं च उप्पाएइ ।' व्याख्या=परावर्त्तना गुणनं तया व्यंजनान्यक्षराणि जनयत्युत्पादयति, तानि गलितान्यपि
गुणयतो झगित्युत्पतंतीत्युत्पादितानि प्रोच्यंते; तथाविधक्षयोपशमतो व्यंजनलब्धिं च । तत्पदलब्धिं पदानुसारितास्वरूपामुत्पा-
दयति ३ । सूत्रवदर्थस्याप्यविस्मृतिकृतेऽनुप्रेक्षा विधेयेति परावर्त्तनानंतरमनुप्रेक्षाया उपन्यासः । सूत्रार्थचिंतनरूपयाऽनुप्रेक्षया-
ऽऽयुष्कर्मवर्ज्याः सप्तकर्मप्रकृतीर्गाढबंधनबद्धाः श्लथबंधनबद्धाः प्रकरोति, दीर्घकालस्थितिकास्तनुसमयस्थितिका विधत्ते, तीव्रानुभावा
मंदानुभावाः करोति, बहुप्रदेशाग्रा अल्पप्रदेशाग्राः करोति । उक्तं च तत्रैव—'अणुप्पेहाए णं भंते जीवे० ? अणुप्पेहाए णं आउअ-
वज्जाउ सत्तकम्मपयडीओ घणिअबंधणबद्धाओ सिढिलबंधणबद्धाउ पकरेइ । दीहकालठिइआओ हस्सकालठिइआओ पकरेइ । तिव्वाणु-
भावाओ मंदाणुभावाओ पकरेइ । बहुपएसग्गाओ अप्पपएसग्गाओ पकरेइ । आउअं च णं कम्मं सिअ बंधइ सिअ नो बंधइ । असायावे-
अणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणइ । अणाइअं अणवयग्गं दीहमद्धं चाउरंतं संसारकंतारं खिप्पामेव वीइवयइ । व्याख्या=
अनुप्रेक्षा चिंतनिका तया प्रकृष्टशुभभावोत्पत्तिनिबंधनतयायुष्कवर्जाः सप्तकर्मप्रकृतीः घणिअं त्ति बाढं बंधनं श्लेषणं तेन बद्धा
निकाचिता इत्यर्थः । शिथिलबंधनबद्धाः कोऽर्थोऽपवर्त्तनादिकरणयोग्याः प्रकरोति । तपोरूपत्वादस्या तपसश्च निकाचितकर्म-
क्षपणेऽपि क्षमत्वात् । ह्रस्वकालस्थितिकाः प्रकरोति शुभाध्यवसायतः स्थितिखंडकापहारेणेत्यर्थः । नृतिर्यक्सुपर्वायूंषि विहाय सर्व-

कर्मणां स्थितेरशुभत्वात् । तीव्रानुभावास्तीव्ररसाश्चतुःस्थानिकरसतया मंदानुभावास्तु त्रिस्थानिकरसतायापादनेन । इह चाऽशुभ-प्रकृतय एव ग्राह्या न तु शुभा यतः शुभभावेन शुभप्रकृतीनां तीव्र एवानुभावो विधीयते । ननु कुतो हेतोरायुर्वर्जनम् ? उच्यते संयतेः सुरायुर्बंधस्यैव संभवात् । तस्यैव चाऽनुप्रेक्षा तात्त्विकी न च शुभभावेन शुभप्रकृतीनां शिथिलतादिकरणम्, अशुभाध्य-वसायहेतुत्वात्तस्य । अथ शुभायुर्बंधोऽप्यस्याः किं न फलमुच्यते ? आयुष्कर्म स्याद्बध्नाति स्याच्च त्रिभागादिशेषतायामेव तद्बंधसंभ-वात्तस्य च कदाचित्कत्वेनाऽविवक्षणात् । कस्यचित् सिद्धिगमनाच्च । तथा असातावेदनीयं कर्म वा तदन्यास्चाशुभप्रकृतीर्न भूयोभूय उपचिनोति बध्नाति । भूयोभूयोग्रहणं त्वन्यतमप्रमादतः प्रमत्तसंयतस्य तद्बंधस्यापि संभवात् । चतुरंतं गतिस्वरूपचतुरवयवं व्यतिव्रजति विशेषेणातिक्रामति शेषसुगमम् ४ । इत्थमभ्यस्तश्रुतेन धर्मकथा कार्येत्यनुप्रेक्षानंतरं धर्मकथाया उपन्यासः । धर्मकथया प्रवचनप्रभावनां विधत्ते । यदुक्तं तत्रैव 'धम्मकहाए णं भंते० ? धम्मकहाए णं पवयणं पभावेइ । पवयणपभावएणं जीवे आगमेसस्स भद्दत्ताए कम्मं निबंधइ ।' व्याख्या=प्रभावयति प्रकाशयति । यदुक्तं 'पावयणी धम्मकही, वाई नेमित्तिओ तवस्सी अ । विज्जासिद्धो अ कवी, अट्ठेव पभावगा भणिआ ॥१॥ आगम आगामी कालस्तस्मिन् शश्वद्भद्रतयाऽनवरतकल्याणतयोपलक्षितं कर्म निबध्नाति पुण्यानुबंधिपुण्यमुपार्जयतीति भावः । अत्र धर्मकथायां श्रीवज्रस्वाम्यधमनृपतिप्रतिबोधकश्रीपादलिप्तसूरिप्रभृतयो दृष्टांताः । एवं वाच-नादिष्वपि सूत्रानुसारेण दृष्टांता भावनीयाः । इमं च स्वाध्यायं पंचविधं कुर्वन्नसंख्येयभवोपार्जितं कर्म क्षपयति भव्यजंतुर्यदुक्तं— 'कम्ममसंखिज्जभवं, खवेइ अणुसमयमेव आउत्तो । अन्नयरम्मि वि जोगे, सज्झायम्मि विसेसेणं ॥१॥' तथा स्वाध्यायेन प्रशस्तध्यान-संवेगवृद्धिलोकालोकस्वरूपविज्ञानादिसंभवेत । यदुक्तं श्री उपदेशमालायां 'सज्झाएण पसत्थं, झाणं जाणइ य सव्वपरमत्थं । सज्झाए

वट्टंतो, खणे खणे जाइ वेरग्गं ॥३३८॥' तथा 'उड्ढमहतिरिअनरए-जोइसवेमाणिआ य सिद्धी अ । सव्वो लोगालोगो सज्झायविउस्स
पच्चक्खो ॥३३९॥ तथा तपःसंयमोद्यतोऽपि यः स्वाध्यायं न विधत्ते स प्रमादी, तं साधुपदे न स्थापयति । यदुक्तं 'जो निच्चकालतव-
संजमुज्जुओ नवि करेइ सज्झायं । अलसं सुहसीलजणं, नवि तं ठावेइ साहुपए ॥३४०॥ तस्मान्मुक्त्यर्थिनाऽनवरतमप्रमत्ततया पंचविधः
स्वाध्यायो विधेयः । इत्युक्तं किंचित् स्वाध्यायस्वरूपम् ।

अथ ध्यानस्वरूपमुच्यते । तथाहि आर्त१रौद्र२धर्म३शुक्लध्यान४ भेदेन ध्यानं चतुर्विधम् । तेष्वार्त्तरौद्रध्यानपरिहारपुरस्सरं
निरंतरं धर्मशुक्लध्याने विधेये । यदुक्तं त्रिंशे श्रीमदुत्तराध्ययने 'अट्टरुद्दाणि वज्जिता, झाइज्जा सुसमाहिए । धम्मसुक्काइं झाणाइं, झाणं
तं तु बुहा वए ॥१॥ एषां तु स्वरूपमेतस्यामेव लहर्यां तुरीयतरंगे प्रोक्तं तेन तत एव विलोकनीयम् । एतेष्वार्त्तरौद्रध्याने तिर्यग्निरय-
गतिनिदाने, तेन ते वर्जनीये । धर्मशुक्लध्याने तु सुरगतिपंचमगतिहेतुभूते, अतस्ते विधेये ।

अत्रार्त्तध्याने तापसश्रेष्ठिकथा । तथाहि कौशांब्यां तापसः श्रेष्ठी नानाविधारंभैरुपार्जितप्रभूतवित्तस्तद्बलेन कारितानेकगृहः
कलत्रपुत्रादिसमीकारनिरतः प्रांतसमयेऽप्यपरित्यक्तधनसदनस्वजनादिममत्व आर्त्तध्यानपरः परासुभूतः समुत्पन्नः शुकरतया । स्वसदन-
स्वजनादिनिरीक्ष्य जातजातिस्मृतिः प्राग्भवपुत्रेण हतो मृत्वा स्वगृह एव समुत्पेदे सर्पतया । तत्रापि जातिस्मरणात्तद्गृहममुञ्चन्
प्राग्भवसुतेन हतः केनचित् शुभाध्यवसायेन मृतः समुत्पन्नः स्वतनूद्भववल्लभाकुक्षौ । पूर्णेषु दिनेषु जातः स्वसदनादि निरीक्ष्य जातजा-
तिस्मृतिः कथं सुतं तातं वधुं च जननीं वदामीति विचिंत्य मूकत्वमाश्रितो नानाविधैः पितृकृतोपायैस्तद्भावमत्यजन् क्रमेण वृद्धिं गतः ।
साधुसंगाद्धर्म्मपरः क्रमेण श्रामण्यमंगीकृत्य देवभूयं गतः । यथैष तापसः श्रेष्ठी आर्त्तध्यानात्तिर्यग्गतिं गतस्तथान्येऽपि ततस्तां यांति ।

तस्मात्तद्धेयम् । यथैव मूकभरे धर्मध्यानात्सुरगतिमवाप तथापरैरपि सा प्राप्यते तस्माद्धर्मध्यानं विधेयम् ।

रौद्रध्याने तु मणिरथपार्थिवो निदर्शनम् । तथाहि अवंतिजनपदेषु सुदर्शनपुरे मणिरथो नृपस्तस्य युगबाहुः महोदरः स च युवराजा । तस्य मदनरेखा प्राणप्रिया । सा च परमश्राविका सतीशिरोरत्नम् । अन्यदा मदनरेखारूपं निरीक्ष्य मणिरथस्तया सह संयोगाभिलाषी नानाविधवसनविभूषणादि तस्याः प्रेषयति । सापि ज्येष्ठ-प्रेषितमिति बहुमानादादत्ते । अन्यदा मणिरथेन तस्याः पुरतः स्वचेतोभावे आविर्भाविते तया स नानाविधोपदेशैस्तस्मादकृत्यान्निवारितश्चिंतयामास, नूनमेषा प्राणप्रिये जीवति नेतरं नरमिच्छति; तेन येनाप्युपायेनैतस्याः पतिर्मार्यते यथैषा मां प्रतिपद्यते । इति विचिंत्य स तच्छिद्राणि गवेषयतिस्म । अन्यदा मदनरेखया शशी-स्वप्ने दृष्टः प्रियस्याग्रे प्रोक्तः । तेनाप्युक्तं 'तव स्वप्नानुभावान्महाराजा तनूजो भावी ।' अथ च तस्या गर्भानुभावाद् ये ये प्रशस्त-दोहलाः समुत्पद्यते ते ते प्रियेण पूर्यंतेस्म । अन्यदा वसंततौ सदयितो युगबाहुः क्रीडार्थमुद्याने गतस्तत्रैव कदलीगृहे प्रसुप्तस्तदा च मणिरथेन चिंतितं सांप्रतं चिंतितकृत्यस्य मे प्रस्ताव इति चिंत्य तेन तत्रागत्य युगबाहुर्भणितो नात्र प्रस्तावः शयनस्य तेनोत्तिष्ठ वयं यामो-ऽत्तर्नगरं इति कथनानंतरं तौ सोदरौ पुरं प्रतिगंतुं प्रवृत्तौ, मार्गे च मणिरथेन युगबाहुः कंधरायां खड्गेन गाढप्रहारेणाहतो निमिलितलोचनः पतितः क्षितौ । तदा च मदनरेखया पूत्कृतिः कृता तां च निशम्य धाविताः सुभटाः किमेतदिति वदंतस्तदा च मणिरथेनोक्तं मम प्रमादा-दसिः कंधरायां निपतित इत्यादिकृत्रिमशोकं कुर्वन्मेचकैः स बलान्नीतो नगरं कथितं च तत्स्वरूपं युगबाहुसूनोश्चंद्रयशसः । सोऽपि वैद्यवृंद-मादाय यथाद्युद्यानं वैद्यैश्चासाध्य इत्युक्ते मदनरेखया कारिताराधनो धर्मध्यानलीनमनाः स गतः स्वर्लोकम् । मणिरथोऽपि तस्यामेव रजन्यां भुजगेन दष्टो रौद्रध्यानपरो गतस्तुरीयनिरये । प्रातश्चंद्रयशसा पितृपितृव्ययोर्दाहे कृते सामंतादिभिः स राज्येऽभिषिक्तः ।

अग्रतो मदनरेखावृतांतस्तु नात्र लिख्यते बहुविस्तरत्वात्तेन नमिप्रत्येकबुद्धचारित्रादेव सोऽवसेयः, यथा मणिरथेन रौद्रध्यानं निरयनि-
दानं कृतं तथा नान्यैस्तद् विधेयम् ।

अथ धर्मध्यानेऽर्हन्नकदृष्टांतस्तथाहि, तगरानगर्यां दत्तो वणिक् तस्य भद्रा प्राणप्रिया पुत्रोऽर्हन्नकः । अन्यदा संवेगरंगपूरितो दत्तः सुतदयिताभ्यां समं सद्गुरुसमीपे श्रामण्यमंगीचकार । अथ च पिता मोहात्सुतं भिक्षाचर्यायां गंतुं न ददाति स्वयं च समानीतैर्मनोज्ञाहारैः सुतं सुखिनं करोति । एवं गते कियति समये पिता पंचतां गतस्ततोऽर्हन्नको निदाघर्तौ भिक्षार्थं निर्गतः सुकुमालतनुरुपर्यधश्च दह्यमानश्छायायां विश्रांतः । तदा चैकया प्रोषितपतिकया वनितया दृष्टः स सुरूपो नवयौवनः । दृष्ट्वा च समाकार्य स मोदकैः प्रतिलाभितः । तदनु च तयोक्तं किमेतत्तारुण्यानुचितं दुश्चरं तपश्चरणम् । तेन तिष्ठ मत्सौधे भुंक्ष्व च मया समं पंचविधं विषयसुखम्, इति तयोक्तः परीषहपराजितस्तया समं पंचप्रकारवैषयिकसुखोपभुक्तिपरः स स्थितस्तत्सदने । इतश्च तत्सवित्री पुत्रशोकेनोन्मत्ता गृहाद् गृहं भ्रमंत्यर्हन्नकः क्वासीति प्रलपंती समागता तत्र कियत्समयातिक्रमे अर्हन्नकेनोपलक्षिता निपतितश्च स तत्पदोः । तयाऽपि सुतमिलनेन स्वस्थीभूतचित्तया प्रोक्तं किमेतदसमंजसं कृतम् । अथापि चारित्रमंगीकुरु दुष्कर्मक्षयकृते इति तयोक्ते चिरसमयानुष्ठेयं चारित्रमाराधयितुमशक्तः स करोम्यनशनमित्यवादीत्तयाप्योमिति प्रोक्ते तप्तशिलोपरिकृतपादपोपगमानशनो धर्मध्यानलीनमनाः स्वल्पेनैव कालेन नवनीतवद् विलीनो गतः स स्वर्लोकम् । यथाऽनेन धर्मध्यानं तथाविधकष्टेऽपि न त्यक्तं तथान्यैरपि तन्न त्याज्यम् ।

शुक्लध्याने तु गजसुकुमालमेतार्यस्कंदकाचार्यविनेयमरुदेवीभरतसार्वभौमप्रसन्नचंद्रराजर्षिपृथ्वीचंद्रगुणसागरप्रभृतयः प्रतीता एव दृष्टांताः । इत्युक्तं ध्यानस्वरूपम् ५ ।

अथ व्युत्सर्गस्वरूपमुच्यते। तथाहि व्युत्सर्गो द्विधा द्रव्यतो भावतश्च। तत्र भावतो व्युत्सर्गः क्रोधादिकषायहास्यादि-नोकषायादित्यागरूपः। द्रव्यतो व्युत्सर्गस्तु गणदेहोपधिभक्तव्युत्सर्गभेदाच्चतूरूपः। उक्तं च '*दव्वे भावे अ तह, दुविहुस्सग्गो चउ-व्विहो दव्वे। गणदेहोवहिभत्ति, भावे कोहाइ चाउत्ति ॥ १ ॥*' गणोपधिव्युत्सर्गस्तु जिनकल्पादिप्रतिपत्तिसमये। भक्तव्युत्सर्ग-स्त्वनशनस्वीकारे। कायोत्सर्गस्तु द्विधा चेष्टाकायोत्सर्गोऽभिभवकायोत्सर्गश्च। तत्राभिभवकायोत्सर्गो दिव्याद्युपसर्गाभिभूतो मुनिर्यत् करोति स विज्ञेयः। अथ नोपसर्गाणामभियोजने उपसर्गा मया सोढव्यास्तद्भयं न विधेयमित्युपसर्गाणामभियोजने अत्राह विनेयः ननु परेणाभियोगो न युक्त एव यतः कस्यचित् यतुं तर्हि कायोत्सर्गेण कथमुपसर्गाभियोगः कर्तुमुचितो मुनेः। उच्यते भयो मोहनीयप्रकृतिस्तच्च दिव्यादित्रिविधोपसर्गजनितमभिभूय यस्तनूत्सर्गं विधत्ते तस्य कः पराभिभवः। अभिभवस्तु तदैव यदा गर्वतो 'रे! क्व यास्यसीदानीं मदग्रत' इत्याद्याक्रोशदानपूर्वं कश्चिदभिभूयते। अन्यदैशवेनाहंकाररहिता अपि यत् यो यथा कर्म्मजयार्थं तपःसंयमविषये यतन्ते। तथाभिभवकायोत्सर्गेऽपि। अयं चाभिभवकायोत्सर्गो जघन्यतोऽन्तर्मुहूर्त्तमान उत्कर्षतस्तु संवत्सरमानो बाहु-बलिना वर्षं यावत् कृतत्वात्। चेष्टाकायोत्सर्गस्तु गोचरचर्यादिविषये तत्प्रमाणं तु पुरतो वक्ष्यते। अयं च द्विविधोऽपि तनूत्सर्ग-उच्छ्रितोच्छ्रित१ उच्छ्रित२ उच्छ्रितनिषण्णो३ निषण्णोच्छ्रितो४ निषण्णो५ निषण्णनिषण्णः६ सुप्तोच्छ्रितः७ सुप्तः८ सुप्तसुप्तः९। एतेपूर्व्वस्थानस्थितः प्रलंबितबाहुयुगलो नासाग्रन्यस्तलोचनयामलो दंतैर्दंतान न संस्पृशन् धर्मशुक्लध्यानपरः कायोत्सर्गं यद् विधत्ते स उच्छ्रितोच्छ्रितस्त-नूत्सर्गो द्रव्यत ऊर्ध्वस्थानस्थिततया भावतस्तु धर्मशुक्लध्यानध्यायितया १। यस्तूर्ध्वस्थानस्थितः प्रागुक्तविशेषणविशिष्टो धर्म्मशुक्ल-ध्याने ध्यायति नाप्यार्त्तरौद्रे तस्योच्छ्रितस्तनूत्सर्गो यतः स द्रव्यत ऊर्ध्वस्थितो न तु भावतो धर्मशुक्लध्यानाभावात्। ननु कस्यामव-

स्थायां प्राणी न शुभं ध्यायति नाप्यशुभम् ? उच्यते प्रचलायमानः सुप्तो वा जाग्रन्नप्यव्यापारितचित्तो मत्तो मूर्च्छितो वा न शुभं ध्यायति नाप्यशुभम्। यतोऽचिरजातानामभिघातादिना विषादिना वा मूर्छितानां मद्यादिना मत्तानां निद्रया सुप्तानां वाऽव्यक्तमेव चित्तं भवेत्। नन्वेवंविधस्यापि मनसो ध्यानताऽस्तु ? उच्यते एकांतेन स्थिरतयाऽवस्थितं निरेजनं मनो ध्यानमुच्यते। यत् पुनरनवस्थितमव्यक्तं वा तच्चित्तं यदुक्तं ध्यानशतके '*जं थिरमवज्झवसाणं, तं ज्झाणं जं चलं तयं चित्तं। तं हुज्ज भावणा वा, अणुपेहा वा अहव चिंता ॥१॥*' ननु कथं मनः प्रथममव्यक्तं भूत्वा पुनर्व्यक्तं भवति? उच्यते यथोष्मावशेषः शिखीभूत्वा प्राप्तेंधनः सन् पुनः प्रज्वलति, एवं मनोऽपि निद्रादिनाऽव्यक्तं भूत्वा पुनर्व्यक्तं स्यात्२। यस्तूर्ध्वकायोत्सर्गे स्थित आर्त्तरौद्रध्याने ध्यायति तस्य निपण्णोच्छ्रितो द्रव्यत ऊर्ध्वस्थितत्वात् भावत आर्त्तरौद्रध्यानध्यायितया निपण्णत्वात् ३। निपण्णोच्छ्रितस्तु यो ग्लानस्थविरादिरशक्ततया निपण्ण एव कायोत्सर्गे स्थितो धर्मशुक्लध्याने ध्यायति तस्य विज्ञेयः, द्रव्यतो निपणत्वात् भावतस्तु धर्मशुक्लध्यानाभ्यामुच्छ्रितत्वात् ४। यस्तु निपण्णः सन् कायोत्सर्गं विधत्ते, न च धर्मशुक्लध्याने ध्यायति, नाप्यार्त्तरौद्रे तस्य निपण्णः कायोत्सर्गः ५। निपण्ण एव यः कायोत्सर्गं करोति, आर्त्तरौद्रे च ध्यायति तस्य निपण्णनिपण्णस्तनूत्सर्गो द्रव्यभावाभ्यां निपण्णत्वात् ६। यस्तु स्थविरग्लानादिर्निपण्णोऽपि तनूत्सर्गं कर्तुमक्षमः सुप्त एव तं विधत्ते, ध्यायति च धर्मशुक्लध्याने तस्य सुतोच्छ्रितस्तनूत्सर्गो द्रव्यतः सुप्तत्वात् भावतस्तूच्छ्रितत्वात् ७। यस्तु ग्लानादिः सुप्तस्तनूत्सर्गं करोति न च धर्मशुक्लध्याने ध्यायति नाप्यार्त्तरौद्रे तस्य स सुप्तः ८। यस्तु सुप्त एव कायोत्सर्गं करोति ध्यायेति चार्त्तरौद्रे तस्य स सुप्तसुप्तो द्रव्यभावाभ्यां सुप्तत्वात् ९। चेष्टाकायोत्सर्गास्तु द्विविधा नियतानियताश्च। तत्र नियतकायोत्सर्गा दैवसिके रात्रिके च प्रतिक्रमणे चत्वारस्तेषु दैवसिकप्रतिक्रमणे प्रथमकायोत्सर्गे सयणासणन्नपाणे० इत्यादि गाथोक्ता अतीचाराश्चिंत-

नीया यतिभिः। प्रत्यूषसमयमुपवसनप्रविलिखनाया आरभ्य यावत् कायोत्सर्गं त्रे जाता दिवसे द्वितीयकायोत्सर्गे तूद्योतकरद्वयचिंतनं विधेयं पंचाशदुच्छ्वासैः अपश्चिमसर्गश्चारित्रशुध्यर्थम्। तृतीयस्तु दर्शनशुध्यर्थम्। तुरीयस्तु श्रुतशुद्धिकृते। अनयोश्च प्रत्येकमेकैकोद्योतकरचिंतनम्। तयोश्च पंचविंशतिरुच्छ्वासाः प्रमाणम्। प्राभातप्रतिक्रमणे तु प्रथमतनूत्सर्गश्चारित्रशुध्यर्थम्। द्वितीयस्तु दर्शनशुध्यर्थम्। तृतीयस्तु श्रुतशुद्धिकृते। तत्र प्रथमद्वितीयतनूत्सर्गयोः प्रत्येकमेकैकोद्योतकरचिंतनं तयोश्च पंचविंशतिरुच्छ्वासाः प्रमाणम्। अत्र च तृतीयकायोत्सर्गे प्रागुक्तगाथाया रात्रिकातिचारचिंतनं विधेयं यतिभिः, श्राद्धैस्तु नाणम्मि दंसणम्मीत्याद्यष्टगाथाभी रात्रिकातिचारचिंतनं कार्य्यम्। एवं दैवसिकप्रतिक्रमणेऽपि प्रथमतनूत्सर्गे दैवसिकसर्वातिचारचिंतनं श्रावकैर्विधेयम्। ननु किमिति प्रथम एव तनूत्सर्गे श्रमणैः श्रावकैश्च रात्रिकातिचारचिंतनं न क्रियते? उच्यते निद्राभिभूतः कश्चित् सम्यग् न स्मरत्यतीचारानतस्तृतीये तनूत्सर्गे तत्स्मरणम्। अन्यच्च प्रदोषिकप्रतिक्रमणे एकमेव कायोत्सर्गं विधाय कृतिकर्म क्रियते, रात्रिकप्रतिक्रमणे तु तनूत्सर्गत्रयं कृत्वा यतोऽन्धकारे कृतिकर्म कुर्वतां जात्यन्योन्यं पाणिपादरजोहरणादिभिर्घट्टनं भवेत् ततश्चाऽधिकरणं कदाचित् स्यात् ये च मंदश्रद्धास्तैः कृतिकर्म न क्रियते सम्यग् वा न विधीयते सांधकारतया अतो हेतोः कायोत्सर्गत्रयानंतरं कृतिकर्मकरणं प्रातस्त्यप्रतिक्रान्तौ सन्ध्यायां प्रातश्च कायोत्सर्गानंतरं कृतिकर्म कृत्वा ये च दैवसिका रात्रिकाश्चाऽतीचारा यथाक्रमं चिंतिता भवंति ते तथालोचनीयाः। उक्तं च श्रीसामाचार्य्यध्ययने 'पासवणुच्चारभूमिं च, पडिलेहिअ जयं जई। काउस्सग्गं तओ कुज्जा, सव्वदुःखविमुक्खणं ॥१॥ देसिअं तु अईआरं, चिंतिज्ज अणुपुव्वसो। नाणम्मि दंसणम्मि, चरित्तम्मि तहेव य ॥२॥ पारिअकाउस्सग्गो, वंदित्ताण तओ गुरुं। देसिअं तु अईआरं, आलोइज्ज जहक्कम ॥ ३ ॥' अनुक्रमस्तु द्वेधा प्रतिसेवानुक्रम आलोचनानुक्रमश्च। तत्र प्रतिसेवानुक्रमो ये यथा प्रतिसेविता अती-

चारास्ते तथाऽऽलोच्यंते। आलोचनानुक्रमस्तुपूर्वं लघवोऽतीचारा आलोच्यंते पश्चाद् गुरवः, अतीचारालोचनानंतरं प्रतिक्रमसूत्रं कथ-
यित्वा कृतिकर्मपूर्वं पंचादिसाधुयोगे क्षामणकत्रयं कृत्वा कृतिकर्मपूर्वं कायोत्सर्गे स्थेयम्। तत्र दैवसिकप्रतिक्रमणे पूर्वं कायोत्सर्गे
स्थेयम्। तत्र दैवसिकप्रतिक्रमणे कायोत्सर्गत्रयं कार्य्यम्। एप सूत्रोक्तो विधिः। आचरणयां तु श्रुतदेवताक्षेत्रदेवतास्मरणार्थं
कायोत्सर्गद्वयं विधेयमष्टोच्छ्वासमानम्। तयोरंते च तत्स्तुतिपठनम्। तदनु नमस्कारं कथयित्वा मुखपोतिका प्रतिलेखनपूर्वं
कृतिकर्म कार्यम्। यथा जने राज्ञा सेवकाः कस्मिन्नप्यादेशे नियुक्ताः प्रणतिपूर्वं तमादेशं विधाय पुनः प्रणम्य कथयन्ति कृतोऽयमा-
देशः पुनरपि तमभिलपामः, एवं साधवोऽपि कृतिकर्मपुरस्सरं चरणादिशुद्धिं विधाय पुनः कृतिकर्मपूर्वकं विज्ञपयंतीच्छामोऽनुशास्ति-
मिति। तदनु गुरुभिः प्रथमस्तुतिपठने कृते वर्द्धमानास्तिस्रः स्तुतीः पठनीया यतिभिः। एप दैवसिकप्रतिक्रमणे सूत्रोक्तो विधिः।
रात्रिकप्रतिक्रमणेऽपि सर्वोऽप्येप विधिः समान एव। नवरं शक्रस्तवं पठित्वा पूर्वं प्रागुक्तं तनूत्सर्गत्रिकं कार्यम्। कृतिकर्मत्रयानंतरं
त्वेक एव तुरीयस्तनूत्सर्गो विधेयस्तत्र च पाण्मासिकतपसः प्रारभ्य किं तपः कर्त्तुं शक्तोऽस्मीति चिंतनीयं, तच्च प्रांते नमस्कारसहितं यावत्
चिंतितं च तपस्तुरीयकृतिकर्मानंतरं प्रतिपत्तव्यम्। तदनु वर्द्धमानस्तुतित्रयं भणनीयम्। तदनु यद्देववंदनं विधीयते तत्कालत्रयेऽपि
साधूनां देववंदनकृतिर्विलोक्यते। इति प्रातः कालसत्यापनार्थम्। एवं संध्यायामपि प्रतिक्रमणात् पूर्वं यद्देववंदनं तत्संध्याकालसत्याप-
नार्थम्। दैवसिकप्रतिक्रमणे यत्स्तुतित्रयानंतरं शक्रस्तवस्तवादि कथनं दैवसिकप्रायश्चित्तविशोधनार्थम्। चतुरुद्योतकरकायोत्सर्गकरणं
तदाचरणया संप्रदायागतम्। स्वाध्यायस्तु यदादेशपूर्वं विधायते तत् 'पढमं पोरिसिसज्झायं' इति सूत्रोक्तविधिविधानार्थम्। तथा
पाक्षिके द्वादशोद्योतकरकायोत्सर्गो विधेयः। चातुर्मासिके विंशत्युद्योतकरकायोत्सर्गः। वार्पिके तु चत्वारिंशदुद्योतकरैकनमस्कार-

प्रमाणस्तनूत्सर्गः, एतेषु च क्रमाच्छ्वासमानं त्रीणि शतानि, पंच शतानि सहस्रमष्टोत्तरं। तथा चातुर्मासिके वार्षिके च क्षेत्रदेवताया-स्तनूत्सर्गः कार्यः पाक्षिके च भवनदेवतायाः। केचिच्चातुर्मासिकेऽपि तस्यास्तनूत्सर्गं कुर्वंति। एष श्रीआवश्यकोक्तो विधिः। आचरणया तु पाक्षिके चतुर्मासिके वार्षिके च प्रतिक्रमणे भवनक्षेत्रदेवतयोरुत्सर्गः क्रियते। एते नियतावश्यकायोत्सर्गाः।

अथाऽनियतचेष्टातनूत्सर्गस्वरूपमुच्यते; तथाहि भिक्षाचर्यार्थगमने उपयोगविधानार्थमष्टोच्छ्वासमानः कायोत्सर्गः कार्यः। गोचर-चर्याचैत्यवंदनार्थं गमनागमनयोरन्यत्रापि कार्ये स्वस्थानाद् हस्तशताद् बहिर्गमने उच्चारप्रश्रवणयोर्व्युत्सर्गे नावा पादाभ्यां संभ्रमेण वा नद्युत्तारे इत्यादिकेष्वपि सूत्रोक्तेषु स्थानेषु ईर्यापथिकीप्रतिक्रमणं कार्यम्। तत्र च पंचविंशत्युच्छ्वासप्रमाणः कायो-त्सर्गः कार्यः। तथा स्वप्ने प्राणिवधमृषावादादिकेषु प्रतिसेवितेषु दृष्टिविपर्यासे च संजाते उच्छ्वासशतस्तनूत्सर्गो विधेयः। स्वप्ने स्त्रीविपर्यासे त्वनभिष्वंगस्य मुनेरष्टोत्तरशतोच्छ्वासमितस्तनूत्सर्गः कर्त्तव्यो भवेत्। तथा सूत्रस्योद्देशसमुद्देशयोरनुज्ञायां च सप्त-विंशत्युच्छ्वासमानस्तनूत्सर्गो विधेयः। कस्मिन्नपि कार्ये गुरुभिर्विनेयः प्रस्थापितश्चेत् स्खलति तदाऽष्टोच्छ्वासमानं तनूत्सर्गं कृत्वा याति। द्वितीयवारायां चेत् स्खलति तदा षोडशोच्छ्वासप्रमाणं, तृतीयवारायां चेत् स्खलनं स्यात्तदा न गंतव्यमपरो मुनिः प्रस्था-प्यते अवश्यकर्त्तव्ये तु देवान्नताऽग्रतोऽन्यं मुनिं प्रस्थापयित्वा तेन समं गंतव्यम्। स्वाध्यायप्रस्थापनप्रतिक्रमणकालग्रहणप्रतिक्रमण-निकृतिविसर्जनश्रुतस्कंधपूर्णपरावर्त्तनादिषु तु स्थानेष्वष्टोच्छ्वासमानस्तनूत्सर्गो विधेयः। तथा योगनिक्षेपणप्रथमलोचकारापणनष्टदंता-दिष्वपि योगोत्क्षेपगम्यस्वदेशविरतिमर्विरत्यारोपादिषु पंचविंशत्युच्छ्वासप्रमाणः कायोत्सर्गः कर्त्तव्यः। ननु युज्यतेऽकालपठितादिषु समुद्देशानुज्ञयोर्दुष्टप्रतीच्छितादिषु च तनूत्सर्गस्य विधानं यत्-पुनः श्रुतोद्देशेऽकृतेऽप्यपराधे कायोत्सर्गः क्रियते एषोऽकृतोऽपि दोषः किं

मुधा स्वीक्रियते ? उच्यते पापप्रतिघाती मंगलकृतेऽयमुत्सर्गः यतोऽकृतमंगलानां मा कदाचिद् विघ्नं भवत्विति । अयं च कायोत्सर्गो-वयोविशेषं बलविशेषं वाधिकृत्य शैध्यरहिततया विधेयस्तत्र तरुणो बलवाँ१स्तरुणश्च दुर्बलः२स्थविरो बलवान्३स्थविरश्च दुर्बलः ४। एवं चतुर्ष्वपि भंगेषु शैध्यं विमुच्य यथाबलं तनूत्सर्गे स्थेयम् । यस्तु कायोत्सर्गकरणवेलायां मायया प्रचलायति प्रतिपृच्छति सूत्रमर्थं वा कंटकमपनयति वा पुरीषोत्सर्गकृते याति प्रश्रवणं वा व्युत्सृजति सुकृतदेशनां विधत्ते मायया ग्लानत्वं वा करोति स शठतया मायाप्रत्ययं कर्म बध्नाति कायोत्सर्गक्लेशं विफलं च विधत्ते । तस्मात् शठतां विमुच्य यथाबलं कायोत्सर्गे स्थेयम् । श्लोके चोच्छ्वासाः श्लोकतुर्यभागसमा विज्ञेयाः । कायोत्सर्गकरणे च चत्वार्यंगुलानि चरणयोरंतरं पुरतः कार्यं पश्चाच्च किंचिन्न्यूनानि । वदनवसनं च दक्षिणपाणौ ग्राह्यं वामहस्ते च रजोहरणम् । अनेन विधिना व्युत्सृष्टदेहेन तनूत्सर्गो विधेयः । कायोत्सर्गे चोच्छ्वसितादयो द्वादशाग्निप्रभृतयश्च चत्वार एवं षोडशाकाराः परिज्ञेयाः । तत्रोच्छ्वसित१निश्वसिते२सूक्ष्मे विधेये नात्युल्बणे प्राणिवधभिया । तथा काशित३क्षुत४ऽऽजृम्भितानि५जंतुजातोपघातभिया हस्तं मुखाग्रे विधाय विधेयानि । उद्गार६वातनिसर्गौ च यतनया विधेयो न तु गाढशब्देन, उद्गारे च मुखपुरतः पाणिर्विधेयः । भ्रमि८पित्तमूर्च्छयो९श्च यतनयोपवेष्टव्यं मा भूत्सहसा पतने संयमात्मविराधनेति । तथा सूक्ष्मतनुसंचार१०सूक्ष्मश्लेष्मसंचार११सूक्ष्मदृक्संचारा१२अवश्यं भवंतीति तैः कायोत्सर्गभङ्गो न भवेत् । एवमेते द्वादशाकारा उच्छ्वासितप्रभृतयः । अग्निप्रभृतयश्चत्वारस्त्वेवं *'अगणी पणिंदिच्छिदणा, वोहिअखोभाई दीहडक्को अ ।'* व्याख्या=अग्निर्ज्योतिर्यदा स्पृशति तदा प्रावरणकृते कल्पादानं कुर्वतोऽपि न तनूत्सर्गभंगः । ननु नमस्कारमेव कथयित्वा किमिति तद्ग्रहणं न क्रियते ? उच्यते नात्र नमस्कारेण पारणमेवाविशिष्टं तनूत्सर्गमानं क्रियते, किं तु यो यत् परिमाणो यत्र कायोत्सर्गो निगदितस्तत उर्ध्वं समाप्तिः तस्मिन्नम-

स्कारमपठतो भंगोऽपरिसमाप्तेऽपि च तं पठतो भंग एव । स चात्र न स्यादेव सर्वत्र ज्ञेयम् । मार्जारमूषकादिर्वा पुरतो गच्छेत्तत्राप्यग्रतः सरणे तन्निषेधकरणे वा न तनूत्सर्गभंगः । बोधिकाः स्तेनास्तेभ्यः क्षोभः संभ्रमः, आदिशब्दात् राजादिक्षोभः परिगृह्यते । तत्रास्थानेऽप्युच्चारयतोऽनुच्चारयतो वा न तनूत्सर्गभंगः । दीहडक्को वत्ति सर्पदष्टे वात्मनि परे वा साधौ सहसाऽऽगड एवोच्चारयतो न कायोत्सर्गभंगः । इयं व्याख्या श्रीआवश्यकबृहद्वृत्त्यनुसारेण कृता । दीहडक्के सर्प्पे सन्मुखमागच्छति स्थानांतरे यातीति ग्रंथांतरे । एते च षोडशाकारा अपवादरूपाः कायोत्सर्गे परिज्ञेयाः । अयं च कायोत्सर्ग एकोनविंशतिदोषपरिहारपुरस्सरं निधेयस्ते चेमाभ्यां पूर्वर्षिकृतगाथाभ्यामवसेयास्ते चेमा 'घोडग१लय२खंभाई, माल३द्धी४निअल५सबरि६खलिण७नहु । लंबुत्तर९थण१०सजय,११भमुहं१२ मुलि१३वायस१४कविट्ठे१५ ॥१॥ सिरकंप१६मूअ१७वारणि१८, पेहत्ति१९चइज्जइ दोस उस्सग्गे । लंबुत्तरथणसजइ, न दोस समणीण सवहु सड्ढीणं ॥२॥' व्याख्या=घोटकवत् पादमेकमाकुंच्य न विषमक्रमतया कायोत्सर्गे स्थेयम्१ । पवनप्रेरितलतावन्न वपुः कंपनीयम्२ । स्तंभे माले कुड्ये द्वौ वा नावष्टभीयात्३ । शकटोद्धिवदंगुष्ठौ पार्ष्णी वा न मीलयेत्४ । निगडितवच्चरणौ न विस्तारणीयौ च न च मीलनीयौ५ । वसनविरहितशबरीवन्न पुरतः करौ कार्यौ६ । खलिनवन्नाग्रे रजोहरणं धारणीयम्७ । वधूवन्नात्यतं शिरोनामनीयं किं तु नासाग्रादौ नयने स्थापनीये, यथा वा चरणांगुष्ठपोरग्रं दृश्यते तथा ते स्थाप्ये८ । नाभेरूपरि जानोरधश्च प्रलंबमानं वसनं न विदध्यात्९ । दंशमशकादिरक्षार्थमज्ञानाद् वा हृदयं नाच्छादनीयम्१० । संयतीवन्न स्कंधद्वयोपरि प्रावरणं निधेयम्११ । इतस्ततो भ्रुवौ न चालनीयौ१२ । आलापकगाथापदादिगणना-परिज्ञानकृते नांगुलीश्चालयेत्१३ । वायसवन्न चक्षुर्गोलकं वामेतरदिशो निक्षिपेत्१४ । शलभादिभिया न कपित्थवत् परिधानं पिंडयेत्१५ । भूताविष्टवन्न मूर्द्धधूननं कुर्यात्१६ । मूकवच्छेदकादौ हुं हुं

कुर्यात् १७। कायोत्सर्गे स्थितो वारुणी सुरा तद्वदव्यक्तशब्दं न विदध्यात् १८। अनुप्रेक्षां कुर्वाणो वानरवदोष्ठपुटौ न चालयेत् १९।
एवमेकोनविंशतिदोषविवर्जनपूर्वं वासीच्छेदनचंदनचर्चनसमानमनसा जीवितमृतिनिरवकांक्षेण देहोपकरणादावप्रतिबद्धेन दिव्यमानुष्य-
तैरश्चोपसर्गैरक्षुभितेनाभिभवचेष्टाभेदतो द्विविधोऽपि कायोत्सर्गो विधेयः, पारणं त्वर्हन्नमस्कारेण कार्यम् । अनेन च विधिविहितेन तनू-
त्सर्गेणैहिकमामुत्रिकं च चित्तेष्टं संपद्यते ।

तत्रैहिकफले सुभद्रानिदर्शनं, तथाहि वसंतपुरे जिनदत्तः श्रेष्ठी श्रमणोपासकस्तस्य सुभद्रा सुताऽतीव रूपवती । स च तां
मिथ्यात्विने न दत्ते । अन्यदा वाणिज्यार्थं चंपातः संप्राप्तेन बुद्धभक्तेन बुद्धदासेन सा दृष्टा । अतीव सौभाग्यवतीति कपटश्राद्धीभूय
सा तेन परिणीता । अथ च विहितवाणिज्यः स तां गृहीत्वा गतश्चंपाम् । धर्मभेदाच्च कुटुंबकलहे सा तेन पृथग्गृहे स्थापिता शुद्धान्न-
पानादि साधून् प्रतिलाभयति। तन्निरीक्ष्य तन्ननंद्रादयस्तत्प्रियं प्रतिकथयंति एषाऽतीव संयतेषु रक्ताः । स न प्रत्येति अन्यदा कोऽपि
रूपबलादिगुणशाली तरुणः श्रमणः समागतस्तद्गृहे भिक्षार्थम्, अस्मिन्नवसरे वातोद्धूतं तृणं श्रमणदृक्पतितं निरीक्ष्य तया भक्तिभरप्रेरि-
तया रसनया कर्षितम् । तदा च तस्यास्तिलको यतिलालटपट्टे संक्रांतस्तत्र न नंद्रादिभिर्भर्तुर्दर्शितः । कथितं च कथमन्योन्यसंयोगं
विना तिलको भालस्थले संक्रामति। सोऽपि तं निरीक्ष्य मंदस्नेहः समभूत् सुभद्रायाम् । सापि विदितवृत्तांता प्रवचनोड्डाहनिवारणकृते
प्रवचनदेवतां चित्ते विधाय कायोत्सर्गे स्थिता रजन्याम् । तदा च तत्शीलगुणकायोत्सर्गकृष्टया देवतया प्रोक्तं 'प्रातः पुरप्रतोलीकपाट-
स्तंभनं करिष्ये, आकुलीभूतेषु च पौरजनेषु नभःस्था भणिष्यामि 'यया परपुरुषश्चित्तेऽपि न चिंतितः सा चेच्चालिनीधृतजलेन पुरद्वारा-
ण्याच्छोटयिष्यति तदा तदुद्घाटनं भविष्यति नान्यथा ।' तदा च त्वया द्वारत्रयमुद्घाटनीयम् । प्रातस्तया तथाकृते आर्हतमतप्रभावना

जने तत्प्रशंसा च समभूत्। एतदैहिकं फलं कायोत्सर्गस्य। तथोदितोदयनृपस्य प्रियालाभार्थागतनृपरुद्धस्य कायोत्सर्गेणोपसर्गशांतिरभूत्।

तथा सुदर्शनश्रेष्ठिप्रियामित्रवतीदृष्टांतस्तथाहि–चंपायां सुदर्शनः श्रेष्ठिचतुरष्टमीचतुर्दश्योश्चत्वरे प्रतिमां प्रपन्नो महादेव्या प्रार्थितोऽपि नेच्छति ताम्। अन्यदा प्रतिमास्थितिः स वस्त्रवेष्टितो यक्षप्रतिमेयमिति गायंतीभिश्चेटिकाभिः शुद्धांतनीऽतो महादेव्याऽनया नानाविधोपायैरपि प्रार्थितः स कायोत्सर्गं न पारयामास। तदा च तया कोलाहले कृते आरक्षैर्धृत्वा स नृपस्याग्रे नीतः। नृपेणापि च तात्पर्ये पृष्टे स मौनमत्यजन् राज्ञा वध्य आज्ञप्तः। एतज्ज्ञात्वा मित्रवती तनूत्सर्गे स्थिता। ग्रंथांतरे मित्रवत्या मनोरमेति नामांतरं दृश्यते। तदा चारक्षैः श्रेष्ठिस्कंधे ये खड्गप्रहारा दत्तास्ते देवतया स्रक्तया निर्मिताः। एतद् विज्ञाय राज्ञा स सत्कृत्य मुक्तः मित्रवत्यापि कायोत्सर्गः पारितः। सोऽपि विराधितश्रामण्यः व्यंतरे खड्गतया समुत्पन्नः। साध्वीन्निरीक्ष्य तन्मारणाय प्रधावितः। साधवस्तनूत्सर्गे स्थिताः। स प्रभवितुं न शक्नोति। पश्चादुपशांतो जातिं स्मृत्वाऽनशनेन स्वर्ययौ। एवमनेके दृष्टांता ऐहिकफलमाश्रित्य कायोत्सर्गविषये।

परलोकफलं तु स्वर्गावाप्तिर्मोक्षश्च। ननु मोक्षः कर्मक्षयात्तत् कथं मोक्षः कायोत्सर्गस्य फलम्? उच्यते कायोत्सर्गस्य कर्मक्षयहेतुत्वात्। यदुक्तं कायोत्सर्गनिर्युक्तौ 'करगउ जिकितइ, दारु इंतो पुणोवि वच्चंतो। इअ कितंति सुविहिया, अट्ठविहं कम्मसंघायं ॥१॥' तथा कायोत्सर्गं कुर्वता तनुममतैवंविधभावनया परिहार्या; तथाहि 'अन्नं इमं सरीरं, अन्नो जीवत्ति एवकयबुद्धी। दुक्खपरिकिलेसकरं छिंद ममत्तं सरीराओ ॥२॥' किं च 'जावइआ किर दुक्खा, संसारे जे मए समणुभूआ। इत्तो दुव्विसहतरा,

नरएसु अणोवमा दुक्खा ॥३॥' 'तम्हाउ निम्ममेणं, मुणिणा उवलद्धसुत्तसारेणं। काउस्सग्गो उग्गो कम्मखयट्ठाय कायव्वो ॥४॥' इत्युक्त
किंचित् कायोत्सर्गस्वरूपम् । तदुक्तौ च प्रपंचितं किंचित् षड्विधाऽभ्यंतरतपः स्वरूपम् ६ । अनेन च द्वादशविधेन विधिविहितेन
तपसा शिवपदं यावत्संपद्यते सर्वं स्वांताभिमतम् । विधिस्त्वेवं यदैह लौकिकपारलौकिक-फलकीर्त्याद्यभिलापरहितं निर्जरार्थमेव तपसो
विधानम् । यदुक्तं श्री दशवैकालिके 'नो इह लोगट्ठयाए तवमहिट्ठिज्झा । नो परलोगट्ठयाए तवमहिट्ठिज्झा । नो कित्तिवन्नसद्दसिलो-
गट्ठयाए तवमहिट्ठिज्झा। नन्नत्थ निज्जरट्ठयाए तवमहिट्ठिज्जा । चउत्थं पयं भवइ भवइ अ इत्थ सिलोगो विविहगुणतवोरए निच्चं, हवइ-
निरासए निज्जरट्ठिए तवसा धुणइ पुराणपावगं, जुत्तो अ सया तवसमाहिए ॥१॥' तस्मादेतस्मिन् द्वादशविधे तपसि विधिपुरस्सरं निरं-
तरं प्रयत्नो विधेयः ।

इदं च तपः कुर्वता जीवदयादि-पंचयमेंद्रियदमक्षमादिके सप्तदशविधेऽपि संयमे सर्वोद्यमेन यतितव्यम् । यतो दयां विना
तपः कष्टमज्ञानकष्टतया न मुक्तिप्रापकम् । यदुक्तं 'जं तं कयं पुरा पूरणेण अइ दुक्करं चिरं कालं । जइ तं दयावरो इह करितु तो
सफलयं हुंतं ॥१॥' एवं मृषावादाद्यपि कुर्वतस्तपसो वैफल्यं भावनीयम् । एवं पंचेंद्रियनियंत्रणं विना यत्तपोविधानं तदपि न सार्थकम् ।
यदुक्तं श्रीउत्तराध्ययने 'विसं तु पीअं जह कालकूडं, हणाइ सत्थं जह कुग्गहीअं । एमेव धम्मो वि स उववन्नो, हणाइ वेआल इवा
विवन्नो ॥१॥' तथाजीर्णं तपसः क्रोधो इति वचनात्, क्षमा विनापि तपसो विफलता । यदुक्तं 'फरुसवयणेण दिणतव'मित्यादि
तस्मात्तपो द्वादशभेदं विदधता सप्तदशभेदे संयमे सर्वोद्यमेन प्रयत्नो विधेयः । एवं ज्ञानदर्शनचारित्रतपांसि सदेवमनुजासुरायां संसदि
श्रीयुगादिदेवेन देशितानि शिवपथतया । एतेषु ज्ञानेन सर्वपदार्था विज्ञायंते, दर्शनेन तु सम्यक्श्रद्धानं भवेत्, चारित्रेण तु नवीन-

पापकर्मादाने निवार्यते, तपसा तु पूर्वोपार्जितकर्मणां निर्जरा स्यादेव । नवीनकर्मानादानेन पूर्वोपात्तकर्मणां च निर्जरया निर्वाणगमनं भवेत् । उक्तं च श्रीउत्तराध्ययने 'नाणेण जाणई भावे, दंसणेण य सद्दहे । चरित्तेण न गिण्हाइ, तवेण परिसुज्झई ॥१॥', तस्मान्मोक्षार्थिना ज्ञानदर्शनचारित्रतपस्सु सर्वप्रयत्नेन यतितव्यम् ।

एवं श्रीऋषभतीर्थपतिविरचितां देशनां निशम्य भरतसुतः श्रीऋषभसेन पञ्चभिः पंचशतमितैः स्वसोदरैः सप्तशतैश्च भरतपौत्रशतैः सार्द्धं संसारारण्यभ्रमणखिन्नमना निर्वाणशर्माभिलाषी भरतमापृच्छ्य प्रपदे प्रव्रज्याम् । तदा च तीर्थपतेः सुपर्वविरचितं पंचमर्गेदनमहिमानं निरीक्ष्य भरतसुतो मरीचिः श्रामण्यमंगीचकार । तथा भगवत्तनया ब्राह्मी भवनिर्विण्णचेतोवृत्तिभिरनल्पानुज्ञा चरितमंगीचकार । एवं भगवतः श्रीऋषभसेनप्रमुखाः श्रमणाः, ब्राह्मी-प्रमुखाः श्रमण्यः, श्रेयांसप्रमुखाः श्रमणोपासकाः, सुभद्राप्रमुखाः श्राद्ध्यः एवं चतुर्विधस्य संघस्य व्यवस्था तदा समभूत्, सा सांप्रतमपि प्रवर्तते । तदा च भगवान् पुंडरीकापरपर्यायश्रीऋषभसेनप्रमुखाणां चतुरशीतिगणभृन्नामकर्मणां चतुरशीतिश्रमणानामुत्पादव्ययध्रौव्यस्वरूपां त्रिपदीं सर्वप्रवचनरहस्यभूतां निषद्यात्रयेणोपदिष्टवान्, यथा भगवँस्तत्त्वमिति प्रणिपत्य पृच्छा निषद्या कथ्यते । तदनु पूर्वभव-भावितमतयो बीजबुद्धयस्ते द्वादशांगीं विरचयामासुस्त्रिपद्यनुसारेण तदा च दिव्यचूर्णपरिपूर्णस्थालमापूर्य सुरपरिवृते देवपतौ समुपस्थिते भगवान् सिंहासनादुत्थाय पुंडरीकादिचतुरशीतिगणभृन्मस्तकेषु चूर्णक्षेपं कुर्वाणः द्रव्यक्षेत्रकालभावेन द्रव्यैर्गुणैःपर्यायैर्नयैश्चानुयोगानुज्ञां गणानुज्ञां च तेषां प्रददाति । तदा च देवा देव्यो नरा नार्यश्च दुंदुभिरवपूर्वं वासक्षेपं तेषां शीर्षेषु चक्रुर्यथा भगवता गणभृत्स्थापना कृता तथा सर्वैरपि जिनपतिभिर्विधीयते । ततो निशेषचरमपत्तौ श्रीवीरकृता गणधरस्थापनाप्येवमेव वर्णिता । तथाहि निषद्यात्रयेण श्रीगौतमेन१४ पूर्वाणि गृहीतानि प्रणिपत्य च पृच्छा

निपद्योच्यते। प्रणिपत्य पृच्छति गौतमस्वामी कथय भगवँस्तत्त्वं ततो भगवानाचष्ट 'उप्पन्नेइ वा' पुनस्तथैव पृष्टे 'विगमेइ वा' 'धुवेइ वा' । एतास्तिस्रो निषिद्या आभ्य एवोत्पादादित्रययुक्तं सर्वमितिप्रतीतिस्तेषां स्यात् । ततश्च ते पूर्वभवभावितमतयो बीजबुद्धित्वाद् द्वादशांगीं रचयंति । ततस्तेषां तदनुज्ञां स्वामी करोति । शक्रे च वज्रस्थालं दिव्यचूर्णै भृत्वा सन्निहिते स्वामी सिंहासनादुत्थाय संपूर्णां चूर्णमुष्टिं गृहीत्वा११गणधरेषु परिपाट्येषद्वनततनुषु स्थितेषु पूर्वं भणति गौतमस्य द्रव्यगुणपर्यायैस्तीर्थमनुजानामीति चूर्णांश्च तन्मस्तके क्षिपति । ततो देवा अपि चूर्णपुष्पगंधवर्षं कुर्वंति तदुपरि, गणं च स्वामीश्रीसुधर्मस्वामिनं धुरि व्यवस्थाप्यानुजानाति । तदनु ते गणभृतो विरचितांजलिसंपुटास्तीर्थपतिवचनं प्रतीत्यन्तस्तस्थुः स्वामिसेवां कुर्वतः । तदा च भगवान् मृगेन्द्रासनं समारुह्य पूर्ववत् पूर्वाशाभिमुखोऽनुशिष्टिमयीं देशनां चकार ।

अत्रांतरे च पौरुष्यां पूर्णायामखंडैर्निस्तुषैरुज्वलैः कलमशालिभिर्निर्मितश्चतुष्प्रस्थप्रमाणो भरतनृपतिकारितः सुपर्वनिक्षिप्तगंधेर्द्विगुणितसौरभ्यः प्रधाननरोत्क्षिप्तो देवदुंदुभिनिर्घोषपूरितदिगंतरः प्रमदाजनविधीयमानगीतगानसुभगः पौरजनपरिवृतः पूर्वद्वारेण समवसरणे बलिः प्राविशत् । स च प्रदक्षिणापूर्वं प्रभोः पुरतः प्रक्षिप्तो वियति तदर्द्धं चांतराले भूमावपतितमेव देवैः समाददे, क्षितिगतस्य तु तस्यार्द्धं जग्राह भरतश्चक्रवर्त्ती शेषं तु सर्वे जना जगृहुः । अस्य च बलेरनुभावतो विलीयंते सर्वेऽपि पूर्वोत्पन्ना गदा भयाः पण्मासावधि च नवीनास्ते न समुत्पद्यंते । अथ च भगवानुत्थाय शचीपतिभिरनुगम्यमानमार्गं उदीचीद्वारेण निर्गत्य रत्नकनकमयवप्रयोरंतरे ईशानदिक्स्थिते देवच्छंदे विश्रामकृते गतः । तदा च श्रीमान् पुंडरीकनामा प्रथमगणधरः पूर्वाचलमिव रविर्भगवत्पादपीठमारुह्य गोभिस्तमःस्तोममपाकर्तुमुपचक्रमे द्वितीयपौरुष्याम् । अस्याश्च गणभृद्देशनाया इमे गुणास्तथाहि स्वामिनः खेदविनोदः कुतो भवेत् ।

विनापाणां च गुणदोषना कृता स्यात् । जनानामुभयतः प्रत्ययः समुत्पादितश्च भवेत् । शिष्याचार्यक्रमोऽपि च दर्शितः स्यात् । ननु यथा भगवद्देशनयामशेषसंशयापनयः स्यात्तथा छद्मस्थगणभृद्देशनया कथं भवेदुच्यते श्रुतबलेन, यदुक्तं श्रीआवश्यकनिर्युक्तौ 'संखाईए विभवे, साहइ ज वा परो उ पुच्छिज्जा । नय णं अणाइसेसि, वियाणई एस छउमत्थे ॥१॥' एवं च तस्मिन् गणभृति देशनातो विरते सर्वेऽपि तीर्थपतिं प्रणम्य जग्मुर्निजं निजं स्थानम् ।

तत्र च तीर्थे समुत्पन्नो गोमुखनामा यक्षः स च दक्षिणभुजयोर्वराक्षमालाशाली, वामभुजयोश्च मातुलिंगपाशाभ्यां शोभितः, कनकवर्णवृषभयानो भगवत् पार्श्ववर्ती समभूत् । तत्तीर्थे च चक्रेश्वरी समुत्पन्ना, सा च सुवर्णवर्णयाना वरदेषुधारिचक्रिपाशिदक्षिण-भुजा, धनुर्वज्रचक्राङ्कुशधरवामकरा, भगवत्सेवा विधायिनी शासनसुरी समभूत् । एवं तीर्थस्थापनां विधाय विजहार वसुंधरायां महर्षिभिः परिवृतो भगवांश्चतुस्त्रिंशदतिशयसमृद्धः ।

तत्र भगवतश्चत्वार इमे सहजा अतिशयास्तथाहि भगवतो देहोऽद्भुतरूपगंधो नीरोगः प्रस्वेदमदविकलश्च१, श्वासस्तु कमलवत् सुगंधः२, रुधिरमांसे तु गोपयःपूरधवले विस्रतारहिते३, आहारनिहारविधिस्तु न चर्मचक्षुर्गोचरः४ । एते च वक्ष्यमाणाः कर्मक्षय-जनिता एकादशातिशयास्तथाहि योजनमानेऽपि क्षेत्रे नरामरजनितिर्यक्कोटयोऽपि समांति१, वचनं च नरसुरतिर्यग्भाषासंवादकं योजनमितक्षेत्रव्यापकं च भगवतः२, जगत्प्रभोः पृष्ठे च दिनकरनिकरनिडंबकं भामंडलं ३, साधिके च गव्यूतशतद्वैते रुग् ४, वैरे ५तिद्मार्य६तिरष्टि७ऽवृष्टि८दुर्भिक्ष१०स्वपरचक्रभयानि११ न भवेयुः । एवमेते एकादशातिशयाः कर्मक्षयप्रभवाः । एकोनविंशतिश्च देवनिर्मिता अतिशयास्ते चामी वियत्संचारि धर्मचक्रं१चामरयामलं च२सपादपीठं च कनकरत्नमयं सिंहासनम्३आतपत्रत्रितयं च४

रत्नमयो महेंद्रध्वजः५चलनविन्यासे च नवपंकजानि कनकमयानि६रजतजातरूपरत्नमयं च प्राकारत्रितयं७चतूरूपता८चैत्यपादपः९ अधोमुखता कंटकानां१०पादपप्रणतिः११देवदुंदभिनिनादः१२पवनानुकूलता१३प्रदक्षिणता पक्षिणां१४गंधोदकवृष्टिः१५पंचवर्णप्रसूनवर्णं१६कचश्मश्रुकामांकुशाप्रवृद्धिः१७जघन्यतोऽपि चातुर्निकायिकानाकिकोटिनिषेधनं१८ऋत्विंद्रियार्थानुकूलता१९। एते दैवतनिर्मिता अतिशयाः। एवं चत्वारः सहजा अतिशयाः एकादश च कर्मक्षयोत्थाः एकोनविंशतिश्च देवविहिताः एवं सर्वमीलने चतुस्त्रिंशदतिशया भवेयुः। एवं चतुस्त्रिंशद्भिरतिशयैः स शोभितः पंचत्रिंशन्मितवचनगुणरंजितदिविजदनुजमनुजनिवहः कादंविन्येव स्वधर्मदेशनया भव्यजनमनःकाननेषु स्थाने स्थाने धर्म्मबीजं वृद्धिं प्रापयन् श्रीपुंडरीगणभृत्प्रभृतिमहामुनिनिकरपरिकरितः स्वस्तरुसुरसुरभीसुरकुंभादिवत्सर्वजनमनःसमीहितवितरणप्रवणः श्रीमान् युगादिदेवाधिदेवश्चामीकरतामरसनवके पदविन्यासं कुर्वन् नानादेशान् पावयांचकार त्रैलोक्यसारभूतः।

*श्रीऋषभसेनमुख्यानगारसुरसालशोभितो भगवान्। नंदनवनवद् भूयात्, भवसंभवतापहृद् वृषभः ॥१॥*

इति श्रीमत्तपागच्छालंकारहारभट्टारकघटाकोटीरहीरश्रीसोमजयसूरिशिष्यशिरोमणिश्रीइंद्रनंदिसूरिराजविनेयाणुसिद्धान्तसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रंथे श्रीमदनुगमापरपर्याये श्रीऋषभदेशनाभिधानायां तृतीयलहर्यांमांतरतपस्तीर्थस्थापनावर्णननामा सप्तमस्तरंगः संपूर्णः,तत्संपूर्णतायां च संपूर्णभूता श्रीऋषभदेशनाभिधाना तृतीयलहरी।

# दर्शनरत्नरत्नाकरः

## तुरीयलहर्यां प्रथमस्तरङ्गः ।

यदीयाङ्घ्रिसेवावशादेव मन्ये, धुरीणप्रसिद्धिं ययौ सौरभेय । स नाभेयतीर्थेश्वरः प्राणभाजां, भवारण्यनिस्तारकः श्रेयसे स्तात् ॥१॥
तं श्रीऋषभतीर्थपतिं प्रणिपत्य श्रीमति दर्शनरत्नरत्नाकरग्रंथे तुरीयलहरी प्रारभ्यते ।

तत्र तृतीयलहर्यां श्रीमद्युगादिदेवाधिदेवस्य देशना तीर्थस्थापना-स्वरूपमुपवर्णितं, अस्यां तु तत्सुतभरतषट्खंडसाधनप्रभृतिनिर्वृतिगमनपर्यंतस्वरूपमुपवर्ण्यते । तथाहि—

श्रीमान् भरतसार्वभौमः प्रथमजिनपतेः पंचमावबोधमहिमानं निधाय चक्ररत्नमहिमकृते विनीतांतर्वर्तिवर्त्मना सपरिजनः प्रयपाशायुधशालाम् । तत्र च गतः स चक्ररत्नं नमश्चक्रे आलोकमात्रेऽपि, यतः क्षत्रियाः शस्त्रं परमदैवतमिव बहुमन्यंते । तदनु लोमहस्तकेन तत्प्रमार्जनं निर्माय पवित्रवारिभिः प्रक्षालनं च निर्माय गोशीर्षचन्दनसुरभिकुसुमगंधचूर्णवसनाविभूषणादिभिस्तदर्चनं चकार । तदनु चक्ररत्नस्य पुरतोऽष्टमंगलाऽऽलिखनं पंचवर्णप्रसूनप्रकरं धूपोत्क्षेपं च चकार । तदनु तत्त्रिःप्रदक्षिणीकृत्य सप्ताष्टपदान्यपसृत्य वामं जानुमाकुंच्य दक्षिणं च क्षितौ विन्यस्य चक्ररत्नं नमश्चकार चक्रधरः । तदनु तत्रैव कृतावासश्चक्री चक्ररत्नस्याष्टाह्निकामहामहं व्यधात् प्रमोदमेदुरमनोवृत्तिः । पौरजनेनापि महद्धर्या चक्ररत्नार्चामहश्चक्रे, यतो नृपानुगाः प्रजा भवेयुः ।

अथ च चक्ररत्नदर्शितवर्त्मना दिग्जयं विधित्सुर्भरतभूपतिर्मंगलस्नानकृते स्नानागारमगान् महद्धर्या । तत्र विभूषणानि

तत्र च सहस्रपाकादिसुगंधितैलैरभ्यक्तो रोमत्वग्मांसा-
विमुच्य स्नानोचितवसनं परिधाय प्राचीमुखो रत्नमयसिंहासने स न्यपदत् । तत्र च सहस्रपाकादिसुगंधितैलैरभ्यक्तो रोमत्वग्मांसा-स्थिसुखाभिश्चतुर्विधाभिः संवाहनाभिर्मर्दनीयनरैर्मर्दितदेहः कनकमणिमयकंकणधारिवारवनिताभिः सुरभिपवित्रांबुभिः कारितस्नपनो दिव्यविलेपनैर्विलिप्तसकलांगस्तिलकमुकुटकुंडलहारकेयूरादिभिरलंकारैरलंचकार श्रीभरतनरपतिर्निजतनुम् । तदनु वारवधूभिश्चामराभ्यां वीज-मानः करधृतकनककुंभोपशोभितश्वेतातपत्रछत्रधरेण पृष्ठतोऽनुगम्यमानः स समारुरोहैरावतमतंगजानुकारि-करिरत्नं षोडशयक्षसहस्रैः परिवृतः स च मत्तमतंगजो मदजलैरकालवर्षं चकार गर्जितरवं कुर्वाणः । तदा च वंदिजनैश्चक्रे युगपज्जयजयारावः दुंदुभिश्च ताड्यमानो दशदिग्मुखानि नादेन तदा पूरयांचकार, अन्यान्यपि तूर्याणि तदा ताडितानि गगनांगणं शब्दाद्वैतमयं कुर्वाणानि वादित्रिकैः । एवं गजगर्जित-हयहेषित-सुभटसिंहनाद-रथचीत्कारनानाऽऽतोद्यनिनादादिप्रभवशब्देन दशदिग्मुखानि पूरयन् कुंजररत्नमारूढः प्रौढविभवेन पूर्वं पूर्वाशां प्रति चचाल विशांपतिः । तदा च तत्सैन्याग्रतो यक्षसहस्राधिष्ठितं चक्ररत्नं चचाल मार्तंडमंडलवत्तेजसादीप्यमानम् । तदा चक्रिणा समं दंडरत्नधरस्तुरगरत्नं समारूढः सुषेणनामा सेनान्यचलत् । तथा शांतिक-कर्मणि निष्णात-पुरोहितरत्नं संचारिसत्र-शालासमान-सकलसार्वभौमसैन्योचितधान्यपूरककौटुम्बिकरत्नम्, सद्यः सार्वभौमोचितसौधादिविधायि वर्द्धकिरत्नम्, समुत्पन्नप्रयोजन-द्वादशयोजनविस्तारि द्विहस्तमितचर्मरत्नम्, ध्वांतविध्वंसनक्षममणि काकिणीरत्नम्, खड्गरत्नानि सार्वभौमेन समं चेलुः । एवं चतुरङ्गचमूपरिवृतश्चक्रवर्ती चक्रप्रदर्श्यमानमार्गः सर्वदिग्जयसूचकानुकूलानिलशकुनवर्द्धितोत्साहः प्रयाणमकरोत् । एवं च योजनमानं मार्गमतिक्रम्य चक्ररत्ने स्थिते चक्रिसैन्यमपि स्थितं तत्र वर्द्धकिरत्नकृतावासम् । एवं च चक्ररत्नस्थित्यनुसारेण जने योजनमानं प्रवृत्तिमगमत ।

एवं चक्ररत्नदर्शिताध्वना योजनमानैः प्रयाणैः प्राप गंगापगाया दक्षिणकूलं कतिपयदिनैर्भरतसार्वभौमसैन्यम् । मार्गे च सर्वत्र तदा सेनानीरत्नं दण्डरत्नेन विषमा भूमिं समां चकार सैन्यसुखसंचारकृते । तच्च मंदाकिनीपुलिनं विपुलमपि वर्द्धकिरत्नकृतावासपटकुट्यादिभिः सघटं समभूत् । तत्र च सैन्ये विनीतानगर्यामिव चत्वराणि त्रिकाणि विपणिश्रेण्यश्च समभूवन् । तत्र च संप्राप्यमाणसर्वार्था नानाविधपटकुटीकृतावासाः स्वसौधेष्विव स्थितमात्मानं मन्यमानाः सैनिका नामंस्त कष्टस्य लेशमनागपि । एवं चाहोरात्रे समतीते प्रभाते पुनरपि चक्ररत्नं योजनमेकमगमत् । तदनुगं चक्रिसैन्यमपि । एवं योजनमानैः प्रयाणैर्दिने दिने गच्छंश्चक्रदर्शितमार्गश्चक्री मागधतीर्थसमीपं समाजगाम । तत्र च पूर्वोदधितटे चक्री शिबिरनिवेशं कारयामास । तदा च वर्द्धकिरत्नेन चक्रिणः सकलसैनिकानां च कृते निर्मिता आवासाः, एका च पौषधशाला चक्रिपौषधकृते । तदा च चक्रवर्ती मत्तमतंगजस्कंधादुत्तीर्य पौषधकृते पौषधशालां विवेश । तत्र च संस्तृतदर्भसंस्तारको निमुक्ताभरणमालाविलेपनव्यापारो ब्रह्मव्रती धौतवस्त्रद्वितयधारी मागधतीर्थपतिदेवं मनसि चिंतयन् कृताष्टमः प्रपेदे पौषधं सर्वदुरितौषधम् । अष्टमे च पूर्णे पौषधं पारयित्वा पौषधशालाया निर्ययौ चक्री स्नानमंडपं च ययौ । तत्र च स्नानं विधाय कृतबलिकर्मा पताकापरिमण्डितं नानाविधशस्त्रगणसंपूर्णं घंटाटंकारबधिरितदिगंतरं पवनवेगिरथ्यद्वयोपशोभितं जंगमनगोपमं रथवरमारुरोह भरतनरपतिः । तदा च नृपमनोभाववेत्ता सूतो रश्मिचालनमात्रसंज्ञयाऽचालयद्रथ्यवरौ । एवं रथवरमारूढः पृष्ठतश्चतुरंगया सेनयानुगम्यमानमार्गो नृपतिः पाथोनिधिसमीपं समाजगाम । तत्रागत्य रथेन जानुदघ्नजलमवगाहयामास सागरस्य । तत्र च गत्वा धनुषि ज्यां प्रगुणीकृत्य टंकारस्वरमकरोत् । तदन्विषुधेराकृष्य बहिरंतर्सुरपुरेव च नागासुरवैनतेयकुमारादिदेवैरधिष्ठितं निजनामांकितं काञ्चनमयं सायकं शिञ्जिन्यामारोपितमाकर्णान्तमाकृष्य मागधतीर्थपतिदेवं प्रति मुमोच भरतसार्वभौमः । तदनु स शिलीमुखः

प्रोद्दामपक्षप्रभंजरवमुखरितदशदिग्मुखः क्षणादेव द्वादशयोजनान्यतिक्रम्य मागधतीर्थसदस्यपतत् सभाक्षोभमादधानः। तस्मिन्नकांडविद्युद्दंड इव कांडे निपतिते कोपाटोपपूरितचित्तः स्वदक्षिणपाणिनाऽयुधमाददानो वामहस्तेन निजासनं ताडयन् मागधतीर्थपतिरेवमवोचत्। अहो कोऽयमप्रार्थितप्रार्थकः फणिपतेर्मणिमादातुमिच्छति। तथा वैनतेयपत्रैरवतंसं कृतांतमहिषेण पानीयमानयितुमैरावतरदैस्ताडं यो मां कोपयति पत्रिक्षेपेण पादघातेनेव सुखसुप्तं केसरिणं तदपनयानि संप्रत्येव वज्रीवासुरपतेस्तस्याहंकारमित्युदीर्य रयादेव मागधतीर्थपतिदेवः सिंहासनादुत्तस्थौ कोशात् कृपाणदंडमाकृष्य तत्कम्पनपरः। तत्परिवारोऽपि कोपाटोपपरः समुत्तस्थौ सकलोऽपि। तदा च केचिद्देवा वियति खड्गदंडं द्योतयामासुः, केचिच्चकुंतोल्लालनं चक्रुः, केचिच्च परशूनाददिरे, केचित् मुद्गरान्, केचित् शूलान्, केचिद्देडानुदक्षियन्, केचित् पाणितलाघातं चक्रुः, केचिच्च सिंहनादं, केचिद् याहि याहीत्यूचुः, केचिच्च तिष्ठ तिष्ठेति, एवं विचित्रचेष्टापरे परिकरे संजाते सति तदमात्यः सम्यग्मार्गणं निरूपयामास। निरूपयँश्च तस्मिन् शिलीमुखे मंत्री वर्णानालोकयामासेति। 'यदि युष्माकं साम्राज्येन सौख्येन च कार्यं तदोपायनमादाय पर्युपास्तिं कुरुध्वम्, एवमादिशति त्रिभुवनपतेः श्रीऋषभस्य सूनुर्भरतनामा प्रथमः सार्वभौमः।' एवंविधान्यक्षराणि वाचयित्वा मंत्री मार्गणं स्वामिनो दर्शयामास, दर्शयित्वा चैवमवोचत्। भोः! भो! सर्वे देवा मा मुधा कोपाटोपं कुरुध्वम्। यतो भरतक्षेत्रे भरतनामा प्रथमः सार्वभौमः समुत्पन्नः। स च दंडं याचते निजाज्ञांगीकारकारणपुरस्सरम्। असौ चालंघ्यशासनः। कदाचिदग्निर्न दहेत्, कदाचित् पवनोऽपि स्थैर्यं भजेत्, कदाचिन्मेरुमहीधरोऽपि कंपेत, कदाचिदंभोधिरपि शोषं यायात्तथापि न कदाचित् केनचिज्जीयते चक्रधतुलबलः। तत्कोपं संहृत्य स्वस्थीभवंतु सर्वे। एवं पर्षदमनुशास्य मंत्री मागधतीर्थपतये विज्ञपयामास 'स्वामिन्नानारत्नाद्युपायनमादाय पादावधार्य्यतां श्रीभरतभूपतिपर्युपास्तिकृते' इत्यमात्येनोक्ते

सज्जीकृतप्राभृतः श्रीमागधतीर्थपतिर्भरतभूपतिसमीपं समाजगाम सपरिकरः । तत्र चागत्य प्रणतिं विधाय विज्ञपयामासैवं 'स्वामिन्नद्य त्वं महापुण्यैर्दृष्टोऽसि । तदद्यतनमेव दिनं धन्यं यत्र त्वं नयनामृतवर्षी दृश्यसे । यथा श्रीऋषभतीर्थपतिः प्रथमस्तीर्थकरस्तथा त्वं प्रथमः सार्वभौमो विजयसे । त्वं भवान् प्रतिमल्लः शचीपतेरिव । मम तु प्रमादपरवशस्य कृत्यज्ञापनाय सायकः प्रेषितस्तत्रभवद्भिर्भवद्भिः प्रसाद-माधाय तदतः परं भवतामाज्ञा महातीर्थशेषामिव मौलौ विधास्ये । भवद्भिः प्रेष्य इव मागधतीर्थे स्थापितः सर्वदैव भवदाज्ञावशंवदः स्थास्यामि । तदिदं मागधतीर्थमहं मदीयश्च सर्वपरिच्छदः सर्वमिदं भवदीय'मित्युदीर्य तं चक्रिनामाङ्कितं मार्गणं मागधतीर्थपयःकुण्डले कोटीरं च चक्रिणे ढौकयामास मागधतीर्थेशः । सार्वभौमेनापि स सन्मानितो विसर्जितश्च गतः स्वस्थानम्, सार्वभौमोऽपि रथं पश्चाद् वालयित्वा ययौ निजसैन्ये । तत्र च रथादवतीर्य स्नानं विधाय विदधे विधिवदष्टमभक्तपारणकं, पारणकं च विधाय महद्ध्या मागध-तीर्थपतिमुपनतमुद्दिश्याऽष्टाह्निकामहं कारयामास वसुमतीपतिः ।

तदनु च चचाल चक्ररत्नं प्राग्वत् वियति दक्षिणस्यां दिशि वरदामतीर्थं प्रति तदनुगः ससैन्यश्चक्रवर्त्यपि । एवं चक्रानुगं चक्रिसैन्यं क्रमेण प्रापद्दक्षिणाम्भोधितीरं योजनमानैः प्रयाणैः । तत्र चक्ररत्ने स्थिते चक्रवर्त्यपि तस्थौ वर्द्धकिरत्नविहितसकलचक्रि-सेनोचितावासः । तत्र च पौषधशालायां कृताष्टमतपा वरदामदेवं चित्ते विधाय तस्थौ तदेकाग्रमनाः । तदन्वष्टमान्ते प्राग्वद्रथवरमारुह्य ययौ भरतनृपतिर्दक्षिणाम्भोनिधौ आतुम्बजलं यावत् । तत्र च प्राग्वद्गुणविक्षेप विशिखं वरदामदेवं प्रति । स च पवनवेगविजयी-बाणः क्षणादेव द्वादशयोजनान्यतिक्रम्य न्यपतद् वरदामदेवसदसि । तं च निपतितं निरीक्ष्य रोषारुणनयनः क्षेप्तारमनेनैव शरेण हन्मीति वदन् सिंहासनादुत्थाय जग्राह मार्गणं पाणिना, गृहीत्वा च तद्बाणलिखितान्यक्षराणि वाचयित्वा गलितगर्वः संहृतरोषः स

वरदामदेवः कथयामास सभ्यान् प्रति। 'भोः! देवाः! मा मुधैव क्रुधं कुरुध्वं मदनुवर्त्तनया, यतः समुत्पन्नो भरते भरतनामा प्रथमश्चक्रवर्त्ती । स च चंडशासनोऽवश्यं सेवनीयस्तत् सज्जीकुरुध्वमुपायनानि, यथा तत्प्रणतिः क्रियते ।' इत्युदीर्य स्वाधिकारिसुरसज्जीकृतप्राभृतः सपरिच्छदः स वरदामतीर्थपतिदेवः सायकं तं समादाय समाययौ श्रीसार्वभौमसमीपम् । तत्र चागत्य श्रीमंतमार्षभेयं प्रणम्य श्रुत्वा च तं शरं रत्नमयं कटिसूत्रं च विश्राणितवान् मौक्तिकनिकरं रत्ननिकरं चोपायनं ढौकयामास । तच्च सर्वमुपादाय तं सबहुमानमालाप्य तं सेवकजनमिव वरदामतीर्थे स्थापयित्वा निवर्त्तयामास रथं स्वशिबिरं प्रति । रथाच्चावतीर्याष्टमभक्तांतपारणमकरोद् भरतेश्वरः । तदनु वरदामदेवमुद्दिश्याष्टाह्निकामहं कारयामास भूवासवः ।

तदंते च चक्ररत्नं चचाल प्रतीचीं प्रति तदनुयायी चक्रवर्त्त्यपि । एवं योजनमानैः प्रयाणैः कतिचिद्भिर्दिनैः पश्चिमांभोधिसमं समाजगाम सार्वभौमः । तत्र च पौषधागारे प्रभासतीर्थपतिदेवं मनसि विधाय सपौषधमष्टमभक्तं कृत्वा पौषधांते रथवरं समारुह्य पयोधौ नाभिदघ्नं जलमतिवाह्य शरं मुमोच, तस्मिन् द्वादशयोजनान्यतिक्रम्य सभायां निपतिते प्रभासतीर्थपतिः क्रुद्धः तद्गतवर्णान् विलोक्य पुनः प्रशान्तमनाः शरमादाय सपरिच्छदः समाययौ सार्वभौमसन्निधाने । तत्र चागत्य चक्रिणं प्रणम्य मार्गणं प्राभृतेन सममुपढौकयामास चक्रिणापि स बहुमानं संभाषितः स्वाज्ञाधरतया प्रभासतीर्थे च स्थापितः । तदनु चक्री रथं चालयित्वा समागतः सेनायां पारणमकरोत् । तदनु प्रभासतीर्थपतिमुद्दिश्याष्टाह्निकामहं विधापयामास सार्वभौमः ।

तदंते च चक्री चक्ररत्नानुगः सिंधुमहासरितस्तीरं दक्षिणमाजगाम । तत्र च प्राचीसंमुखं गत्वा सिंधुसुरीसदनसन्निधाने स्कंधावारं निवेशयामास । तत्र च वर्द्धकिरत्नविहिते पौषधनिकेतने सपौषधमष्टमभक्तप्रत्याख्यानं व्यधाद् वसुधाधवः । तदंते च

चलितासना सिंधुदेवताऽवधिसंवेदनेन विज्ञाय चक्रिणं सप्राभृता समाययौ सार्वभौमांतिके । तत्रागत्य वियति स्थिता जयजयेत्याद्याशीर्वचनैश्चक्रिणमभिनंद्य तव प्रेष्यिकाऽस्म्यहमित्युक्त्वाऽष्टोत्तरं रत्नकुंभसहस्रं रत्नमये भद्रासने रत्नमयान् बाहुरक्षान् कटकान् दिव्यानि च वासांस्युपढौकयामास । तदनु चक्रधराज्ञां स्वमूर्ध्नि विधाय तेन सन्मानिता विसर्जिता सा ययौ स्वकीयावासम् । तदनु चक्री पारणकं कृत्वा सिंधुदेवीमुद्दिश्याष्टाह्निकोत्सवं कारयामास ।

तदनु चक्ररत्नप्रदर्शितवर्त्मनोदक्प्राच्या दिशा व्रजन् कतिपयदिनैर्भरतनृपतिर्भरतार्द्धद्वयसीमाविधायिनं वैताढ्यनगं प्राप । तत्र च दक्षिणनितंबे स्कंधावारनिवेशं चकार । तत्र च पौषधशालायां कृताष्टमतपाः पौषधव्रती वैताढ्याद्रिकुमारं मनसि चिंतयंस्तस्थौ चक्रवर्ती । तदंते च कंपितासनः स सुरोऽवधिज्ञानेन प्रथमं सार्वभौमं समायातं विज्ञाय तत्पर्युपास्तिकृते तदंतिके समागतोऽंतरिक्षगतो जय जय ध्वनिं कुर्वन् भवतः प्रेष्योऽस्मीत्युदित्वा नानाविधानि रत्नानि नानाविधानि भूषणानि नानाविधानि देवदूष्याणि च ढौकयामास सार्वभौमाय । तच्च सुरप्राभृतीकृतं सर्वमादाय बहुमानपूर्वमालाप्य स विसर्जितस्तदनु पारणकं कृत्वा तं सुरमुद्दिश्याष्टाह्निकमहं कारितवांश्चक्री ।

तदनु चलिते चक्ररत्ने तदनुगश्चक्रवर्ती तमिस्रां गुहामाप । तत्र च तमिस्रांतिकं सैन्यं निवेशयामास । तत्र च वर्द्धकिरत्ननिर्मितपौषधसदने पौषधव्रती कृताष्टमतपाः कृतमालसुरं चेतसि चिंतयामास चक्रवर्ती । अष्टमांते च चलितासनः स सुधाशनः प्रयुक्तावधिसंवेदनश्चक्रवर्तिनमायातं विज्ञाय समाययौ तत्संनिधाने समागत्य च विज्ञप्तवान् 'स्वामिंस्तमिस्रागुहाद्वारपाल इव भवतोऽस्मी'त्युदीर्य प्रणतिपुरस्सरं स्त्रीरत्नोचितं तिलकचतुर्दशमलंकारनिकरं तदुचितकुसुममाला देवदूष्याणि च विश्राणयामास । सार्वभौमेनापि

तत्सर्वमादाय स प्रसादमालाप्य विसर्जितः स सुरः स्वस्थानमगमत् । तदनु चक्रपाणिना पारणकं कृत्वा कारितोऽष्टाह्निकामहस्तं सुरमुद्दिश्य ।

तदनु सुषेणनामानं सेनास्वामिनमाकार्य कथयामास चक्री यत् समुद्रसिंधुवैताढ्यसीमानं दक्षिणं सिंधुनिष्कुटं च चर्मरत्नेन सिंधुसरितमुत्तीर्य साधय' इति चक्रिणा निगदिते बुद्धिनिधिस्तेजस्वी सेनापतिः सकलम्लेच्छभाषानिपुणः सर्वलक्षणलक्षितः सुरसहस्रा-धिष्ठिततनुः सार्वभौमादेशशिरस्यारोप्य गतः स्वसौधं तदनुसामंतादीनादिदेश म्लेच्छदेशसाधनोद्यतस्तत् प्रयाणकृते संज्ञीभूतेषु च तेषु स्नातः कृतबलिकर्मा निर्मितकौतुकमंगलप्रायश्चित्तः कंठे रत्नमयग्रैवेयकं दधानश्चिह्नपट्टांकितललाटपट्टः संवर्मिततनुः समात्तनानाविधा-युधो गणनायकदंडनायकसार्थपतिदूतसंधिपालादिभिः परिवृतः कुंजररत्नमारुरोह सेनापतिर्दिवस्पतिरिवैरावतम् । तदा च मस्तके ध्रिय-माणश्वेतातपत्रः सितवरचामराभ्यां वीज्यमानः समं सार्वभौमार्द्धसेनया कतिचित्प्रयाणैर्ययौ सिंधुश्रोतस्विनीतीरे । तत्र गमनादनु यद् द्वादशयोजनानि विस्तरति, यत्र च कौटुंबिकरत्नेनोप्तानि धान्यानि दिनात्यये निष्पद्यन्ते यच्च सरित्सागरादिनीरतारणक्षमं तच्चर्म-रत्नं चमूपतिः स्वहस्तस्पर्शेन विस्तारयामास सिंधुसरिज्जले । तत्र च सकलसैन्यं निवेश्य पद्ययेव चर्मरत्नेन सिंधुशैवलिनीमुत्तीर्य्य सिंधुदाक्षिणनिष्कुटस्थितान् शबरबर्बरसिंहलकालमुखयवनप्रभृतीन् म्लेच्छान् लीलयैव साधयामास । अन्या अपि वैताढ्यनगोपत्यकास्थिता नानाविधा म्लेच्छजातीर्विजित्य कस्थजनपदावनिं निखिलां च समाक्रम्य तस्य समभूमौ स्कंधावारनिवेशं चकार चमूस्वामी । तदा च तत्र स्थितस्य चमूपतेः केचित् स्वर्णोत्करमुपायनं चक्रुः, केचिन् माणिक्यनिकरं, केचिदकालजलदगर्जितरवकारिवारणगणान्, केचिच्च पंचगतिकरणचतुरतुरगप्रवरान्, केचिच्चलदचलतुलाधरवररथनिवहान्, केचिन् मणिगणं, केचित् मौक्तिकप्रकरं, केचिन्मुकुटकुंडल-

केयूरहारार्द्धहारांऽगुलीयकग्रैवेयकादिमणिसुवर्णमयनानाप्रकारालंकारान्  केचिच्चीनांशुकपट्टांशुकादिनानाविधवसननिवहान् , अन्यदपि यत्तत्र सारभूतं तत्तस्मै चमूस्वामिने ढौकयामासुस्ते भूमिपतयः ढौकयित्वा च ते विज्ञपयामासुरेवं यदद्यप्रभृतिभवदाज्ञावशंवदतया स्थास्यामः स्वीयस्वीयजनपदेषु । सेनापतिरपि तान्नरपतीन् सत्कारपूर्वं विसर्जयित्वा प्राग्वत् सिंधुसरितमुत्तीर्य ययौ चक्रिणोऽतिके गत्वा च म्लेच्छमहीपतिप्राभृतीकृतमतंगजाश्वादिसर्वं चक्रिणोऽग्रे ढौकयामास । चक्रिणापि स सन्मानितो गतः स्वावासम् ।

अथ च चक्री कतिचिद्दिनानि तत्र तस्यावयोध्यायामिव समाधिना, अन्यदा भरतभूपतिः सैन्यपतिमाकार्यादिष्टवान् यत् 'त्वं तमिस्रागुहायाः कपाटद्वयमुद्घाटय' इति नृपतिदत्तादेशं मौलिमिव मौलौ विधाय सैन्यपतिः कृतस्नानः सितपरिधानः स्नानमंडपान्निर्गत्य कनकमयं धूपदहनं हस्ते गृहीत्वा तमिस्राद्वारमाजगाम । तत्र चालोकमात्रे प्रणामं विधायाऽष्टाह्निमहं चकार, गुहाद्वारस्य पुरतोऽखंडैस्तंदुलैरालिलेख चाष्टमंगलीम् । तदनु सेनापतिः सप्ताष्टपदान्यपसृत्य दंडरत्नेन गुहाकपाटद्वयं ताडयामास बाढतरम् । तदा च तडत्तडिति निधानं तत्कपाटद्वयमुद्घाटितं कृतमालत्रिदशेन । एवं विधाय निधेपशिरोरत्नं स सेनापतिर्विज्ञपयामास भूवासवं भरतं तत्कपाटोद्घाटनम् । तदनु करिरत्नमारूढ भरतभूपति. सैन्येन समं समाययौ तमिस्रागुहायाम् । तत्रागत्य यस्मिन्मस्तके निवेशिते नोत्पद्यंते जातुचित्सुरनरतिर्यग्निर्मिता उपसर्गाः, यद्दुःखांधकारविध्वंसि, यन्महिम्ना शस्त्रामयप्रभृतयो न प्रभवंति सर्वमंत्रवादिसाधनभेदाः, यच्च यक्षसहस्रसमधिष्ठितं, यच्च सहस्रकरवत्तेजोभरभासुरं, तच्चतुरंगुलायतं पृथुत्वेऽगुलद्वयप्रमाणं मणिरत्नं हस्तिरत्नदक्षिणकुंभस्थले विनिवेश्य, चतुरंगचमूपरिवृतश्चक्रदर्शितमार्गेण गुहाद्वारं विवेश विशांपतिर्भरतः । तत्र च प्रविष्टेन नृपेणाष्टसुवर्णप्रमाणं षड्दलं द्वादशकोणं समतलं मानोन्मानप्रमाणयुक्तमष्टकर्णिकं चतुरंगुलं यक्षसहस्राधिष्ठितं द्वादशयोजनस्थितांधकारनिवा-

रणमधिकरणीसंस्थानसंस्थितं मार्त्तंडमंडलवत् प्रकाशकारकं काकिणीरत्नमादाय गौमूत्रिकाऽऽकारेण गुहाया उभयोः पार्श्वयोः पंचधनुः-
शतायामान्यैकैकयोजनमुद्योतविधायकानि योजनांते मंडलान्यालेखितानि तेन काकिणीरत्नेन। तानि च सर्वसंख्ययैकोनपंचाशत्संख्यान्य-
भूवन्। यावज्जीवति सार्वभौमस्तावदऽपिहिता तिष्ठति कंदरा, मंडलान्यपि सततोदितमार्तंडमंडलवदुद्योतकानि तिष्ठन्ति। एवं काकिणी-
रत्नकृतमंडलैरुद्योतिता तमिस्रा समभवत्तदा गतान्धर्था। तदा च मंडलोद्योतेन सुखं चरता चक्रिचतुरंगसैन्येन कर्करादिभिः खिलोऽपि
निखिलो गुहामार्गः सुखातिक्रम्यः समभूत्। एवं गजगर्जितहयहेषिततूर्यनिर्घोषादिशब्दैः प्रतिच्छंदो ध्वनिशतसहस्राणि कुर्वाणं सार्वभौम-
सैन्यं समासदत्तमिस्रागुहाया मध्यभागम्। तत्र चोन्मग्नानिमग्नानामधेये द्वे श्रोतस्विन्यौ; तत्रोन्मग्नायां पाषाणोऽपि तरत्यलाबुफल-
वत्, निमग्नायां तु प्रस्तरवत्तुंबीफलमपि निमज्जति। इमे उभे अपि तटिन्यौ तमिस्रायाः प्राच्यभित्तेरंतर्भूय सागरमध्यभागमाप्नुतः।
तयोश्च वर्द्धकिरत्नेन तत्कालमेव पद्या 'बद्धा' सुखातिक्रम्या सा हस्तवत्समतला वज्रनिष्पादितेव दृढतरा समभूत्। तया च पद्यया
चक्रिसैन्यं सुखेन ते शैवलिन्यावतिक्रम्य समायातं तमिस्राया उदीचीने द्वारे। तदा च तद्द्वारस्थिते वज्रमये कपाटे स्वयमेवोद्घटिते।
तदा च प्रथमतया निर्ययौ कंदरायाश्चक्रं केसरिवद् विभीषणम्। तत्पृष्ठे च तदनुयायी चक्रवर्ती तत्पृष्ठतश्च चतुरंगा चमूः। एवं पंचा-
शद्योजनायामां तां तमिस्रां गुहां सुखेन समतिक्रम्योदीचीनं भरतार्द्धं जेतुं विवेश विशांपतिः। तत्र च विपुलवाहनशयनासननिकेतन-
परिजनाः प्रभूतधनधान्यसंचयाः प्रभूतरजतजातरूपाः प्रायः केनाप्यनिर्मितपराभूतयः प्रचंडकोदंडकांडकलापदलितप्रबलप्रत्यार्थसार्थाः
सर्पा इव प्रसर्पद्दर्पाः परिवसंति स्म नानाविधजातयो म्लेच्छनृपतयः। तत्र च वैनतेय इवोरगजातीस्ताः किरातजातीः दशजेतुं प्रवृत्ते सति
भरतभूपतौ तेषामनिष्टसूचकाः समभूवन्नेवंविधा महोत्पातास्तथाहि तदा तज्जनपदमही समं महीरुहोद्यानभवनादिभिः प्रचकंपे प्रकामं

तन्मन ग्रंथ कुर्वाणा प्राणवल्लभेन प्राणेशेन भृशमाश्लिष्टा। तदा च समजायंत दिशांदाहाः पुरोभावितद्वनितानितांतविरहमहाद्भुतमहदाहाभिव्यंजकाः। तदा च बभूवुः सर्वा अपि दिशो मलिनानना अभिव्यंजयंत्य इव भाविनीं तत्कांतामलीमसास्यताम्। तदा च समंततस्तद्देशेषु विजृंभिरे दुर्वातास्तद्दयितापुरःसंभविविरहमहानिःश्वाससमीरणसंसूचकाः। तदा च नियतो निपेतुः समंतादुल्काः सूचयंत्य इव माविनं तदंगेषु भरतभूपतिसेनापतिसुषेणहस्ततः शस्त्रघातपातम्। तथा अभूवन्निर्घातघनयस्तेषां भीतिहेतवः सुषेणसेनापतिधनुर्ज्याटंकाररवोत्थभयाभिव्यंजकाः। एवमनेकप्रकारोत्पातैश्चितातुरीभूते सति किरातजातिनिकरे द्वादशयोजनविस्तारिचमूपरिवरितः श्रीभरतभूपतिः समापत्तज्जनपदेषु।

अथ च वनकरदिमिमिश्रितखचरजतजातरूपशलायसमयनानायुधनिवहप्रकटीभवत्तेजोभरभासुरं नभोंगणं कुर्वाणं प्रचलशैलानुकारिकरिनिकरजनिताशलस्तनित-भ्रांतिजनकगर्जारवहयहेषितसुभटसिंहनादनानातूर्यनिनादोत्थमहारवेण दशदिग्मुखानि मुखराणि कुर्वाणं चलद्भास्वद्मंडलनिभेन पुरश्चरेण चक्ररत्नेन दुरालोकनीयं श्रीभरतसार्वभौमसमागतं निरीक्ष्य ते म्लेच्छाश्चुक्रुधुः। तदा च ते क्रोधाध्मातचेतोवृत्तयः परस्परमालोचयामासुः। कोऽयमप्रार्थितप्रार्थको दुरंतलक्षणः प्रक्षीणपुण्यचतुर्दशीजन्मा समायातिस्मास्मद्देशेषु निजबलमनालोच्य। तदागच्छंतमेवैनं निवारयामः प्रथममेवोद्गच्छंतमिव व्याधिम्। इति ते परस्परमालोच्य स्वीय-स्वीयं चतुरंगचमूचक्रं सज्जयामासुः। तदा च ते संवर्मितचर्माणः शिरस्त्राणकृतशिरस्त्राणा नागोदनिर्मितोदरत्राणाः प्रबलबाहुबलविहितबाहुयुगलत्राणाः स्वजंघारक्षणकृते प्रगुणीकृतमलुणा अंगीकृतजालिकाः सज्जीकृतशक्तिकुंतशतघ्नीतोमरमुद्गरतरवारिपरशुप्रभृतिनानाप्रकारप्रहरणाः। केचित् करिसमारूढाः, केचित्तुरगवरारूढाः, केचिद्रथवरमधिरूढाः, केचनाश्वतरवाहनाः, केचन करभवाहनाः, केचन शिबिकाधिरूढाः, केचन

पत्तिरूपाः, प्रधावंतिस्म किराताः कोपाभिमानाभिनिवेशवशीकृतस्वांतवृत्तयः श्रीभरतभूपतिवाहिनीहतिहेतवे। तदा च ते निकटमागताः प्रथमप्रावृषेण्यवारिवाहा इव वारिधाराभिश्शरघोरणीभिरभितो वर्षयामासुः सार्वभौमाग्रसेनोपरिष्टात्। तदा च कुंताकुंति खड्गाखड्गि केशाकेशि संग्रामः समभूद् भरताग्रसेनया समं म्लेच्छानाम्। एवं च युद्धे जायमाने भग्नप्राये संजाते सति भरतस्याग्रसैन्ये सुषेणनामा सेनास्वामी किरातक्रियमाणं निजसेनापराभवं निरीक्ष्य रोषारुणनयनो वैनतेय इव द्विजिह्वांस्तान् किरातान्नाशयितुं संभ्रमंगवांबभूव। तदा चांगीकृतकवचोऽशीत्यंगुलोत्सेधे नवनवत्यंगुलविशालमष्टोत्तरशतांगुलायतं द्वात्रिंशदंगुलोत्सेधनिरंतरोन्नतशीर्षं विस्तीर्णपृष्ठिभागं नवनीताऽर्कतूलतुल्यलोमधारिणं द्वादशावर्त्तशोभितप्रशस्तलक्षणलक्षितं तारुण्यालंकृतं शुकपिच्छसदृक्छविं सादिनेतोनुगामिगतिगामिनं कनककनकरत्नमयनिगालविराजितं मधुरध्वनिविधायिकांचनमणिमयकिंकिणीनिकरपरिकरितं पंचवर्णमणिमिश्रितजातरूपमयाभरणभूषितं कनकमयांभोजभ्राजितभालस्थलं कोमलनिर्मलतमचालव्यजनावतंसं पंचगतिकृतश्रमंप वनवेगिजित्वरवेगं हेलयैव योजनशतमितक्षेत्रोल्लंघनेऽप्यजातश्रमं जंगालजलमहास्थलशैलादिदुर्गमार्गोच्चारणनिपुणं किंनन्मक्षीलग्नचलनतया वियतीव संचरंतं पंकजामोदविजनिःश्वासं कमलापीडारत्नं तुरगवरमारुरोह समुल्लसत्पुलकश्शरोहांकिततनुः सुषेणनामा सेनापतिः। एवमश्वरत्नं समारूढ़ चमूपतिः कृपाणरत्नं पाणौ चकार तच्च कीदृशं पंचाशदंगुलदीर्घं षोडशांगुलपृथुलमर्द्धांगुलबाहल्यं कांचनरत्नमयत्सरुविराजितं कोशादाकृष्टं तीक्ष्णधारं सर्ववैरिसंहारकारणं तेन च खड्गरत्नेन सन्नद्ध इव पंचाननः स चमूस्वामी तुरंगमरत्नाधिरूढश्चतुरंगचमूपरिवेष्टितः कृतांतरसनोपमं कृपाणरत्नं करे भ्रामयन् मृगपतिरिव मृगयूथं प्रत्यर्थिबलं प्रणाशयन् प्रचक्रमे संग्रामम्। तदा चमूपतिविद्रावितास्ते रिपवः केचिन्मृषा जीवग्राहं, केचिज्जीवनकृते वदनेषु तृणशकलं न्यधुः, केचिद् वाजिनं केचिद् गजं केचित्स्वायुधानि त्यजंतिस्म पलायमानाः। एवं सेनापतिनिर्जितास्ते किराताः

मभूतयोजनान्यपसृत्य परस्परमालोचयामासुः, आलोचं च विधाय ययुस्ते सिंधुमहास्रोतस्विनीं तस्याश्च सैकते मिलितानिकरसंस्तारका-ण्निर्माय ते तेषूपविष्टाः छ्त्राष्टमतपसो मेघमुखान् स्वकुलदेवान्नागकुमारान् मनसि निर्माय । अथ चाष्टमतपःप्रांते कंपितासनास्ते नागकुमारास्तत्रागतास्तान् म्लेच्छानतीवार्त्तान्निरीक्ष्य प्रोचुर्नभस्तलस्थिताः 'किं निमित्तमस्मत्-स्मृति-निर्मिता युष्माभिः ।' तदा ते विरचिताञ्जलयः स्वशिरोरिव तेषां देवानां पुरतः प्रोचुस्तं भरतकृतं केनापि प्रागकृतपूर्वमात्मीयपराभवम् । उक्त्वा चोचिरे यथैष यथा-निवर्त्तते तथा यूयं कुरुत । एवं तैरुक्तास्ते प्रोचुर्नागकुमाराः 'अयं भरताभिधः सार्वभौमो देवैर्दानवैरप्यजेयो मंत्रतंत्रशस्त्रविषविषधरवै-धानरवैद्यादिभिरप्यधर्षणीयस्तथापि युष्मदुपरोधेनैनमुपसर्गयिष्याम' इत्युक्त्वा ते तिरोदधुस्तदनु ते चलदंजनाचलनिभान्यभ्राणि विकु-र्वयामासुः सार्वभौमसैन्योपरितः । तदनु ते कातरनरहृदयस्फोटकरं गर्जितरवं कुर्वाणा अंबरप्रदीपनमिवातततविद्युज्झात्कार विदधाना मुशलप्रमाणधाराभिरम्बरमुः प्रवर्षितुम् । तदा च तेन जलदजलेनापूर्यमाणे सति महीतले घोरांधकारेण च्छन्ने सति सर्वतो मार्त्तंड-मंडलोद्योते तां प्रहृष्टामरिष्टवृष्टिं निरीक्ष्य चक्रधरः स्वसैन्यस्य तत्कृतोपद्रवनिवारणाय निजदक्षिणपाणिना चर्मरत्नं पस्पर्श । तदा च नरपतिस्पृष्टं तच्चर्मरत्नं द्वादशयोजनानि प्रसारमगमत् । तत्र च चर्मरत्ने विनिवेशितसर्वसैन्यः स सार्वभौमः पोतनिविष्ट इवांभोधौ सजलसमूहे बभौ । एवमधस्तनजलोपसर्गे चर्मरत्नेन विनिवारिते सत्युपरितनतन्निवारणाय नवनवतिसहस्रमितकनकशलाकापरिकलितं मणिग्रंथिविरहितजातरूपमयदंडपरिमंडितमणिकांचनमयकणत्किंकिणीनिकरपरिकरितं शीतातपजलदजलाद्युपद्रवनिवारणप्रवणं । यक्ष-सहस्राधिष्ठितमातपत्रवारणरत्नं दक्षिणहस्तेनास्पृशत् भरतश्चक्रवर्ती । तदपि द्वादशयोजनविस्तारमभवच्चर्मरत्नवत् । एवं तेनोपरितन-जलोपसर्गे वारिते सति निरुपसर्गमभूत् मरुद्दलम् । अथ च ध्वांतविध्वंसनकृते दिने निशायाश्च तमोपगमक्षमं मणिरत्नरत्नमातप-

वारणदंडोपरि निवेशयामास महीवासवः। एवं जलपूरोपरितरदंडप्रतिरूपतामगमत्तच्छत्ररत्नचर्मसंपुटम् । तत्प्रभृति प्रवृत्ता जने ब्रह्मांडकल्पना प्रसिद्धिः। अथ च चर्म्मरत्ने कौटुंबिकरत्नेन दिनमुखे उप्तानि धान्यानि निरपद्यंत संध्यासमये । एवं प्रभातसमयोप्ताः कूष्मांडीत्रपुषीनालुंकीप्रभृतयः शाकभेदाः सायं समजायंत । एवं प्रातरुप्ताश्चूतकदलीप्रभृतयो द्रुमाः फलंतिस्म संध्याकाले । एवं सद्यः संपन्नधान्यफलशाकादिसमास्वादनसमानंदितो जनो नगरांतः स्थित इव सुखेन तिष्ठन्न मनागमंस्त सैन्यश्रमम् । एवं सपरिवारः सार्वभौमश्चर्मरत्नछत्ररत्नमध्यवर्ती लीलयैवातिवाहयामास सप्ताहोरात्राणि । तथापि तादृग्विधानेकवारिधरवृष्टिं वीक्ष्य चिंतयामास चक्रवर्ती केऽमी ममोपसर्गमेवंविधं कर्तुं प्रवृत्ताः संति पापात्मानः। इमं च सार्वभौममनोभावं विज्ञाय सर्वदा सन्निधानवर्तिनः सेवकयक्षाः सज्जीकृतोपासंडा अधिज्यीकृतधनुषो रोषारुणनेत्राः प्रादुर्भूय नागकुमारान् प्रत्येवमूचुः 'अरे किमिदमनुचितं दुष्कर्मसमारब्धमात्मानर्थकृते, यतोऽयं श्रीभरतः प्रथमश्चक्रवर्ती त्रिभुवनेऽप्यजेयस्तदेतद्विषया या युष्माकमभिभवेच्छा सा वृषभस्य विषाणाभ्यां देवदंतिनं हंतुमिच्छा । तदथापि चेद् युस्माकं स्वतनुविषया सौख्येच्छा तदैतत् सर्वं संहृत्य जीवग्राहं नंष्ट्वा यातु नो चेत्तदास्मदायुधैर्युष्मदेहस्य नितांतार्तिः संभविनी ।' इत्युक्तिसमनंतरं भीतिभीतचितास्ते नागकुमाराः कुहकवत् संहृत्य तत् सर्वं जलदपटलं गताः किरातांतिके गत्वा च कथयामासुर्यद् 'उपायनानि समादाय सार्वभौमं स्वामितया प्रपद्यध्वम् ।' इति तैरुक्तास्ते म्लेच्छा अंधकारेऽप्युद्योतकरं रत्ननिकरं प्राभृतकृते सज्जीचक्रुः । केचिदकालेऽपि जलदगर्जितध्वनिविधायकं प्रक्षरन्मदजलसमार्द्रीकृतभूतलं भद्रहस्तिनिवहं, केचित्सर्वलक्षणलक्षितं पवनवेगजयिनं तुरगनिकरं, केचिच्चजातरूपोत्करं, केचिच्च रजतपुंजं, केचिच्च चंद्रकांतसूर्यकांतादिमणिगणं, केचिज्जाति-निर्मलामलकप्रमाणमुक्ताफलकलापं, केचिच्च देवदूष्यानुकारिदूष्यप्रकरं, केचिच्च नानारत्नकरंबितमुक्ताप्रालंबं, केचिच्च ध्वांतविध्वंसकनानारत्न-

क्वचिच्छशिसूर्यमंडलतुलाधारिमहारजतमयकुंडले, केचिच्च विचित्रमणिरत्नराजमानकांचनमयाङ्गदे, केचिच्च नानाभक्तिखचितं कटिसूत्रम्, एवं सज्जीकृतनानाप्रकारप्राभृतास्ते किराताः श्रीभरतभूपतिं नत्वा समानीतान्युपायनीकृत्य विज्ञपयामासुः शिरसि घटितांजलिमुकुटाः 'जय जीव चिरं नंद सेवकजनजनितानंद भवानेव नः स्वामी। भवन्तं विहायास्मज्जनपदप्राकारप्रतिमस्य वैताढ्यपर्वतस्य प्रतोलीद्वारमुद्घाटयितुं कः प्रत्यलः स्यात्। भवन्तं विमुच्य कस्यैवं तिष्ठति नीरोपरि नभस्तले कमलानिवासकमलमिव सकलदलम्। एवं देवपतिरिवाज्ञेयो भवानज्ञातोऽज्ञानादस्माभिस्तदेनमस्मदीयमज्ञानकृतापराधं क्षमस्व क्षमानिधे! अतः परं वयं भवदाज्ञावशंवदतया स्थास्यामः' इति तैर्विज्ञप्तः श्रीभरतभूपतिस्तान्निजाज्ञावशवर्तिनो निधाय विसर्जयामास सत्कारपुरस्सरम्। यतः प्रणतिपर्यंत एव भवति कोपो महात्मनाम्। तदनु नरदेवाज्ञया सुषेणनामा सेनास्वामी वैताढ्यभूधरलवणसागरकृतसीमानं सिंधुसिंधोरुत्तरनिष्कुटं साधयामास।

अथ च सार्वभौमः पंचविधवैषयिकसुखोपभुक्तिमयं समयमतिवाहयन्निजार्यजनसंगत्याऽनार्यानप्यार्यप्रायान् कुर्वाणस्तत्र तस्थौ चिरेण। अन्यदा च चक्ररत्नं शस्त्रागारतो विनिर्गत्य पूर्वायनेन प्रस्थितं क्षुद्रहिमवन्महीधराभिमुखं तदनुयायी समं सैन्येन सार्वभौमोऽपि प्रतस्थौ तदभिमुखम्। एवं प्राग्वद् योजनमानैः प्रयाणैः प्रतिदिनं गच्छन् क्षुद्रहिमवदद्रेर्दाक्षिणं नितंबमगमच्चक्रवर्ती। तत्र च नगरदेवदारुभूर्जादिशाखिनिकरसमाकीर्णे कांतारे स्कंधावारनिवेशं कारयामास महीशासकः। तत्र च क्षुद्रहिमवत्कुमारसुरं समादिश्य महीपतिरष्टम तपो व्याघातदंते वरप्रवररथमारुह्य ययौ श्रीमान् महीशो हिमवन्नगसन्निधाने। तत्र च गत्वा च रथशीर्षेण त्रिस्तं ताडयित्वा वैशाखस्थानस्थितः स्वनामचिह्नितं चिक्षेप शरं हिमवत्कुमाराय कुसुमसायकचलित्रिजगज्जनाजेयबाणकलाधरः श्रीचक्रधरः। स च मार्गणो गगनांगणे द्वासप्ततियोजनानि गत्वा न्यपतत्सभामासीनस्य हिमवत्कुमारस्य पुरतः। तं च निरीक्ष्य क्रुधा रक्तेक्षणः पाणिना

मार्गणमादाय तद्गतवर्णांश्च वाचयित्वा सद्यः प्रशांतकोपः प्राभृतसमुदयं समादाय तत्रायातो वियति स्थितो जय-जय ध्वनिपूर्वं तं शिलीमुखं समर्पयामास महीवासवाय स त्रिदशः । तदनु कल्पसालकुसुममालां गोशीर्षं चंदनं नानाविधौषधीः पद्मनदनीरं कनकरत्नमयकटकानंगदान् देवदूष्याणि च विश्राणयामास स सुरो भूपतये । तदनु विज्ञपयामास स महीवासवं 'स्वामिन्नुत्तरदिगंते त्वदायुक्त इव स्थितोऽस्मि' इति विज्ञपयंतं तं देवं सत्कृत्य भूपतिर्विसर्जयामास । तदनु रथं चालयित्वा ऋषभकूटनगं प्रति चचालाचलास्वामी । तत्र च गत्वा रथशीर्षेण त्रिस्तं ताडयित्वा दक्षिणपाणिना काकिणीरत्नं समादाया'ऽवसर्प्पिण्यां तृतीयारकप्रांते प्रथमोऽहं भरताभिधानः सार्वभौमः' इति सौवाभिधाक्षराणि तत्पूर्वकटकेऽलिखद् भरतश्चक्रवर्ती । तदनु व्यावृत्त्य स्वसैन्ये गत्वाऽष्टमभक्तांतपारणमकार्षीच्चक्रधरः । तदनु क्षुद्रहिमवत्कुमारामरमुद्दिश्याष्टाह्निकामहामहं कारयामास भूवासवः ।

तदनु नैकसहस्रसंख्यबद्धमुकुटमहीपतिप्रणतिविपर्यीक्रियमाणचरणयामलश्चतुरशीतिलक्षतरलतरतुरंगमसमनुगम्यमानमार्गश्चतुरशीतिसहस्रमत्तमतंगजजंगममहीधरभ्रांतिकारी चलत्सौधतुलाधरचतुरशीतिशतसहस्ररथपरिकरितः षण्णवतिकोटिपदातिपरिवेष्टितश्चक्ररत्नदर्शितवर्त्मना वैताढ्यनगांतिकमगमन्महीपतिस्तत्र चोत्तरनितंबे सैन्यनिवेशं विधाप्य नमिविनमिनामानौ विद्याधरनरपती प्रति शरक्षेपं चकार चक्रधरः । तद्दर्शनसमनंतरं च रुषारुणौ विद्याबलसर्पिणौ तौ विद्याधरपरिवृढौ परस्परमेवममंत्रयतां 'यदयं भरतवर्षे भरताख्यः प्रथमसार्वभौमः समुत्पन्नः । स च षट्खंडाणि साधयन् ऋषभकूटगिरौ निजनाम लिखित्वाऽत्र समायातः पर्वतनितंबे सैन्यनिवेशं विधाय स्थितः । स च जितकासी सन्नऽस्मत्तोऽपि दंडमादातुमिच्छति, तेन स्वनामांकितबाणक्षेपमसौ व्यधात् । तदेतस्य न दास्यामो वयं दंडं विद्याबलशालिनः । किंतु संपरायं करिष्यामः सममनेन' इत्यालोच्य समरसज्जौ तौ विद्याधरदलं मेलयित्वा समायातौ शिलोच्चय-

प्रस्थम् । तदा च तयोरुभयोदग्दक्षिणश्रेण्योर्देशग्रामपुराधिपाः स्वेच्छाविरचितविमानाः स्वदेहाभरणविमानप्रभाभिः सततोदितमार्तंडमंडलमिव नभस्तलं कुर्वंतः, केचित् गंधसिंधुरमारूढाः, केचित्कनकमणिमयरथारूढाः, केचिदश्वरत्नानुकारितुरगवरारूढाः, अमोघदिव्यायुधधारिणः, वज्रमयसन्नाहविहितदेहत्राणाः, समाजग्मुर्नमिविनमिविद्याधरस्वामिसमीपम् । एवं च मिलिते सति सकलविद्याधरदले नानासिंहनादतूर्यनिनादविमानकिंकिणीक्वाणगजगर्जितहयहेषितादिशब्दैः शब्दाद्वैतमयमिव महीतलं कुर्वाणौ समरकेलिविषयविहितोत्साहौ तौ वैताढ्यसानुमतः समुत्तीर्य समायातौ श्रीभरतभूपतिसमीपम् । तदा च श्रीभरतः पुरहूतदलमिव साक्षान्नभस्तलमागतं विद्याधरदलं वियति वीक्षांचकार । अथ च विद्याधरनायकौ तौ नमिविनमी विद्याबलेन त्रिभुवनमपि तृणप्रायं मन्यमानावूचतुर्भरतं प्रति यथा 'भरता देवतानामपि सकाशाद्दंडसमादानं निरमायि तथाऽस्मत्तोऽपि चेद् दंडमादातुमिच्छसि तदा विधेहि युद्धमावाभ्यां समम्' इत्युदित्वा तौ प्रवृत्तौ समरकृते । तदा च भरतोऽपि ताभ्यां मानीताभ्यां नानाविधैर्युद्धैर्युयुधे । एवं द्वादशसंवत्सराणि विधाय नैकविधान् संपरायान्निर्जितौ श्रीभरतेन तौ विद्याधरपती प्रांजलीभूय प्रणिपातपुरस्सरं विज्ञपयामासतुरेवं 'स्वामिन् ! यद् भवता समं समरेण विजयेच्छाऽस्माकं सा शशकस्य केसरिकेसरसटाग्रहणेच्छा, यतः को भवतः परः शूरो यथा किं महद् वियतः, किं वा स्वयंभूरमणार्णवतद्दुस्तरं किं वा विधिवद्विहितदुस्तपतपसाऽसाध्यम्', इत्यादिवचनैः श्रीभरतभूपतिमभिनंद्य तावूचतुः 'कुलस्वामिन्नारंभे यदज्ञानाद्वृत्तांतरनयनतया विविधैर्युद्धैस्त्वं योधितोऽसि तमपराधं क्षमस्व क्षमानिधे । पुरा ऋषभतीर्थेशेणामिव त्वदाज्ञां शीर्षे धारयंतौ स्थास्यावः' इति विज्ञपयित्वा विनमिनामा विद्याधरस्वामी निजांगजातां सुभद्रावनितारत्नं विश्राणयामास सार्वभौमाय प्राभृतकृते ।

सा च कीदृशी शचीव समचतुरस्राकारधारिणी, रत्नघटितेव तेजःपुंजमयी, महौषधीव सर्वरोगहरा, यथा कामेनशिशिरोष्ण-

शरीरस्पर्शा, कंदर्पकृपाणानुकारिसरलतरवेणीदंडा, वालशशांकसादृश्यधारिभालस्थला नीलोत्पलतुल्यताभृदायततमनयना, स्मरणतूणीरानुसारिनासावंशा, सुपरिमृष्टदर्पणतलतुलाभृत्कपोलस्थला, विपमशरवागुरिकजनमनःकुरंगवंधननिमित्तप्रगुणीकृतपाशाविवकर्णपाशौ धारयंती, सुपरिकर्मितविद्रुमविभ्रमविधायकाधरद्वैतविभ्रमा, पंक्तिनिहितामौक्तिकोपमानभृद्दंतपंक्तिधारिणी, अंभोजसौरभ्यगुणविजयिश्वासा, निजवदनारविंदनिर्जितराकाशशांका, मन्मथमहानरेन्द्रत्रिभुवनविजयप्रयाणपांचजन्यौपम्यधारिकंठकंदला, मृणालसुकुमालतातिरस्कारिदोर्लतासौकुमार्या, जात्यजातरूपशिलातलपृथुलवक्षःस्थला, कनककुंभविभ्रमविधायिपीनोन्नतस्तनयुगला कांचनकलशपिधानीकृतनीरजानुकारिचूचुका, मदनमहानरपतिक्रीडनदीर्घिकासमाननाभिमंडला, नाभिमहानदप्रसर्पल्लावण्यजलप्रवाहप्रवर्द्धितमोहनवल्लीसमानरोमराजीविराजिता, कमलदलकोमलकरचरणतला, करकल्पतरुपल्लवोपमानधरांगुलीनिवहा, रत्नप्रभातिरस्कारिपाणिपादनखद्युतिदीप्तदेहा, अतिकृशतरकटीप्रदेशा, अतिविततनितंबस्थला, मदनसर्वस्वसेवधिभूतस्मरमंदिरकदलीस्तंभविभातिकोमलमांसलोरुयमला, अतिनिगूढं जानुप्रदेशा, एणिकाजंघान्यत्कारकारिकोमलजंघायुगला, अतिमृदुतरकूर्म्मोन्नतचलननलिनयामला, कमलदलसमानचलनांगुलीमाला, गतितर्जितमराला, देवदूष्यप्रतिमस्वच्छतमनवनीतार्कतूलतुल्यस्पर्शवसनपरिधाना, षोडशविधशृङ्गारतरंगितसौभाग्यगुणातिरेकविभ्राजमाना, किं वहुना प्रद्युम्नमहानरेन्द्रप्रत्यक्षराजधानीभूतदेहा, प्रतिप्रतीकप्रेक्षकजनजनितमनोनयनस्नेहा, एवंविधा सुभद्रा युवतीरत्नं शिरसि ध्रियमाणश्वेतातपत्रारणा पार्श्वद्वये च वीज्यमानरत्नखचितकांचनमयदंडविभ्राजमानचामरयामला सखीवृन्दपरिवेष्टिता विवाहिता स्वदुहिता विनमिविद्याभृता समं भरतेन । तदनु गजतुरगरत्नादिकमदाच्च स भरतभूजे निजजामात्रे हर्षप्रकर्षपुलकिततनुः । नमिरपि खेचरपतिर्भरतस्वामिने भरताय बहुमूल्यमणिमाणिक्यादिकं ढौकयामास । तदनु सन्मानपुरस्सरं वसुमतीवासवेन विसृष्टौ स्वस्थानं गतौ तौ मानम्लान्या समायात-

मंत्रिणी सुतानिधयं विन्यस्य साम्राज्यभारमसारकं भावयंती सर्वसांसारिकभावानां श्रीऋषभस्वामिपादमूले प्रव्रजितौ ।

सार्वभौमोऽपि वर्द्धकिरत्ननिर्मितोद्धोरशिविरप्रासादेषु सुभद्रया समं पंचप्रकारवैषयिकसुखान्युपभुंजानश्चक्ररत्नप्रदर्शितापथेन जाह्नवीतीरं समासदत् ससैन्यः । एकेषां च हीनपुण्यानां जंतूनां सर्वलक्षणविकलया कुत्सितया दुर्विनीतया कुरूपया वनितया समं संयोगः स्यात्, सोऽपि महाक्लेशेन चक्रिणस्तु वचनगोचरीकृत्यापि सर्वाभिनंदनः प्राणिनः स्वमनुजजनुः कृतार्थभूतं मन्यंते तेन स्त्रीरत्नेन समं यत् पंचविधवैषयिकसुखोपभुक्तिः स्वेच्छया तन्नूनं प्राग्जन्मनि विधिवत्सुविहितयोस्तपःसंयमयोरेव प्रासंगिकं फलं तस्मात् सांसारिकसुखप्रकारवैषयिकसुखार्थिनाऽपि धर्मोद्यम एव विधेयो यदुक्तं रम्येषु वस्तुषु मनोहरतां गतेषु, रे चित्त ! खेदमुपयासि किमत्र चित्रम् ॥ पुण्यं कुरुष्व यदि तेषु तवास्ति वांछा, पुण्यैर्विना नहि भवंति समीहितार्थाः ॥१॥ पारमार्थिकं तु तयोः फलमपुनर्भवपदावाप्तिः यदुक्तं 'जिणधम्मो सुरसुक्खो, सामयसुक्खो जिणेहि पन्नत्तो । नरसुरसुहाइं अणुसंगिआइं इह किसिपलालं व ॥१॥'

अथ च तत्र सरिद्वरातीरे वर्द्धकिरत्नविनिर्मितनृपसैन्योचितावासः क्ष्मावासवः सेनापतिं निष्कुटसाधनाय प्रेषयित्वा सुखेन तस्थौ । अन्यदा च पौरस्त्यालापं कृत्वाष्टमतपा जाह्नवीदेवीं मनसि स्मरणगोचरीचकार वसुंधराधवः । अथ चाष्टमप्रांते कंपितासना सा सुरी सार्वभौमं समागतमवगम्यावधिना तत्र समायाता प्राभृतहस्ता; आगत्य च जयविजयेत्यादिवचनैर्भरतमभिनंद्य देवी दत्तवती रत्नमयं सिंहासनद्वयमष्टोत्तरं च रत्नकुंभसहस्रम् अथवाऽद्भुतभाग्यसौभाग्यसेवधिभूतं श्रीभरतं निरीक्ष्य समुत्पन्नमदना सा कटाक्षविक्षिपान् विक्षिपंती प्रेमप्रसरसमुद्भवद्रोमांचा स्मरपूरप्रकटमयदारमावादिविशरा प्रेमसन्मनवचनैर्भृशमभ्यर्थ्य पृथ्वीरमणं रमणेच्छया रतिभरतमनैषीत् । अथ च सेनापतिः सरिद्वरोत्तरनिष्कुटं साधयित्वा समायातः स्वसैन्ये । अथ च गंगया समं पंचविधवैषयिक-

सुखोपभुक्तिरतः श्रीभरतः शरत्सहस्रमेकवासरमिवातिवाहयामास । वर्षसहस्रातिक्रमे च कथं कथमपि तां प्रतिबोध्यानुज्ञाप्य च चक्र-
वर्ती चचाल चक्ररत्नानुगः समं सैन्येन खंडपाताभिधानगुहाभिमुखम् । तदंतिके च प्राप्तो वर्द्धकिरत्नविहितावासकृतसेनानिवेशः पौषधा-
गारे कृतसपौषधाष्टमतपा नाट्यमालनाकिनं मनसि चिंतयामास अष्टमप्रांते च कंपितासनः स सुधाशनः सार्वभौमं समागतमवधिना
विज्ञाय तत्रायातः श्रीभरतं नमस्कृत्य नानाविधभूषणान्यर्पयामास प्रतिपन्नसेवकभावः । श्रीभरतोऽपि तं सन्मानगोचरीकृत्य विसर्जया-
मास । तदनु पारणकं कृत्वाऽष्टाह्निकामहं कारयामास तं सुरमुद्दिश्य तदनु सेनापतिं प्रति समादिदेश विशांपतिर्यत् त्वं खंडप्रपातगुहा-
द्वारोद्घाटनं विधेहि इति नृपादिष्टः स सेनापतिर्नाट्यमालं सुरं चित्ते कृत्वा पौषधागारे सपौषधमष्टमं व्यधादष्टमांते च स्नातः कृतबलि-
कर्मा निर्मितकौतुकमंगलप्रायश्चित्तः स्वल्पमहामूल्यालंकारालंकृततनुः प्रधाननेपथ्यपरिधानः पाणिपरिगृहीतधूपदहनः खंडप्रपातांतिके
समागमच्चमूपतिः । आलोकमात्रे च नमस्कृतिपूर्वं पूजयामास तत्कपाटे आलिलेख चाष्टमंगलानि । तदनु सप्ताष्टपदान्यपसृत्य दंडरत्नं
कपाटोद्घाटनाय समादाय तेन कपाटद्वैतमाजघान सेनापतिः, आहतं च तदुद्घाटितं नाट्यमालनाकिना । तदनु दक्षिणकुंभे मणिरत्नं
निवेश्य कुंजररत्नाधिरूढः सेनया समं विवेश विशामीशस्तां गुहाम् । तदनु ध्वांतविध्वंसनकृते काकिणीरत्नेन प्रागवन्मंडलान्यालिखँ-
श्चचाल सबलो गुहांतः उन्मग्नानिमग्ने च नद्यौ वर्द्धकिरत्नविहितपद्ये हेलयैव लंघयित्वा गुहायां दक्षिणद्वारे स्वयमुद्घटिते सति निर्जगाम
तस्या नरपतिर्दिनपतिरिवाभ्रसंततेः ।

तदनु जाह्नव्याः पश्चिमे रोधसि स्कंधावारनिवेशं विधाय निधीनुद्दिश्य पौषधावासे सपौषधमष्टमं व्यधान् महीपतिः अष्टमप्रांते
च प्रत्येकं यक्षसहस्राधिष्ठितास्ते नवनिधयः समभ्ययुस्ततस्वरूपं च स्थानांगतद्वृत्त्याद्यनुसारेण लिख्यते । तथाहि 'नेसप्पे १ पंडुअए २,

पिंगलए ३ सव्वरयण ४ महपउमे ५। काले ६ महकाले ७ माणवग ८ महानिहीसंखे ९ ॥१॥ नेसप्पम्मि निवेसा, गामागरनगरपट्टणाण च। दोणमुहमडंबाणं खंधारणं गिहाणं च ॥२॥ इह निधानतन्नायकदेवयोरभेदविवक्षया नैसर्पे देवस्तस्मिन् सति तत इत्यर्थः। निवेशाः स्थानानि अभिनवग्रामादीनामिति; अथवा चक्रवर्तिराज्योपयोगिद्रव्याणि सर्वाण्यपि नवसु निधिष्ववतरंति नवनिधानतया व्यवह्रियंत इत्यर्थः। तत्र ग्रामादीनामभिनवानां पुरातनानां च संति ये निवेशा निवेशनानिष्यते नैसर्पनिधौ वर्त्तंते, नैसर्प्यनिधितया व्यवह्रियंत इति भावः। एवमग्रेऽपि निधानभावना विधेया। तत्र ग्रामो जनपदप्रायलोकाधिष्ठितः, आकारो यत्र सविशे लवणाद्युत्पद्यते, न करो यत्रास्तितन्नगर पत्तनं द्विधा जलपत्तनं स्थलपत्तनं च, द्रोणमुखं जलपथस्थलपथसमन्वितं, मडंबमर्द्धतृतीययोजनांतर्ग्रामरहितं, स्कंधावार· कटकनिवेशो गृहं, भवनं च शब्दादापणानां च निवेशनानि१।

'गणिअस्स य गीयाणं, माणुम्माणस्स जं पमाणं च। धन्नस्स य बीआण, उप्पत्ती पंडुए भणिआ ॥२॥' गणितस्य दीनारादि-पूगफलादिलक्षणस्य चकारस्य व्यवहितसंबंधः स च दर्शयिष्यते, तथा गीतानां स्वरपाटनकरणादीनां प्रबंधानां, मानं सेतिकादि तद्-विषयं यत्तदपि मानमेव धान्यादि मेयमिति भावः, उन्मानं तुलाकर्षादि तद्विषयं यत्तदप्युन्मानं खंडगुडादि धरिममित्यर्थः, तत् पांडुके भणितमिति। तथा धान्यस्य व्रीह्यादेर्बीजानां च तद्विशेषाणामुत्पत्तिश्च या सा पांडुके पांडुकनिधिविषया तद्व्यापारमितिभावो भणितोक्ता जिनादिभिरिति ॥२॥

सव्वा आहारणविही, पुरिसाणं जा य महिलाणं। आसाण हत्थीण, पिंगलगनिहिम्मि सा भणिआ ॥३॥ इयं गाहा सुगमा ३।
. रयणाइं सव्वरयणम्मि, चउदसपवराइं चक्कवट्टीणं। उप्पज्जंति एगिंदिआइं पंचिंदिआइं च ॥४॥ रत्नान्येकेंद्रियाणि चक्रादीनि

सप्त, पंचेंद्रियाणि सेनापत्यादीनि सप्त उत्पद्यंते भवन्ति यानि चक्रवर्तिनस्तानि सर्वाणि सर्वरत्ने सर्वरत्ननामनिधौ द्रष्टव्यानीति भावः ४।

*सेणावइगाहावइपुरोहिओ वड्ढई अ चक्कासिछत्तदंडा, आउहसालाइ हुंति चत्तारि । चम्ममणिकागिणिनिहीसिरिगेहे चक्किणो हुंति ॥५॥ निअनयरे । थीरयणं रायकुले, वेअड्ढतलि अ करितुरया ॥६॥*

*वत्थाणं उप्पत्ती निप्फत्ती चेव सव्वभत्तीणं । रंगाण य धोआण य, (धाउण य इति प्रशास्त्रांतरे) सव्वा एआ महापउमे ॥७॥* वस्त्राणां वाससां योत्पत्तिः सामन्यतो या च विशेपतो निष्पत्तिः सिद्धिः, सर्वभक्तीनां सर्ववस्त्रप्रकाराणां सर्वा वा भक्तयः प्रकारा येषां तानि तथा, तेपां किं भूतानां वस्त्राणामित्याह रंग्याणां रंगवतां रक्तानामित्यर्थः, धाव्यानां सिद्धस्वरूपाणां सर्वेषां महापद्मे महापद्मनिधिविपया ७।

*काले कालन्नाणं, भव्वपुराणं च तिसु वि वासेसु । सिप्पसयं कम्माणि अ, तिन्नि पयाए हिअकराइं ॥८॥* काले कालनाम्नि निधौ कालस्य शुभाशुभरूपस्य ज्ञानं वर्त्तते, ततो जायत इत्यर्थः किं भूतमित्याह भाविवस्तुविपयं भव्यं पुरातनं वस्तुविषयं पुराणं च शब्दाद् वर्त्तमानवस्तुविपयं वर्त्तमानं अनागतं वर्पत्रयविपयमतीतमपि वर्षत्रितयविषयं, तथा शिल्पशतं कालनिधौ वर्त्तते, शिल्पस्य शतभेदता तु घट१लोह२चित्र३वस्त्र४नापितशिल्पानां५ प्रत्येकं विंशतिभेदत्वात् । तथा कर्माणि च कृषिवाणिज्यादीनि कालनिधाविति प्रक्रम एतानि त्रीणि कालज्ञानशिल्पकर्माणि प्रजाया लोकस्य हितकराणि निर्वाहादिहेतुतया ८।

*लोहस्स य उप्पत्ती, होइ महाकालि आयराणं च । रुप्पस्स सुवणस्स य, मणिमुत्तिअसिलप्पवालाणं ॥ ९ ॥* लोहस्य चोत्पत्तिर्महाकाले निधौ वर्त्तते, तथा आकराणां लोहादिसत्कानाम् एवं रूप्यादीनामुत्पत्तिः सूत्रे रूप्यसुवर्णे प्रतीते, मणयस्तु चंद्रकांतादिकाः मुक्ता मौक्तिकानि शिलाः स्फटिकादिकाः प्रवालानि विद्रुमाणि ९ ।

जोहाणं उप्पत्ती, आवरणाणं च पहरणाण च। सव्वा वि जुद्धनीई माणवगे दंडनीई अ ॥१०॥ योधानां शूरपुरुषाणां या समुत्पत्ति-रावरणानां सन्नाहानां प्रहरणानां च कृपाणादीनां सा युद्धनीतिश्च व्यूहरचनादिलक्षणा माणवके निधौ निधिनायके वा भवति ततः प्रवर्त्तत इति भावः। दंडेनोपलक्षिता नीतिर्दंडनीतिश्च सामादि-चतुर्भेदाऽत्र एवोक्तमावश्यके सेसा उ दंडनीई माणवगनिहीओ हुंति भरहस्स १०।

नट्टविहीनाटयविहि, कव्वस्स चउव्विहस्स निप्फत्ती। संखे महानिहिम्मि अ तुडिअंगाणं च सव्वेसिं ॥११॥ नाट्यं नृत्यं तद्-विधिस्तत्करणप्रकारः, नाटकं चरितानुसारि नाटकलक्षणोपेतं तद्विधिश्च, इह पदद्वये द्वंद्वः। तथा काव्यस्य चतुर्विधस्य धर्मार्थकाममोक्ष-लक्षणपुरुषार्थप्रतिबद्धग्रंथस्य अस्य वा संस्कृतप्राकृतापभ्रंशसंकीर्णभाषानिबद्धस्य अथवा समविषमाऽर्द्धसमवद्धवृत्ततया गद्यतया चेति उत्पत्तिः प्रभवः शंखे महानिधौ भवति। तथा तूर्यंगाणां च मृदंगादीनां सर्वेषामिति ११।

चक्कट्ठपइट्ठाणा, अट्ठुस्सेहा य नव य विक्खंभे। बारस दीहा मंजूससंठिआ जण्हवीइ मुहे ॥१२॥ चक्रेष्वष्टसु प्रतिष्ठानं प्रतिष्ठाऽव स्थानं येषां ते तथा, अष्टौ योजनान्युत्सेध उच्छ्रयो येषां ते तथा नव योजनानीति गम्यते विष्कंभे विस्तारे इति शेषः, द्वादशयोजनानि दीर्घाः मंजूषा संस्थानसंस्थिता जाह्नव्या गंगाया मुखे भवंतीति १२।

वेरुलिअमणिकवाडा कणगमया विविहरयणपडिपुन्ना। ससिसूरचक्कलक्खणअणुसमवयणोववत्तीआ ॥१३॥ वैडूर्यमणिमयानि कपाटानि येषु ते तथा, शशिसूर्यचक्राकाराणि लक्षणानि चिह्नानि येषु ते तथा प्राकृतत्वाज्जसलोपः, अनुरूपा समाऽविषमा वदनोपपत्ति-र्द्वारघटना येषां ते तथा १३।

*पलिअ वमठिईआ, निहिसरिसनामा य तत्थ खलु देवा । जेसिं ते आवासा, अक्किज्जाआहिवच्चा य ॥ १४ ॥* आवासा आश्रयाः आधिपत्याद्याऽधिपत्यनिमित्तमक्रेयाः, नाधिपत्यं क्रयेण लभ्यमिति भावः १४ । एवं नवनिधिषु निजायत्ततां यातेषु श्रीभरतो भरतपतिः पारणं विधाय निधीनुद्दिश्याष्टाह्निकामहं कारयामास । अथ च नृपतिप्रदत्तादेशः सेनापतिः सरिद्वराद् दक्षिणनिष्कुटं हेलयैव वशीकृत्य समाययौ श्रीभरतांतिके ।

एवं निजाज्ञावशंवदीकृतपट्खंडः श्रीवसुधाखंडलस्तत्र तस्थौ कियंतमपि समयम् । अथवाऽन्येद्युर्विष्णुपदस्थितं चक्ररत्नमयोध्याभिमुखमचलत्तदा चक्रवर्त्यपि कृतस्नानः कृतबलिकर्मा निर्मितकौतुकमंगलैः प्रायश्चित्तः प्रधाननेपथ्यविराजमानः कुंजररत्नं समारूढो नवनिधिविवृद्धकोशः प्रत्यक्षलक्षैश्चतुर्दशरत्नैः समन्वितः सुरसुन्दरीविभ्रमकारिकिंचिन्न्यूनचतुष्षष्टिसहस्रमितकुरंगनयनानयनकांतस्तद्द्विगुणितवारवधूसंसेव्यमानः किंचिदूनद्वात्रिंशत्सहस्रबद्धमुकुटमेदिनीपतिसमनुगम्यमानश्चतुरशीतिलक्षमितमत्तमत्तंगजतुरगरथपरिवेष्टितः षण्णवतिपदातिकोटिपरिकरितः सैन्यसंचारसमुद्भूतरजोभरैर्भास्वत्तेजोऽपि धूसरतां प्रापयन् वने वने किरातविधीयमानकरिकुंभसमुद्भूतमुक्ताफलादिप्राभृतः पुरे पुरे तत्तत्पुरपतिक्रियमाणमणिमौक्तिकाद्युपायनः सरःकूपवापीप्रभृतीन् शोषं नयन् धनधान्यादिभिः प्रमोदमेदुरान्निजजनपदान् सौम्यदृशा पश्यन् प्रथमप्रयाणदिवसतः समतीतेषु षष्टिवर्षसहस्रेषु विनीतांतिकं समागमत् प्रथमसार्वभौमः । तस्याश्च नातिदूरे नात्यंतिके खंधावारनिवेशं कारयामास महीवासवः । तदनु राजधानीं चित्ते विधाय निरुपसर्गतानिमित्तमष्टमतपश्चकार पौषधागारे । अष्टमांते च पारणं विधायायोध्याराजधानीमविशद् निशांपतिः । तदा च चक्रवर्त्तिप्रवेशमहप्रस्तावे पौरजना स्थाने स्थाने तोरणानि प्रगुणीचक्रुः । तथा कुंकुमांभश्छटासेकं विरचयामासुस्ते प्रत्ययनम् । तथा कनकमयस्तंभेषु मंचरचनां चक्रुस्ते प्रतिमंचं च

विरचयामासुस्ते रत्नभाजनतोरणानि । तथा मौक्तिकरत्नकनकविनिर्मितोल्लोचनिचयं बबंधुस्ते प्रतिमंचं तेषु च मंचेषु नानातोद्यनिनादपुरस्सरं नरा नार्यश्च गायंतिस्म मधुरस्वरं गीतानि । तथा हट्टेषु रत्नादर्शान् मणिमुक्तावचूलान् लंबयामासुस्ते । तथा हट्टोपरितनभूभागबद्धपंचवर्णपट्टदुकूलमयवैजयंतीभिश्चतुष्पथपथं स्थगितातपं चक्रुस्ते । तथा प्रतिसदनं प्रतिहट्टं च यक्षकर्दमपंकोपरिमौक्तिकस्वस्तिकरचनां रचयामासुस्ते । तथा स्थाने स्थाने गुरुक्षोदपरिपूरितधूपघटीभिः कृशानुसंयोगतो दंदह्यमानतत्क्षोदाभिर्मघमघायमानमभूत्तदा समग्रमपि नगरम् । एवं प्रथमसार्वभौमसमृद्धिविलोकनार्थमिव महीतलमवागतस्य स्वर्लोकस्य तुलां प्राप्तायां तस्यां नगर्यां गजरत्नाधिरूढः शीर्षोपरिध्रियमाणश्वेतातपवारणः पार्श्वद्वये च मणिकनकविचित्रदंडचामराभ्यां वीज्यमानस्तेजोभरभासुरदेवदूष्यमानसूक्ष्मतमवसनैः शोभमानः कांचनमणीमयांगुलीयककुंडलकेयूरहारकटिसूत्रादिनानाविधाभरणविभ्राजमानश्चतुरंगचमूपरिवृतो वैतालिकैर्गीयमानजयजयारावश्चारणगणोद्गीयमानगुणग्रामः पणवपांचजन्यभेरीनफेरीस्वरनायिकादिवाद्यमाननानाविधातोद्यध्वनिसमापूर्यमाणभुवनाभ्यंतरः शनैः शनैः कुंजररत्नं प्रेरयन् प्रचचालाचलापतिर्निजनिकेतनाभिमुखं । तदा च चिरादागततत्कालसमृद्धिसमेतश्रीसार्वभौमविलोकनकृते समासन्नग्रामादितोऽपि समायातो जनः प्रभूतः । एवं बहुजनसमवायमिलितेन विस्तीर्णोऽपि तन्नगरीमार्गः समभूदतीवसंकटः । तदा च प्रमोदमेदुराः केचिन्नराश्चक्रिणं निरीक्ष्य वर्णयन्तिस्म सुकृतस्य इव, केचिच्च वीजयन्तिस्म वसनाञ्चलेन, केचिच्च प्रणमंतिस्म, केचिच्च चिरं जय जीव नंदेत्याशिषं ददतिस्म । तदा च प्रतिमंचं देवविमानेष्विव सुरसुरीभिर्नरनारीभिः संगीतरचना विधीयते स्म । मंचाग्रस्थिताश्च कुरंगनेत्रा अक्षतक्षेपं कर्पूरारात्रिकं च कुर्वंतिस्म । काश्चन कुलयोषितो मुक्ताभिः स्थालमापूर्य सार्वभौमं वर्द्धापयंति स्म । एव प्रमोदमेदुरजनेन स्थाने स्थाने विधीयमानवंदनपूजनसन्मानः पार्श्वद्वये बद्धमदमतंगजं सज्जीकृततोरणं क्वचित् मौक्तिकनिर्झरेण क्वचित्

घनसारचूर्णेन क्वचिच्चंद्रकांतमणिभिर्निर्मितस्वस्तिकं बद्धदुकूलादिनानाविधपताकं क्वचित् घनसाररसैः क्वचित् कुसुमरसैः क्वचिच्च मदकल-
मदजलैर्विहितसेवनं सप्तभूमिपरिमंडितं निजावासं समासदत् सार्वभौमः प्रभूतमहेन। तदा च वेत्रिदत्तपाणिः कुंजररत्नादवततार चक्रवर्ती,
अवतीर्य च स्वाधिष्ठायकान् षोडशसहस्रयक्षान् पूजनपूर्वं विसर्जयामास। तथा किंचिदूनद्वात्रिंशन्नृपतिसहस्राणि तथा सेनास्वामिनं
वर्द्धकिरत्नं कौटुंबिकरत्नं च विसर्जयांचकार चक्री। तथाऽष्टादशश्रेणिप्रश्रेणीदुर्गे पालकान् सार्थवाहादींश्च विसर्जयामास।

तदनु सुभद्राप्रभृतिकिंचिदूनद्वात्रिंशत्सहस्रमितनृपतितनयाभिस्तावन्मिताभिश्च जनपदप्रधानकन्याभिर्द्वात्रिंशत्पात्रैर्द्वात्रिंशत्सहस्र-
मितैर्नाटकैश्च परिवृतः कनकमणीभिर्निर्मितान्तर्नेत्रोत्सवं सौधवरं विवेश विशांपतिः। तत्र च प्राचीमुखे सिंहासने निविश्य काश्चन कथाः कृत्वा
चक्री स्नानागारं जगाम। तत्र च स्नानं निर्माय सममात्मीयपरिवारेण सरसाहाराभ्यवहारं चकार। तदनु कियंतमपि समयं संगीतनृत्य-
रसनिमग्नो निर्गमयामास महीवासवो निजावासे वासव इव निजरतिनिकेतने। अन्यदा च नृपमास्थानमासीनं देवनरा विज्ञपयामासुरेवं
य'त्तत्रभवद्भिर्भवद्भिः षट्खंडसाधनं निरमायि तेन भवतां महाराज्याभिषेकमहं वयं कुर्महे' इति तैरुक्तः सार्वभौमस्तान् प्रत्यूचे 'यथारुचि
कुरुध्वम्' इति तेनानुज्ञातास्ते सुरनराः प्रमोदभरनिर्भराः समभूवन्। तदा च चक्रिपर्युपासकास्ते नाकिनो नगर्या बहिः शुद्धभूभागे
सुधर्मासभाविभ्रमविधायिनं नगोत्तुंगं दिव्यं मंडपं विरचयामासुरीशानदिग्भागे। तदनु पद्मनदादिनदेभ्यो गंगासिंधुप्रभृतिशैवलिनी-
नाथतो मागधवरदामादितीर्थेभ्यश्च तोयमृत्तिकादि गृण्हंतिस्म। तथा क्षुल्लहिमवदादिभ्यश्च तुवरौषध्याद्यानयंतिस्म। तैश्च तोयमृत्तिकातुव-
रौषध्यादिभी रत्नकलशान् पूरयामासुः सुराः सार्वभौमसेवकाः।

अथ च चक्रीपौषधसदने सपौषधमष्टमं व्यधाद्; यतः साम्राज्यं तपःसंयमाभ्यामेवाप्तं ताभ्यामेव स्थैर्यं भजेत, यथास्नेहादेव

दीपः प्रजापते तनुप्रक्षेपणेन चिरं तिष्ठति । अष्टमांते च पौषधं पारयित्वा सांतःपुरनाटकादिपरिवारश्चक्रधरस्तं दिव्यमंडपं जगाम निज-स्वामनिर्जितषट्खंडः । तत्र च प्राप्तः स सिंहासनं स्नानपीठं प्रदक्षिणीचकार वसुंधराधिपतिः, प्रदक्षिणीकृत्य च पूर्वसोपानपद्धत्या स्नानपीठमारुरोह मोहमहामहीपतिराजधानीसमानं मानवपतिः सांतःपुरस्तत्र च प्राचीमुखे रत्नसिंहासने निषसाद सप्रसादः सर्वजने मनुजपतिः । किंचिद्न्द्वात्रिंशत्सहस्रमेदिनीपतयोऽप्यारुरुहुस्तस्मिन् सुरविरचिते स्नानपीठे उदीच्यसोपानापनेन । ते च चक्रिणो नातिदूरे नात्यासन्ने भूप्रदेशे ललाटपट्टविरचिताञ्जलिपुटाः पृथक्पृथग्भद्रासनेषु तस्थुः । तथा चमूस्वामी गृहपतिरत्नं पुरोहितरत्नं वर्धकिरत्नं श्रेष्ठिसार्थवाहप्रभृतयोऽपि दाक्षिणसोपानपंक्त्याऽऽरुरुहुः स्नानपीठे । ते च सर्वेऽपि योजितांजलयः स्वस्वोचितेष्वासनेषु तस्थुः । एवं मिलिते सति सकलजनसमुदये ते देवाः स्वामिरिव क्रियैश्च पयःपूरितैः पंकजपिधानैः रत्नकलशैश्चक्रिणः षट्खंडसाम्राज्याभिषेकं चक्रुः । तदनु स्वाभाविकगंधोदकपुष्पोदकसमुद्रवपरिपूरितैः स्वकांचनमणीमयादिभिः कुंभसहस्रैः किंचिदूनद्वात्रिंशन्नृपतिसहस्राणि चक्रुश्चक्रिणः साम्राज्याभिषेकं अभिषेकं च कृत्वा योजितांजलयो जयविजयस्वेत्यादिवचोभिर्वर्द्धापयामासुः सार्वभौमं । तदनु सेनापतिश्रेष्ठिसार्थपति-प्रभृतयोऽपि चक्रुरभिषेकम् । तदनु नवनीतार्कतूलतुल्यस्पर्शया गंधकाषाय्या गात्राणि मार्जयामासुस्सार्वभौमस्य । तदनंतरं सरसगोशीर्ष-चंदनद्रवैर्व्यलिंपयामासुश्चक्रिणः । तदनु दिवस्पतिवितीर्णश्रीयुगादिदेवाधिदेवसत्कं मुकुटं स्थापयामासुः सुपर्वाणः श्रीभरतभूपतिशीर्षे । तदनु महीपतेः पर्वकांतघटिते इव विशदे देवदूष्यवाससी परिधापयामासुस्ते चक्रिणः । तथा ते सार्वभौमस्य श्रवणयोः कनकमणीमये कुंडले रत्नकंदले च हारार्द्धहारादीन् भ्रमरदामोदरपूरितदिगंतरदामनिकरं च ।

एवं कल्पवृक्ष इव विभ्राजमानः समहीनेता सौत्रादेशनर्शबदनरान् प्रत्येवमादिदेश यद् गूर्ये कुंजरवरं समारुह्य सधाम्रा-

वैषयिकसुखोपभुक्तिपरः सुखमयं समयं निर्गमयामास । तस्य च श्रीभरतभूपतेः शस्त्रागारे चक्ररत्नछत्रासिदंडरत्नान्येकेंद्रियाणि सम-
भ्यंतरां विनीतां नगरीमकरामदंडकुदंडामभटप्रवेशामशुल्कां स्थाने स्थाने प्रारब्धसंगीतनृत्यां द्वादशसंवत्सरान् यावत् कुरुत । तैश्च
तथा कृते नृपतिः सिंहासनादुत्थाय तेनैव पथोत्ततार स्नानपीठात् समं परिकरेण उत्तीर्य च ययौ निजावासं महद्धर्या । तत्र च गत्वा
स्नानं निर्माया‌ष्टमभक्तांतपारणं चकार नराधिपः पीयूषप्रतिमाहारैः । अथ च द्वादशवार्षिकेऽभिषेकमहामहे संजाते सति स्नातः कृत-
बलिकर्मा कृतकौतुकमंगलप्रायश्चित्त आस्थानसभामागत्य षोडशसहस्रसंख्यान् यक्षान् स विसर्जयामास । ततश्च प्रासादवरमारूढः पंचप्रकार-
जायंत, काकीणीचर्म्ममणिरत्नानि तु श्रीगृहे, सेनापतिगृहपतिपुरोहितवर्द्धकिरत्नानि तु निजनगर्यां, गजतुरगरत्ने तु वैताढ्यशैलमूले,
वनितारत्नं तूदग्विद्याधरश्रेण्याम् । एवं तस्य चतुर्दशरत्नानि समभूवन्नवनिधयश्च श्रीगृहे एतानि च प्रत्येकं यक्षसहस्राधिष्ठितानीति
त्रयोविंशतियक्षसहस्राणि द्वे चक्रिकायाधिष्ठायके यक्षसहस्रे एवं पंचविंशतियक्षसहस्राणि तस्य सर्वदासन्निधानवर्तीनि समभूवन् ।
सुरसुंदर्य इव प्रत्यक्षतया मर्त्यलोकमवतीर्णाः कुरंगनयनाः किंचिन्यूनचतुष्षष्टिसहस्रसंख्याः शुद्धांतमभूत्तस्य किंचिदूनद्वात्रिंशत्सहस्राणि
च नाटकानि तस्य समभूवन् । एवं तेन शुद्धांतेन तैर्नाटकैश्च स्वर्लोकानुकारि पंचप्रकारं वैषयिकसुखमुपभुंजानोऽभिषेकोत्सवपरि-
समाप्तौ चिरसमयविप्रलंभप्रपीडितानात्मीयानात्मीयान् सस्मार नराधिपो नामग्राहम् ।

तदा च संयतीमिव कृशतरीकृतशरीरां परित्यक्तस्नानमंडनादितनुविभूषां तुच्छतरीभूतरूपलावण्यां सेवकनरैर्दर्शितां ददर्श
विशांपतिः सुन्दरीं सर्वगुणसुन्दरीम् । तां च तथाविधां वीक्ष्य संजातकोपातिशयश्चक्रवर्ती प्रायुक्तान् प्रत्येवमवोचत् 'हं भोः ! किम-
स्मत्सदने धान्यहविःखंडखाद्यादीनि दुरापाणि समभूवन्, यदियमीदृग्विधामवस्थामगम'त्तदा च ते प्रोचुः 'स्वामिन् ! शक्रसदनम् इव

तत्रावासे न कस्यापि वस्तुनो न्यूनता वर्त्तते, परं यदा देवेन दिग्विजययात्रोद्यतेनैषा निषिद्धा श्रामण्यमादातुमनाः प्रभृतिरिपरिप-भीता केवलं प्राणत्राणकृते दधत्तेस्म यात्रामात्रमाचाम्लानि नित्यमलं साध्वी च वैराग्यरंगपूरिताङ्गा' इति तैरुक्ते भरतः सुन्दरीं प्रश्नयामास 'भद्रे ! त्वमिच्छसि श्रामण्यमादातु'मिति पर्यनुक्ता साऽवोचत् 'स्वामिन् ! क्षुधाक्षामकुक्षेर्भोजननिमंत्रणप्रायमिदं देवपादानां वचः, तन्मे चिरकालीनः प्रव्रज्यामनोरथद्रुमः फलैर्ग्रहिः क्रियतां निर्विलंबम्' इति तयोक्ते भरतः प्रोवाच 'इयंतं समयं मया मुधैवा-स्याश्चरित्रविलंबः कृतः प्रमादादज्ञानाच्च परमियमनुरूपमेव धत्तेस्म प्रव्रज्यामनोरथं पवस्तातपादापत्यानां युक्त एवायं मनोरथः। वयं तु श्रीऋषभदेवस्याप्यपत्यीभूय निरयगतिनिदानभूतराज्यार्जनेऽप्यथाप्यनिवृत्तमनोवृत्तयः। ये तु विद्युत्प्रकाशप्रतिरूपं रूपसौंदर्यमव-गत्य पुरंदरचापप्रतिमतां च निश्चित्य सर्वविभवसंपदां कुशाग्रस्थितजललवचटुलतामवधार्य नरायुश्च परित्यक्तस्वजनपरिजनतनु-विषयममीकारा श्रामण्यमादाय साधयंत्यपुनर्भवपुरायनं त एव धन्यतमास्तद् विज्ञातसम्यग्भवनाटकस्वरूपा नश्वरेणानेन नरशरीरेण चेत्साधयसे सिद्धिं तत्र न कुर्मो वयमंतरायम्।' इति श्रीभरतेन वीर्णश्रामण्यग्रहणानुज्ञा सा सुन्दरी जनशिरःशेखरभूता मयूरीव जलदनिनदरवेण तेन भरतवचसा प्रमोदपुलकपुलकितांगी समभूत्।

अत्रांतरे च श्रीमान् युगादिदेवाधिदेवः समवासार्षीदष्टापदगिरौ विहरमानः। तदा च देवैश्चक्रे समवसरणं तत्र गिरौ। एतत् सर्वं पर्वतपालकैर्निवेदितं श्रीभरतभूभर्त्तुः पुरतः। एतन्निशम्य प्रमोदप्रसरप्रसर्पद्रोमांचकंचुकः श्रीभरतस्तेभ्यः सार्द्धाः सुवर्णकोटी-र्द्वादशदत्तवान् दानं परितोषतः। तदनु सुन्दरीं प्रति प्रोचिवान् 'भवत्याः पुण्यैराकर्षित इव भगवानत्राजगाम, तद् भवन्मनोरथः सफली-क्रियतां'मित्युदीर्य निजान्तःपुरीजनेन तस्याः प्रव्रज्यामहाभिषेकं कारयामास महीवासवः। तदनु कृतस्नाना कृतगोशीर्षचन्दनादिविलेपना

सदशवसने पर्यधात्सुन्दरी। तथा सर्वालंकारालंकृतिभूतशीलगुणालंकृताऽपि केवलं लोकस्थितिसत्यापनकृते तिलकचतुर्दशमलंकारनिकर-
मुररीचकार निर्विकारमानसा। एवं देवदूष्यानुकारिदूष्ययुगलनिवसना सकलालंकारालंकृता कादंबिनीव याचकजनक्षेत्रनिकरे कनक-
धाराऽभिवर्षणपरायणा नानाविधेषु वाद्येषु वाद्यमानेषु, वैतालिकेषु जयजयारवं कुर्वत्सु, भ्रातृजायासु मंगलगीततानपरासु, वारवधूषु
लवणोत्तारणपरायणासु, सधवविनितोत्तमांगस्थितेषु पूर्णकलशेषु पुरश्चरेषु प्रापदष्टापदं नगवरं सुन्दरी समं भरतेन। तत्र च श्रीऋषभ-
जिनर्षभं निरीक्ष्य मुदितचित्ते ते भरतसुन्दर्यौ तं पर्वतवरमारुरुहतुस्तत्र च चतुर्द्वारे समवसरणे उदीचीनद्वारेण तौ विशतः स्म विधिपूर्वं तत्र
च त्रिःप्रदक्षिणीकृत्य भगवंतं तौ नेमतुर्विनयपूर्वम्। तदनु भगवंतं नानाविधस्तवनैः स्तुत्वा विज्ञपयामासेति सुन्दरी विश्वसुन्दरीशिरः-
शेखरभूता 'भगवन्! यैर्भातृव्यजैस्तातपादानां भवतामन्तिके श्रामण्यमंगीकृतं त एव धन्यतमाः, अहं तु वयसा वृद्धाऽपि भरतोपरो-
धेनापुनर्भवसुखनिदानश्रामण्यादानतो वंचितास्मीयत्कालं तदद्यापि प्रसादमाधाय भवार्णवोत्तारणतरंडप्रतिरूपं वितर मे चरित्रम्', इति तया
विज्ञप्ते साधु साध्वितिवदन् भगवान् विश्रामणयामास श्रामण्यं सुन्दर्याः। भगवता विहिता सुकृतदेशना सकलभव्यजनानंददायिनी, तां च
निशम्यानंदितमनाः श्रीभरतः सपरिकरो ययौ यथागतमयोध्यायाम्। तत्र च गत्वा पुनरागताननागतांश्च निजाधिकारिकथितान् विज्ञातवां-
श्चक्री। तेषु निजाभिषेकोत्सवेऽपि सोदराननागतानवगत्य तान् प्रति प्रत्येकमेकैकं दूतं प्रेषयामास भूवासवः स्वांगीकारकृते, ते च दूतास्तत्र
गतांस्तान् प्रत्येवमूचुः 'चेद् भवतां साम्राज्येन प्रयोजनं तत् सेवध्वं भरतं भरतभूपतिम्' इतिदूतैरुक्तास्ते सर्वेऽपि हृदि किञ्चिद् विमृश्य तान्
प्रत्येवमूचुः 'भो! अस्मान् भरतं च प्रति जनकेन श्रीयुगादिदेवेन विभज्य राज्यं वितीर्णं, तत् किमस्माभिर्भरतः सेव्यते। यतः स सेव्य-
मानः किं नोऽधिकं करिष्यति, किं जराराक्षसीं निवारयिष्यति, उत रोगान्निराकरिष्यति समुत्पद्यमानान्, उत यथोत्तरं प्रवर्द्धमानां भवतृष्णां

निषेधयिष्यति यदस्माभिर्भरतः संसेव्यते। अथवा सामान्ये मनुजत्वे कः केन संसेव्यतेऽभिमानशालिना। अन्यच्च समुपार्जिते बहुजनपदसा-म्राज्येऽपि चेद् भरतस्तृष्णातिरेकादस्मद्राज्यमादातुमिच्छति बलाधिकतया तदा वयमपि तस्यैव ऋषभदेवस्य सुताः, किंतु तातपादमनिवेदयित्वा ज्येष्ठबंधुना समं न वयं युद्धं कुर्म' इत्युदित्वा दूतान् विसर्जयित्वाऽष्टापदनगममवसृत्य श्रीयुगादिदेवसमीपे जग्मुस्तेऽष्टानवतिवसुंधराधराः। तत्र च गत्वा श्रीयुगादिदेवं प्रणम्य स्तुत्वा च विज्ञपयामासुः 'स्वामिन्नस्माकं भरतस्य यथायुक्ति विभज्य राज्यं भवद्भिरेव दत्तं तेनैव राज्येन संतुष्टास्तिष्ठामो वयमद्य यावत्। भरतस्तु स्वराज्येनान्यराज्यैश्च बहुभिरपि समुपार्जितैर्न संतुष्यति वह्निरिवेंधननिवहैः। तद् यथान्येषां राज्यानि गृहीतानि तथास्माकमपि राज्यान्यादातुमिच्छुरादिशत्यस्मान् यत् ममोपास्ति कुरुध्वं द्रुतं राज्यत्यागं वा। एवं तेन वाङ्मात्रेणोक्ता न मुंचामो वयं राज्यान्यभिमानधनास्तातपादप्रदत्तानि वरिवस्यामपि वयं कुर्मो मानम्लानिविधायिनीं राज्यापरित्यागे सेवा-याश्चाविधाने समरकरणमुपस्थितम् एवं सति वयं किं कुर्मः' इति तैः पृष्टो भगवानाचख्यौ 'वत्सा! वीरपुरुषैः स्ववैरिणः पराजेयास्ते तु रागद्वेषकषायप्रभृतयस्तेषु रागद्वेषौ समताऽसिधन्वा निराकरणीयौ। क्रोधमानमायालोभास्तूपशममार्दवार्जवसंतोषरूपाणैः प्रहरणीयाः। पर्युपास्तिरपि विधेया धर्ममहानरेंद्रस्य, यः संतुष्टः प्रदत्तेऽनंतशर्मपदं परमपदम्। या च राज्यरमाऽभिमानफला निरयगतिनिमित्तं तस्याः कृते कः कृती हारयत्यनंतसुखनिदानं धर्मनिधानम्। किं च या विषयतृष्णाऽनंतशोऽपि प्राग्भवभुक्तैर्देवसुरनैर्नागमदुपशांतिं सा कथं मनुष्यसुखैर्भुक्तैः शांतिं गमिष्यति। अत्रार्थे शृणुतांगारकारकोदाहरणम्। यथा कश्चिदंगारको नीरपरिपूरितदृतिमादाय यया-वंगारपातकृते कांतारे। तत्र चांगारपातनं कुर्वंस्तपनकृशानुतापाभ्यामतीव तृषस्तृषार्तः स सर्वमपि दृतिपानीयं पपौ। अथ चांऽगारान् पातयित्वा निवृत्तस्तपनेऽस्तंगते क्वापि सुप्तोऽस्तोकतृषार्दितो वापीकूपतटाकसरित्पारावारादिनीरैः स्वप्नमध्ये पीतैरप्यशांततृषो मरुदेशे

व्रजन् कूपांतः कुशपूलं रज्जुबद्धं क्षिप्त्वा तं च कर्षयित्वा जलार्द्रं निश्चोत्य च तदंभःकणान् स पपौ स्वप्ने। तथापि तस्य तृड् न शांता। यथा तस्य वार्द्धिजलैरशांता तृट्पूलकांबुकणैः कथमुपशांतिमेति। एवं सुरसुखैर्भुक्तैर्या विषयतृष्णा न शांता सा कथं नृसुखैः शमिष्यति। तस्मात्तां विहाय शमसाम्राज्यमंगीकुरुध्वम्' इति भगवतोक्ताः। सममेव समुत्पन्नसंवेगाः श्रामण्यमंगीचक्रुस्ते। एतत् सर्वं विस्मितचित्तैर्दूतैर्भरतस्य निवेदितम्। भरतोऽपि सविस्मयानंदस्तद्राज्यान्यात्मसाचकार।

इति श्रीमत्तपागच्छालंकारहारभट्टारकघटाकोटीरहीरश्रीसोमजयसूरिशिष्यशिरोमणिश्रीइंद्रनंदिसूरिराज-विनेयाणुसिद्धान्तसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रंथे श्रीमदऽनुगमापरपर्याये श्रीभरतचरितश्रीऋषभदेवनिर्वाणवर्णन-नामिकायां तुर्यलहर्यां भरतदिग्विजयवर्णननामा प्रथमस्तरंगसंपूर्णः।

## तुरीयलहर्यां द्वितीयस्तरङ्गः ।

अथैतस्यामेव तुर्यलहर्यां द्वितीयस्तरंगः प्रारभ्यते । तत्र प्रथमतरंगे भरतस्य दिग्विजयस्वरूपं निगदितम् । द्वितीयतरंगे तु बाहुबलिसंग्रामथामण्यरेरलमनिदनाताक्षिस्वरूपं निगद्यते । तथाहि—

अन्यदा साधितषट्खंडः समाप्ताऽस्तनतिस्वननिष्ठसोदरसाम्राज्यः श्रीभरतसार्वभौम आस्थानसभामासदत् । तदा च तामासीने श्रीभरतपति भरतं सुषेणनामा सेनास्वामी प्रतिपूर्वमेवमबोचत् 'स्वामिन् ! दिग्विजयं विधायापि चक्ररत्नं न विधत्ते नगरान्तरायुधशालायां प्रवेशम् ।' एवं सेनास्वामिना विज्ञप्ते सति श्रीभरतः प्रोचिवान् । 'अद्यापि भरतांतः कोऽपि वर्त्तते वीरमानीयों मदीयाज्ञां न मन्यते ?' इति भरतेनोक्ते महामात्यः कथयामास 'स्वामिन् ! हिमवद्गगावधि स को नाम वर्त्तते देवो मानवो वा यः स्वामिपादानामाज्ञां महातीर्थशेषामिव शिरसि न कुरुते । अथवा स्मृतमेकोऽस्ति जेतव्यो विश्वविश्वजनाऽजेयो देवपादानामनुजन्मा बाहुबलिर्बलिनामपि तस्मिन्नजिते षट्खंडसाधनं कृतमप्यकृतं, यत एवं एकोनानि द्वात्रिंशन्नृपतिसहस्राणिससैन्यानि एतस्तस्यैकोऽपि बाहुबलिस्तदापि केसरीव करिनिकरैर्देवपादानां सैन्यैः सोऽनभिभवनीयः । स च बलगर्वितो नरदेवाराध्यां श्रीनरदेवपादानां भरताज्ञां न मन्यतेऽतस्तज्जयमविधाय यथं चक्रममंतर्नगरमायुधशालायां प्रवेशं विधत्ते । तस्माद् येन केनाप्युपायेन नोपेक्षणीय एवावरजोऽपि सः । तस्मात्तद्विजये यतध्वम् ।' एवमुक्ते सति सममेव प्रमोदविषादाभ्यामनुविद्धश्चक्री चिंतयामास यदवरजोऽप्याज्ञां न मन्यते

समरकरणमेतदप्यपत्रपानिबंधनम्। अपरं च स्वसदनेऽपि न यस्याज्ञा
इत्येकतो मे त्रपा, एकतस्तु लघुबांधवेन स्वापत्यसमेन समं समरकरणमेतदप्यपत्रपानिबंधनम्, अन्यच्चैषा राजनीतिर्यद्दर्पवतां दर्पसर्पप्रसर्पो नियंत्रणीयो
तस्याज्ञा बहिः कीदृशी? यच्च कनीयसोऽविनयाऽसहनं तदपि जनेऽपवादनिमित्तम्, अन्यच्चैषा राजनीतिर्यद्दर्पवतां, किं करोमीति किं कर्त्तव्यतामूढे निज-
विचारणीयं वैतद् यदनुजेन समं संग्रामनिर्माणमेवमितो व्याघ्र इतस्तटीतिन्यायात् संकटे पतितः, किं करोमीति यः कोऽप्याज्ञां न मन्यते स शिक्षणीय
परिवृढे महामंत्री प्राह 'स्वामिन्! किमेतद् विचारणीयं यतो राजधर्म्म एवायं यन्निजराज्ये भवितव्यम्। एवं सति चेत् स
एव येन केनाप्युपायेन। अन्यच्च लोकप्रतीत एवायं व्यवहारो यद् 'वरजेन ज्येष्ठसोदराज्ञावशंवदेन कृशानुरिव हविःसिक्तः स
स्वयमेव देवाज्ञां न मन्यते तदा लोकप्रसिद्धेन मार्गेण दूतप्रेषणेनाज्ञापनीयः स सोदरोऽपि, दूते च प्रेषिते जनापवादोऽपि न भविता भवताम्',
प्रज्वलन् कोपेन तमपमानमिष्यति, तदा च देवपादैः ससैन्यैस्तत्र गत्वा स शासनीयः। एवं च कृते आमंत्रयित्वा च कथयामास।
इदं च महामात्योक्तं वचनं युक्तं हृदि विचार्य सुवेगनामानं दूतं दूतगुणगरिष्ठमामंत्रयामास महीवासवः। यद्भरतवर्षे स कोऽपि नास्ति यो
'यत् त्वं गच्छ तक्षशिलायां, तत्र च गत्वा ममानुजं प्रति कथय यज्ज्येष्ठभ्राताऽऽज्ञापयतीत्थं तस्माद् भवता मदाज्ञावशवर्तिना स्थेय-'
मदीयाज्ञां न मन्यते। भवानवरजोऽपि सन् यन्मदीयाज्ञां न मन्यते, एतज्जनापवादनिदानम्, प्रतस्थे तक्षशिलां प्रति। स च मार्गं प्रति प्रवृत्तो
मित्यादिदत्तशिक्षः सुवेगनामा दूतो दूत ग्रामग्रामणी रथवरमारुह्य सारसेनापरिवारपरिवृतः करटकटुकस्वररसनचंचूघर्षणकृष्णसर्पसमुत्तर-
वामाक्षिविस्फुरणदक्षिणनाडीदहनमंडलपवनवहनसमपथरथस्खलनशुष्ककर्कटविटपिसमुपविष्टकरटकटुकस्वररसनचंचूघर्षणकृष्णसर्पसमुत्तर-
णसन्मुखपवननयनरजःक्षेपणप्रभृतिप्रतिकूलशकुनभवनेऽपि सद्भृत्यैः स्वामिकार्यमवश्यमेव कार्यमितिनीतिमार्गमनुल्लंघयन्नविश्रामं क्वापि।
एवं मार्गे बहून् ग्रामाकरनगरकर्बटादीनुल्लंघ्य, शरभशार्दूलचित्रकायादिश्वापदशतसहस्रसमाकुलां नानाविधोच्चैस्तरतरुनिकरनिवारित-

दिनकररश्मिप्रवेशां विवेश सुवेगो महाटवीम् । तां च वेगवद्रथेन लीलयैव समुल्लङ्घ्य गोकुले गोकुले तलतलसमुपविष्टगोपदारकगीय मानश्रीयुगादिदेवगुणग्राम फलभारावनम्रनानाविधतरुनिकरोपशोभितसकलग्रामं प्रत्यक्षकल्पवृक्षौपम्यधारिव्यवहारिनिकरसमाकीर्णसकल सन्निवेश, नगरे नगरे स्थाने स्थाने दानशौण्डनरप्रारब्धदानशालासतोष्यमानवनीपकनिकरम् उदग्भरतार्द्धसमागतबहुधनसमृद्धम्लेच्छ निवहसमाकुलबहुलग्रामखडातरमिव व्यवस्थित भरताज्ञाऽविज्ञायि जनसमुदयं बहलीदेश समागात् सुवेगो वेगवत् प्रयाणै॰ ।

तत्र च बहली देशे व्रजन् श्रीबाहुबलिनृप विमुच्यान्यनृपातरमसविदानान् स्थाने स्थाने गीयमानबाहुबलिगुणग्रामान् ऋद्धिसमृ द्धान् जनानवलोकयंस्तक्षशिलापुरीपरिसरं प्राप । तत्र च ललनोद्यानेषु स्फुरलीपरायणसुभटभुजास्फोटैस्त्रिास्यमानरथ्याश्च इतस्ततः पौर- जनसमृद्धिप्रेक्षणव्यग्रस्तानिषिद्धयमानोत्पथगामितुरगकृतरथसबल ऐरावणानुकारिकरिनिकरान् बहिस्थानननगेषु बद्धानवलोकयन् वाजि- शालासु पवनवेगजयिनो वाजिनिवहान् पश्यन् विस्मयं स्मेरमानस, सुवेगः प्राविशत्तक्षशिला पुरीं प्रत्यक्षस्व धुरीभूताम् । तत्र च चतु- ष्पथे नानावस्तुक्रयविक्रयपरायणान् समृद्धया प्रत्यक्षीभूतविश्रमणान् व्यवहारिगणानवलोकयन् नृपद्वारांतिक जगाम दूतग्रामणीः । तत्र च कुत्रचिन्निशितमकुतग्राहा, कुत्रचित् शतघ्नीव्यग्रहस्ता, कुत्रचिल्लोहमुद्गरपाणय॰, कुत्रचित् कृतावरमनानुकारिविकाशकृपाणव्यग्रपा णय, कुत्रचिच्छब्दवेधिनो बद्धतूणीरा वीरवरा॰ । एव सन्नद्धबद्धपरिकरवीरवरविभीषण पार्श्वोभयोल्लालितकरकरियुगलशालमान नृसिंह- सिंहद्वार गत स दूतः प्रतीहारेण निषिद्ध॰ क्षण तत्र तस्थौ । तदनु द्वारपालकेन नृपादेशमानीय स मध्ये मुक्तो गतो नृपास्थानसदसि ।

तत्र च मस्तकन्यस्तमणिकाञ्चनमयशेखरैर्नरैर्नरवरैर्वीराधिवीरै पर्युपास्यमानं सर्वत्र प्रतीतसारैः कुमारैः परिवेष्टित योजित करैर्मन्त्रिमहामन्त्रिभि॰ क्रियमाणपर्युपास्ति सहस्रशोविकोशीकृतशस्त्रस्मयकारागरक्षकनिकरनिरतरसमेव्यमान वारवनितावीज्यमानामलचा

मरयुगलं शिरसि ध्रियमाणेंदुमंडलसुंदरातपवारणं कनकदंडधरोज्वलनेपथ्यवेत्रिविधीयमानसमयोचितसमस्तकृत्यं रत्नसिंहासनोपविष्टं
विशिष्टालंकारसमलंकृतमाबद्धवीरवलयं विहितसर्ववैरिप्रलयं बहलीजनपदस्वामिनं श्रीबाहुबलिनं वीक्षांचक्रे विस्मितमानसः स दूतवरः।
दृष्ट्वा च क्षितिनिहितमस्तकः प्रणनाम बहलीस्वामिनं स दूतवरः। नत्वा च वेत्रिप्रदर्शितासने स समासीनः तदा। तदा च श्रीबाहु-
बलिना प्रसन्ननयनेन संभाषितः सः 'भोः सुवेग! कुशलं मम ज्येष्ठबंधोः श्रीभरतस्य किंचिन्न्यूनभरतपतेः, श्रीऋषभस्वामिपालितायामयो-
ध्यायां प्रवर्त्तते कुशलं प्रजायाः? षष्टिसंवत्सहस्राणि दिग्विजयं विधाय समायातः ससेनान्यादिपरिकरः कुशलेन मम ज्यायान् सोदरः?
आहिमवत्पर्वतं क्षमां समाक्रम्य समेयुषः करितुरगप्रभृतिचतुरंगसैन्यस्य प्रवर्त्तते कुशलम्, एवं नरवरसहस्रैः सेव्यमानस्याऽखंडलस्ये-
वाऽखंडिताज्ञस्य मम ज्येष्ठबंधोः सुखेन यांतिस्म दिनानि।' एवमापृच्छ्य तूर्णीं स्थिते श्रीबहलीदेशस्वामिनि सुवेगनामा दूतग्रामणीरि-
त्यब्रवीत्। 'यः समग्रमेदिन्या निर्माति क्षेमं तस्य भरतपतेश्श्रीभरतस्य स्वयं सिद्धं सर्वदैव वर्त्तते कुशलम्, अयोध्यायाश्चातुरंगस्य च
सैन्यस्य कः कर्त्तुमलमकुशलं यत्स्वामी भवतो ज्यायान् बांधवः। किं च भरतनेतुश्श्रीभरतस्य बलेन समानोऽधिको वा किं कोऽपि प्रवर्त्तते
यः षट्खंडविजये करोत्यंतरायम् अखंडिताज्ञः संसेव्यते च श्रीभरतो नृपतिसहस्रैस्तथापि न हृष्यति श्रीभरतो यतो दुःस्थोऽपि सौवकुटुंबेन
यः सेव्यते स समृद्धिमान् सुखी च भवेत्, यस्तु स्वीयकुटुंबेन नासेव्यते तस्यैश्वर्येऽपि किं सुखम्। भवतां तु ज्येष्ठबंधुना श्रीभरतेन
षष्टिसंवत्सहस्रसमतिक्रमसमेतेन बंधुना नागमनमार्गो विलोकितस्तदा च साम्राज्याभिषेकसमये सर्वेऽपि समायाताः संबंधिसुहृदादय-
स्त्रिदशा अपि सदिवस्पतयः परं तैः समेतैरपि न तुष्यति श्रीभरतो निजावरजानपश्यन्निजांतिकमागतान्, तेन निजानुजानामष्टनवतिमि-
तानामकारणाय पृथक् पृथग् दूताः प्रेषितास्तान् वीक्ष्य ते च किंचिद् हृदि विचार्य श्रीऋषभस्वामिपादमूले गतास्तत्र च तद्देशनां निशम्य

तैः श्रामण्यमंगीकृतम्। तेषां च समं मिश्राऽमिश्राणां न कश्चिदात्मीयः परो वा वेविद्यते। तस्मादागच्छ तत्र त्वमागत्य च तवाग्रजन्मनो मनोनयनानंदं विधेहि यदि हृदि तव वर्तते योऽग्रजोपरि सम्यक्स्नेहः, अपरं च भवच्चेतसः शतकोटेरपि कठोरतां मन्ये यच्चिरकालादप्यागतमग्रजमीक्षितुं तन्नोत्सहते। किं च ज्येष्ठबंधुस्तातवदाराध्योऽतोऽपि हेतोस्तदाज्ञावशंवदता तव विलोक्यते। किं च शूरैरपि गुरुजने समर्पैरेव स्थेयम्। एतत्तश्च षट्खंडविजयी श्रीभरत एकतश्चाग्रजन्मा एवं च सुवर्णे सौरभ्यगुणः। एवमपि सेवनीय एव श्रीभरतः। सर्वंसहतया च स तवाविनयमपि क्षमिष्यति। भवद्भक्तिव्यंजिकाश्च पिशुनानां वाचस्त्वदनागतं मेने तन्मनः कलुषयति स्वच्छमपि जलमिव मलयोगः। अहमेतावत्समयं नायातः कथमयापामोति मा कृथाः शंका यतः सुस्वामिनः सकृत् सेवकापराधं क्षमंते। भवति च तत्र समागतवति पिशुनानां मनोरथा विलयमुपयास्यंत्यकृतसुकृतानामिव चेतश्चिंतितार्थाः। चक्रिणं च स्वामीयंतः सहस्रशोऽपि महाबला महीपालाः सेवंते तदाज्ञावशंवदाः। अवश्यं च सर्वैरपि भरतांतर्वर्तिभिर्नरपतिभिः सार्वभौमः सेवनीय एव देवपतिरिव सर्वदेवैर्निग्रहालंकर्मीणः। किं च चक्रवर्तित्वपक्षेऽपि तदुपास्तिः कृता भ्रातृपक्षसेवां विशेषयिष्यति। अपरं च बंधुरयमित्याशयेन यदि निर्भयतया स्थास्यति भवांस्तदप्ययुक्तं यतः आज्ञासारा नरेश्वरा न गणयंत्येव बंधुसंबंधं महामंत्रेणेव यत्पुण्येन समाकृष्टा दिविजदनुजमनुजा यं प्रतिसेवते यं चाऽर्धासनदानेन दिवस्पतिरपि बहुमानयति, तमपि श्रीभरतमागमनमात्रेण किं न प्रसभीकुरुषे। अथ चेन्निजदोर्दंडप्रचंडबलगर्वगर्वितस्तं न मन्यसे स्वामितया तदा भवान् ससेनोऽपि श्रीभरतसैन्ये समुद्रे सक्तुमुष्टिसम एव विक्षेपः। यतः श्रीसार्वभौमसेनायामैरावतहस्तितुल्याश्चतुरशीतिलक्षाणि मत्तमतंगजास्तावंतश्च पवनवेगिनो वाजिनः संग्रामिका रथा अपि तावंत एव षण्णवतिकोटयश्च पदातीनां पराक्रमसाराणाम्, एकोऽपि दंडपाणिः सुषेणः सेनापतिः कल्पांतकालक्षुभितांभोधिवत् केन निरोद्धुं शक्यते, अमोघं च सुर-

सहस्राधिष्ठितं चक्ररत्नं वज्रिणो वज्रमिव वैरिशिरसि निपतत् केन निवारयितुं शक्यते दोष्मताऽपि । एवं श्रीभरतस्तेजोभिर्वयसा च वृद्धः सर्वथा साम्राज्यजीवितेच्छुना भवता सेवनीय एवं दोष्मताऽपि' इत्युक्त्वा विरते तस्मिन् दूते महाबाहुः श्रीबाहुबलिनृपः शारदनीरद-स्तनितानुकारिरवेण तं प्रत्यवोचत्प्रतिवचनं 'भोस्त्वं वक्ता वर्त्तसे यत् ममापि पुरत एवं वदसि, एवं शृणु यं प्रति ऋद्धिसमृद्धाः सुरासुरा अपि सेवंते सोऽस्माभिः स्तोकसमृद्धिभिः समागतैस्त्रपास्पदं भविष्यतीति वयं नागमिष्यामः.। अपरं च षष्टिवर्षसहस्राणि यत् कनिष्ठ-बंधूनां साम्राज्यानि नात्मसात्कृतानि तत्रान्यान्यनृपसाम्राज्यग्रहणव्यग्रतैव निदानभूता; यादृग्विधश्च बंधूनां स्नेहोऽस्मासु समभूत् स तादृग्वचनप्रपंचविचक्षणभवत्प्रेषणेन ज्ञापितो भरतेन । यस्तैर्ममानुजैरष्टनवतिमितैः प्रव्रज्यामादाय प्रमोदो व्यधायि भवत्स्वामिनः स मयि समराजिरं समागते सर्वोऽप्यपयास्यत्यवश्याय इव नभोगणमाक्रामति प्रचंडमार्तंडे । स्वल्पसमृद्धावपि दंभोलिवद्दारुणतरोऽहं भवन्नेता तु कुसुमवत् मृदुः, स च जनापवादकांदिशीकानां मदनुजन्मनां यदपजहार राज्यानि तद् वैरनिपातनं करिष्येऽहमेव संग्रामां-गणमागतः । किं च गुरुजने विहिते विनयः प्रशस्यते स चेद् गुरुर्गुरुगुणैरन्वितो भवेत्तस्य तु गुणविरहितस्य कृत्याकृत्यमसंविदान-स्योन्मार्गं प्रपन्नस्य परिहार एव श्रेयान् , अविनयश्चास्माभिस्तस्य को नाम कृतः, किं तस्योद्दालितं गजवाजिप्रभृति, किं वा पत्तनादि तस्य भग्नं, यन्मदीयाविनयं स सोढा । ये च विमृश्यकारिणो महांतो भवंति ते न जातु दुर्जनवचनैः स्वमनः कलुषं कुर्वंति । इयत्-समयं तु यदहं तत्र नायातस्तत्र निरीहतैव हेतुर्यतः किं नाम प्रयोजनं येन वयं यामः सार्वभौमसमीपं तद्दत्तं च देशनगरादिकमभुंजा नामामस्माकं कथं भरतः स्वामी संभवेत्, यतो मम भरतस्य चैक एव ऋषभदेवः स्वामी । येषां च निग्रहानुग्रहौ कर्त्तुमलं भरतस्ते क्लीबाः सहस्रशोऽपि धराधवास्तं सेवंतु स्वामिबुद्धया, मम किं प्रयोजनं । चक्रवर्त्तिपदे भ्रातृपदे च भरतसेवया न कश्चिन्मेऽर्थः । अहं

च सर्वदा स्वबाहुबलेनैव निर्भयोऽस्मि न तु भ्रातृसंबधेन। यं च सुरासुरा अपि सेवंते तस्य किं प्रयोजनं मत्सेवया, तातभक्त्या चेद् वासवस्तज्ज्येष्ठं तातसुतमर्द्धासने निवेशयत्येतावताऽपि किं स माद्यति। गजवाजिपदातिसैन्यानि सेनापतिर्भरतश्च मयि संग्रामांगणमागते वातादोलितार्कतूलतुल्यान्येवावसेयानि। यच्च मया बालक्रीडां कुर्वाणेन स चरणाभ्यां गृहीत्वा वियति लोष्टवत् प्रक्षिप्तः पतंश्च माभूद् व्यापोष इति बुद्ध्या गृहीतश्च हस्ताभ्यां तदपि किं तस्य विस्मृतं यद् भवंतं प्रेष्याहं कोपितोऽस्मि। चतुरंगाऽपि सा चमूः स्थास्यति स्वस्थाने परं स एक एव सहिष्यति मद्बाहुविहितां व्यथाम्। यच्च षट्खंडसाधनमनेन कृतं तत्तातदत्तसाम्राज्येनैव कृततोषस्य ममोपेक्षयैव, तस्मात् त्वं गच्छ स्थाने तमेव च प्रेषय पश्चाद् यद् भविष्यति तज्ज्ञास्यते।' इति बाहुबलिना निगदिते रोषारुणनेत्रैर्नरेंद्रैर्निरीक्ष्यमाणः क्रुधा हतहतेति कुमारैरुच्यमानः सुदृढबद्धपरिकरैः किंचिच्चालितप्रहरणनिकरैरंगरक्षकैः क्रूरदृशा विलोक्यमानः केनापि मा हन्यतां वराकोऽयमिति सचिवोत्तमैर्धियमानश्चरणमुत्क्षिप्य स्थितेन वेत्रिणा गले धर्तुमुत्थापितः सुवेगश्चित्ते क्षुब्धोऽपि धैर्यमवलंब्य निर्ययौ नृपसदसः। तदा च कुद्धबाहुबलिनादध्वनिसमाकर्णनेन सुभटसमूहेनास्फाल्यमानैः फलकैः कृपाणैश्च नृत्यमानैश्चक्रैश्चोर्ध्वनीयमानैर्मुद्गरैश्चादीप्यमानैर्दंडैश्च गृह्यमाणैः परशुभिश्चोधम्यमानैः सर्वतोऽप्यात्मनः पदे पदे निधनमिव चिंतयन् स्खलच्चरणः स सिंहद्वारान्निर्जगाम।

तदा च जनरात्रैवमभवत् 'कोऽयं नवीनः पुमान्निर्ययौ नृपद्वारा'त्तदा चापरः प्रतिवक्तिस्म 'भरतप्रहितोऽयं दूतः' 'तत्किमन्योऽपि नृपः प्रवर्त्तते भूतले' 'बाहुबलेर्ज्यायान् बंधुरयोध्यायां नृपो विद्यते' 'तेन च केन हेतुना दूतः प्रहितः श्रीबाहुबलिसमाकारणाय, तं समयं स क गतोऽभूत् षट्खंडसाधनकृते' 'तत् किं स स्नेहादाकारयति' 'न, सेवां विधातुं' 'तत् किं हीनबलान्नृपान् निर्जित्य पन्नगवदनेऽसावंगुलीं

'एवं चेत्तदसावनुजेन पराजित इति पराभवास्पदतामात्मनः
क्षेप्तुमिच्छति मंत्रबलविकलोऽपि'; 'अत्र सार्वभौमत्वाभिमान एव निदानम्।' 'तद्वारणं दूरे
किं न चिंतयति।' 'किं वा सचिवास्तस्य न विद्यंते बुद्धिमंतः', 'न, बहवोऽपि विद्यंते' 'तत् किं तैर्न वारितः सोऽनुचितं कुर्वन्' एवं स्थाने स्थाने मियो जनविधीयमानां
प्रत्युत तैरेव प्रेरितोऽसावस्मिन् कर्मणि, यतो भवितव्यता बलीयसी केनान्यथा कर्तुंनीयते।' अनया वार्तयापि
कथां समाकर्णयन् स निर्ययौ नगर्याः, तेन समं दूतसमागमवार्त्ताऽपि नगराद् बहिर्निर्गता सर्वत्र प्रससार बहलीदेशे। केचिच्च बाह्याल्यां प्राक्पं-
विस्तृतया प्रतिनगरं प्रतिग्रामं सुभटाः समरायोद्यमं चक्रुः। केचित्तदा समरोचितान् रथान् सज्जीकुर्वंतिस्म, केचिच्च
चगतिकृतश्रमानपि हयान् पुनस्तत्स्मरणनिमित्तं वाहयंतिस्म, केचिच्च लोहकारशालासु तीरतोमरादिशस्त्राण्युत्तेजयामासुः, केचिच्च कांडपटान् विस्तार्य
शिरस्कांगरक्षिकाप्रक्षरप्रभृतीनि सज्जयांबभूवुः, केचिच्च रणभेर्यादितूर्याणि प्रगुणीचक्रुः प्रयाणकृते, जनास्तद्देशनिवासिनः।
विस्तार्य विलोकयामासुः, एवं सर्वेऽप्यहमहमिकापूर्वं श्रीबाहुबलिभूपतौ परमभक्ताः समराय सज्जीभवंतिस्म
प्रायः स कोऽपि न विद्यते ज्यायांस्तरुणो वा यः समराय नोत्सहते।

एवं चित्तैः प्राणैरपि श्रीबाहुबलिनृपाभिमानसिद्धिं चिकीर्षतां तज्जनपदनिवासिनां जनानां संरंभं निरीक्षांचक्रे चक्रिदूतः पर्व-
तीयनृपतयोऽपि जनोदंतेन तां दूतागमवार्त्तां निशम्य श्रीबाहुबलिनृपे भक्तानि कुंजेभ्यो निःसृत्य गोशृंगनिनादेन किरातान् मीलया-
मासुः, तदा च केचिद् भटा भुजंगत्वचा बबंधुः केशान्, केचिच्च लताभिः, केचिच्छिखिपिच्छैः, केचिद् गोधात्वचा, एवं बद्धकेशाः,
कुरंगचर्मवल्कलादिपरिधानाः, केचिद् दृपत्पाणयः, केचित् कोदंडकांडपाणयः, सौवसौवस्वामिसमीपे समाजग्मुःश्रीबाहुबलिनृपप्रसादाद्
त्रासयामो वयं शीघ्रमेव भरतसैन्यमेवं किरातानामपि वचांसि समाकर्ण्य विस्मितमनाः सुवेगश्चिंतयामास, अहो जाने न केनैव

विरोधेनाऽमी बहलीदेशनिवासिनो जनाः समुत्सहंते समरकर्मणे किराता अपि हंतुमुत्सहंतेस्म सैन्यम्। तं कमपि नालोकयामि यः समराय नोत्सहते, स कोऽपि न प्रवर्त्तते यः श्रीबाहुबलिनृपे नानुरक्तः। शूराः स्वस्वामिभक्ताश्च बहलीदेशनिवासिनो हालिका अपि। तत् किममी देशस्वभाव उत भूपतेर्गुणाः प्रोज्जृम्भंते सेवकनृपास्तदायत्तप्राणचित्ता मन्ये तु पत्तिभूता एतस्य। परमेतच्चित्रं यदेतद्गुणावर्जिता स्त्रियोऽपि विषंमता पत्तिभूतेव वीक्ष्यते। प्रभूतमपि सार्वभौमसैन्यं स्वल्पमेव मन्ये लघीयस्या अपि श्रीबाहुबलिसेनायाः पुरतो वात्याया अग्रतोऽर्कतूलनिकरमिव। श्रीबाहुबलिनृपस्य पुरतश्चक्रवर्तिनमपि मन्ये जलदपुरतोऽष्टापदप्रतिरूपम्। दिवि दिवस्पतिरोजस्वी विख्यातः क्षितौ चक्रवर्ती, अयं तु नूतनः कोऽपि महावीरः समुच्चितो यत्पुरतः सुपर्वपतेः पवि सार्वभौमस्य चक्ररत्नं चाकिंचित्करतयैव मन्यते। अस्माभिस्तदसौ सुखसुप्तः केसरी चरणाभिघातेन बोधितः पवनाभिमुखस्थितैर्वा वनवह्निर्ज्वालितो यदयं महाबलोऽपि स्वदेशसाम्राज्येनैव संतुष्टो बाहुबलिः कोपितो दुर्मंत्ररतैः। अस्मत्स्वामिनोऽनेकसहस्रनृपपर्युपास्त्या किं न्यूनमभूद् यदसौ सेवाप्रतिपत्तिछते मां प्रेष्य मुधैव कोपितः। धिक् सचिवान् दुर्मंत्ररतान् यैरेतस्मिन् कर्मणि हितमानिभिरस्मत्स्वामी प्रेरित इत्यादि चिंतयन् सुवेगो वेगवद्गत्या कतिचिद्दिवासरैर्विनीतानगरीं प्राप नीतश्च प्रतिहारेणास्थानसभायाम्, प्रणनाम सार्वभौमपदोस्तदनु निषण्णश्च यथोचितस्थाने।

तदा च चक्रधरेण पृष्टं 'सुवेग! वेगेन त्वं समागतस्तत् किं कुशलं मदनुजस्य बाहुबलेस्त्व स क्रुद्धस्त्वद्गमनेन' इति चक्रिणा पृष्टः सुवेगः प्रत्यवोचत् 'स्वामिन्न दिवस्पतिरपि तस्याकुशलं कर्तुमलं महाबलस्य, परं स्वामिपादानामादेशादहं तत्र गतः मया चैकांतहितार्थिणा प्रथमं विनयवचनैः स देवपादानां सेवाविषये प्रोक्तः, पश्चाच्च खरवाक्यैरपि, परं न साम्ना न च खरवचनैः स स्वामि-

पादानां सेवां प्रतिपद्यते । यतः स बाहुबलगर्वितस्त्रिभुवनमपि तृणाय मन्यते । देवपादानां सैन्ये सुषेणः सेनापतिर्वर्ण्यते । तन्नामापि स न क्षमते । वक्ति च किं तस्य व्याख्यानं मदग्रे जीर्णशीर्णतृणप्रायस्य । स्वामिपादानां च षट्खंडजयवर्णने वक्ति पितृदत्तादेशतुष्टस्य ममोपेक्षयैव व्यधायि षट्खंडसाधनं भरतेन । स्वामिन् ! देवपादानां पर्युपास्तिनिर्मितिर्बाहुबलेर्दूरे, प्रत्युत–समरसज्जः समाकारयतिस्म स्वामिपादान्, सिंह इव श्वापदशब्दं स न क्षमते कस्यापि पार्थिवशब्दम् । तस्य संसदि सामंता अपि महाभुजाः श्रीबाहुबलिनं विहाय नान्यं कंचन क्षमंते भूपतिशब्दाभिधेयम् । तत्कुमारा अपि महाबलसाराः समरनाम्नाऽपि प्रमोदंते केकिन इव वारिदस्तनितरवेण । मंत्रिणोऽपि समरकरणमनुमन्यंते माननगाधिरूढेः स्वस्वामिनः । तज्जनपदनिवासिनो जना अपि श्रीबाहुबलिनं विहाय नान्यं कंचन नृपं मन्यन्ते । वनेचरा गिरिचराः किराता अपि न गणयंति देवपादानां सेनायाः किमपि । अलं बहुजल्पनेन महावीरः समरोत्सुकितः चेतोवृत्तिर्देवपादानां तत्र समागमनं समीहते स्म त्वरितमेव । एवं स्थिते सति यद्रोचते तत् कुर्वंतु स्वामिपादा यतो दूता न सचिवाः किंतु सत्यसंदेशकोक्तयः' इति दूतेनोक्ते हर्षविषादामर्षचित्रविचित्रितचित्तः श्रीभरत इत्युक्तवान् 'देवदानवमानवेषु नानेन समः कोऽपि स्थाम्ना । मयाऽप्यसौ बालक्रीडायां दृष्टविक्रम एव । त्रिभुवनपतेः श्रीऋषभस्यांगजन्मनो भुवनत्रयमपि तृणायेति सत्यमेव वचो न पुनर्वर्णनवचः । अनेन महाभुजेनानुजेन न मम महत्वक्षितिः परन्तु तद्वृद्धिः पवनेनेव वह्नेः, जातु जातवेदाः सहेत पादघातं व्यालो वा पाणिस्पर्शं नतु बाहुबलिः कस्यापि वश्यतां व्रजेत् । तत्सहिष्यामो वयमविनयमेतस्य । एवं स्थिते सति चेज्जनो मामशक्तं कथयिष्यति तदा कथयतु; यतः सर्वमपि वस्तु प्राप्यते पराक्रमेण वित्तेन वा न तु बंधुर्विशेषतस्तादृग्गुणवान् । एतद् यदुक्तं तत्सांप्रतमसांप्रतं वा यथास्थितं कथयंतु भवंतः सचिवाः किं मौनमाधाय स्थिता मूढमतय इव ।'

तदा च सेनास्वामी निजस्वामिनः क्षान्त्या बाहुबलेरविनीततया च मनसि समुत्पन्नमन्युरित्यवादीत् 'स्वामिन् ! श्रीयुगादिदेवनंदनस्य भरतः क्षांतिरुचितैव, परं यो यदीये ग्रामे संवासं विधत्ते सोऽपि तस्य वश्यतां व्रजेत्। अयं तु देशसाम्राज्यं भुंजानोऽपि न वचनेनापि देवपादान् स्वामितया मन्यते। कंठच्छेत्ता शत्रुरपि प्रशस्यते यः स्वतेजो वर्द्धयति। भ्राताऽपि स न प्रशस्यो यः स्वबंधोस्तेजसो विघातं विदध्यात्। यतश्चतुरंगसेनया भांडागारेण सुतैर्मित्रैश्च स्वप्रतापमेव रक्षंति नृपतयः। यतः पृथ्वीपतीनामाज्ञाभंगोऽशस्त्रवधः शास्त्रे कीर्त्यते, यदुक्तम्— आज्ञाभंगो नरेन्द्राणां, मानिनां मानखंडना। पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥१॥ किं च स्वामिपादानां स्वसाम्राज्ये किं न्यूनमभूद् यत् षट्खंडविजयः कृतः, परं तेजोवृद्धिकरणमेव तत्र कारणम्। एकत्रापि तेजसः संक्षये तेजोहीनता भवेदेव। यथैकशोऽपि लुप्तशीलाया महिलाया असतीत्वम्। सामान्यगृहिणामपि वित्तेष्वेव संभागो भवेद् बंधुषु न तु स्वतेजसः। किं च सकलभरतवर्षं विजित्यापि यदस्योपेक्षा तत्तु पारावारमुत्तीर्य गोष्पदे निमज्जनम्। किं चैतत् कुत्रापि दृष्टमाकर्णितं वा यद् भरतांतर्वर्ती नृपतिः सार्वभौमप्रतिपक्षतया साम्राज्यं विधत्ते ? अविनीते च तस्मिन्ननुजेयो भ्रातृसंबंधज एकपाक्षिकः स्नेहः स्वामिपादानां स न सतां संमतः। किं च नृपतीनां यो बंधुः सुतः पितृव्यो वाज्ञां न मन्यते स शत्रुरेव तन्निग्रहं चाऽनिर्माय कथं चक्ररत्नं पुरांतः प्रवेशं विधत्ते। बंधुरपि चेद् वैरी तदा नोपेक्षणीय एव नरेंद्रैः। अत्रार्थे पृच्छंतु देवपादाः सचिवपुंगवान्' इति सेनापतिनोक्ते चक्री मुख्यमंत्रिमुखसंमुखमीक्षांचक्रे। तदा च स सचिवशिरोरत्नमेवमवादीत्, 'स्वामिन् ! सेनास्वामिना युक्तमेवोक्तं, यतः सेनापतिश्चक्ररत्नमिव न द्विपल्लेशमपि क्षमते। तदलं विलंबेन तत्प्रतीहारमाज्ञापयंतु प्रयाणभम्भाताडनकृते।' एवं सचिवशिरोमणिना निगदिते प्राप्तनृपादेशप्रतीहारनिपुणताविचारिताताडितायां प्रयाणभंभायां तद्ध्वनिसमाकर्णनात् विज्ञाय चक्रिणः प्रयाणकरणं

मिलिताः सर्वेऽपि सवाहनाः सपरिकराश्चक्रिसैनिकाः। एवं मिलिते सति चतुरंगसैन्यसचिवाग्रणीरवोचत् 'स्वामिपादाः! कुत्र तु प्रयाण
वहलीजनपदं प्रति। तत्र च गतैः सुवेगेनोक्तं यत्तत् सत्यमसत्यं वेति निर्णयः क्रियताम्।' इति तदुक्तं वचस्तथेति प्रतिपद्य शोभन-
दिने निर्मितप्रस्थानमंगलः प्रयाणकृते पद्हस्तिनमारुरोह वैरिपुभमपुलकप्ररोहकृच्चक्रवर्ती तदा च गजवाजिरथाधिरूढैर्वाद्यवादकैः
सहस्रशो वाद्यमानेषु प्रयाणतूर्येषु चतुरंगचमूपरिवृतश्चक्रवर्ती निर्जगाम नगर्या बहिर्बहिस्कृतसर्वशात्रवः। तदा च सैन्यस्य पुरतो नगर्या
बहिः स्थितं चक्ररत्नं चचाल वहलीजनपदं प्रति यक्षसहस्राधिष्ठितम्। तदा च गजवाजिपत्तिरथरूपचतुरंगसैन्ये तन्मयमिव महीतलं
कुर्वंश्चक्री चक्ररत्नानुगश्चचाल तक्षशिलां प्रति। तदा चैवं जनवार्त्ता समभूत् पदे पदे यद् भरतवर्षप्रसाधितं चतुर्दशरत्नानि नवनिधा-
नानि च समासादितानि तत् किमर्थमेवं महासैन्यसंरंभेण चक्रिणः प्रयाणकरणं, किं स्वजनपदनिरीक्षणनिमित्तमुतान्यप्रयोजनहेतुकं चेद्देश-
विलोकननिमित्तं तत् स्यात्तद् किमिति चक्ररत्नमग्रतः प्रयाति, चक्ररत्नगमनदिगनुमानेन तु नूनं वहलीदेशं प्रति व्रजति चक्रवर्ती।
अहो महतामपि महती कषायप्रेरणा यत् स्वकीयानुजं प्रत्येवं महासैन्यसंरंभः। स च देवदानवमानवैरप्यनभिभवनीयस्तं च जिगीषु-
रसौ शेषनागाधिपतिशीर्षस्थितं मणिमादातुमिच्छति। जितोऽवरजेनाप्यग्रज इति महानवर्णवादोऽपि भविता सार्वभौमस्येति ग्रामे ग्रामे नगरे
नगरेऽयने च जनवचनान्याकर्णयन् रथचीत्कारकरिगर्जितैरेवं हयहेषितसुभटभुजास्फोटजनितमहाध्वनिना भुवनं शब्दाद्वैतमयमिव कुर्वन्
सेनापताकासैन्यसंचारसमुच्छलद्रजःकणैर्दिनकरकरनिकरमाच्छादयन् मार्गस्थसरःसरिदादीन् सैन्यबाहुल्येन शोषयंश्चक्ररत्नदर्शितवर्त्मना
वहलीदेशसंधिं समासदत् सार्वभौमः। तत्प्रवेशे च सैन्यनिवेशं कारयामास महीवासवः।

अथ बाहुबलिनृपोऽपि स्वनियुक्तचरनरैर्भरतं स्वदेशसीम्नि समागतमवगत्य तं प्रति प्रयाणहेतुं भंभां वादयामास तद्वादक-

नेण। तदनु निर्मितप्रस्थानमंगलः श्रीबाहुबलिः सुरदंतिप्रतिरूपं भद्रवरिणमारुरोह नृपतिस्वकुमारमंत्रिपरिवरितः। ततश्चतश्च लक्षशो निषादिनः सादिनो रथिनः पत्तयश्च महाबला महावीरा महोत्साहाः समभ्येयुः सरित्प्रवाहा इवार्णवम्। तदा च श्रीबाहुबलिसैन्येऽहमेकोऽपि जेष्यामि भरतलक्षकोटीरिति परस्परं महोत्साहानां वीरवराणां कथा समभूत्। किं बहुना श्रीबाहुबलिसेनायां बाहलावाद्योऽपि वीरवरः समजनि, यतः किं नंदनवने कल्पसालं विहायान्यः कश्चन नगः संभवेत्। एवं बहुनरपतिवृन्दपरिवृतः प्रत्येकं तानालोकयन् सुभटसिंहनादनानातूर्यनिर्घोषादिशब्दैर्गगनं ध्वन्यद्वैतमयं कुर्वाणः स्वदेशसंधौ समाजगाम श्रीबाहुबलिर्बलिनां बलयदनः। तत्र च सरित्तटे चक्रिणः सैन्यान्नातिदूरे नात्यासन्ने सेनां निवेशयामास क्ष्मावासवः। आगामिदिने च प्रातः समये रणकर्मणे तौ परस्परं निर्णयामासतुर्मागधप्रेषणेन। निशि च श्रीबाहुबलिः सर्वनृपसंमतं सिंहविक्रमजयिनं निजनंदनं सिंहरथं सेनास्वामिनं विधाय तत् शिरसि जातरूपमयं रणपट्टं स्वयं निवेशयामास। तदनु समासादितसमरशिक्षः स समानंदितमना बंदिवृन्दस्तूयमानगुणग्रामः समासदत् स्वपटकुटिं सपरिकरः। अपरानपि परिवृढान् प्रातः समये संग्रामाय समादिदेश विशामीशः। भरतस्तु सुषेणसेनास्वामिने समरशिक्षां प्रदाय। स च संप्राप्तसमरादेशः शिखीव वारिदागमं संग्रामाय प्रातः समयमभिलषन् ययौ निजनिकेतनम्। चक्री निजकुमारान् बद्धशक्रनृपान् सामंतादींश्च समाहूयैवमभ्यधात् 'यदसौ सेनापतिः संग्रामे युष्माभिः सावधानैरनुगमनीयो भवद्भिः, यतो युष्माभिरनेकेऽपि नृपा महाबला जिताः समरे, तथा वैताढ्यनगात् परतो निवासिनो म्लेच्छा अपि महाबला नीता वश्यतां युष्माभिः, परं तेषु बाहुबलिसेवाविधायिनो वीरमात्रस्यापि समः कोऽपि नाभूत्। तथास्य वीरवराणां किं वाच्यं यतो बाहुबलेर्ज्येष्ठस्तनूजन्मा सोमयशा एकोऽपि सुपर्ण इव सर्पनिवहं रिपुसैन्यनिकरं निर्नाशयितुमलंकर्मीणः कनिष्ठसुतस्तु सिंह इव गजघटां चतुरंगामपि चमूं प्रणाशयितुं हेल-

यैव समर्थः। बाहुबलेरपरेऽपि पुत्राः पौत्राश्च प्रत्येकं प्रकंपना इवार्कतूलानि रिपुवृंदानि दिशोदिशीं प्रक्षेप्तुं क्षमाः। तत्सेवकाः सामंताद्या अपि महाबला एकांतस्वामिभक्ताश्च। किं बहुनाऽन्येषां सैन्येषु यादृशः सेनापतिर्भवेत्तादृशाः प्रायः सर्वेऽपि तस्य सैनिकाः। तत्समरकर्मणे गच्छन् सुषेणः सेनापतिः सर्वैरपि वृंदीभूयानुगमनीय' इति पीयूषयूषप्रतिमवचनैश्चक्रिदत्तां रणशिक्षां प्रपद्य सर्वेऽपि नृपाः संग्रामसमुत्सुका ययुः स्वस्वावासम्। एवं समासादितस्वस्वस्वामिशासनाः सेनाद्वयेऽपि महीशासनाः सपरिकराः शक्तिकुंतकृपाणकोदंडकांडगदाप्रभृतिन्यस्त्राणि पूजयामासुः स्वस्वदैवतानीव महोत्साहाः, आयुधानां पुरतो नानाविधतूर्याणि वादयामासुः, वीरवरांश्च चंदनैः स्वदेहं च चर्चयामासुः। निशा च वीरवराणां शस्त्रजागरिकारणवार्ता च कुर्वाणानां क्षणप्रायैव समभवत्।

अथ चोदिते मार्त्तंडे सैन्यद्वयेऽपि कातरनरचेतस्त्रासकारी दशदिगंतरपरिपूरको महान् रणतूर्यनिनादः समजनि। तेन च रणतूर्यनिनादेन चालिताः सैन्यद्वयेऽपि सैनिकाः समरकर्मणे सज्जीबभूवुः। तदा च वीरवरा शिरोरक्षायै शिरसि लोहमयशीर्षकं निवेशयामासुः, उदरत्राणाय तस्मिन्नागोदं, बाहुद्वये बाहुले, जंघयोश्च मत्कुणेः, अंगे चांगरक्षिकाम्, एवं कृतात्मीयतनुत्राणाः स्वस्ववाहनानां करितुरगादीनामपि प्रक्षरादिभिस्त्राणं कुर्वंतिस्म। केचिच्च समरकर्मविषयोत्साहोल्लसत्शरीरास्तुद्यमानान् सन्नाहान् पुनः पुनः समारचयंतिस्म, केचिच्च हयसन्नाहनिवेशनसमये जयाभिव्यंजकं हेषाशब्दं निशम्य तानर्चयामासुः संजातचित्तानंदाः, केचिच्च तुरगाणां गतिपरीक्षणं चक्रुर्यतः समरे शिक्षिता एव तुरगास्तन्निर्वाहं कुर्वंति, केचिन्नानाविधायुधै रथं पूरयामासुः, केचन सारथिभ्यः सुदृढतरान् सन्नाहान् दध्रुः यतो रथा रथ्यान्विता अपि सारथिं विनाऽकिंचित्करा एव, केचिद्दूरतः स्वज्ञापनायोत्तंभितपताकान् स्तंभान् दृढीचक्रुः, केचन करिगंडस्थलप्रक्षरन्मदजलबिंदुभिः शकुनमिति वदंतः स्वभालस्थलेषु तिलकांश्चक्रुः, केचन मतंगजैर्ग्राहयामासुः शुंडाग्रेषु लोहमुद्गरान्। तदा च

महामात्रा दंतिदंतेषु त्रिशोत्रान् बबंधुः कृपाणान्, तदा चामीकृतकवचाः केचिद् वीरवरा बबंधुस्तूणीरद्वयमुभयोः पार्श्वयोः, केचन धनुर्नीं जगृहुः केचन कृपाणं केचन पट्टिशं, केचित् कुंतं, केचन लोहमुद्गरं, केचन् गदाम्, एवं स्वीकृतनानाविधायुधाः समरोत्सुका वीरवराः सज्जीभवंति स्म सैन्यद्वयेऽपि। तथाऽश्ववरान् शस्त्रैश्च पूरयंतिस्म शकटैर्यथा संपराये श्रीवीरवराणां शस्त्राणि पूर्यन्ते। तथा परस्परारोप्यंते स्म रथा यथा संग्रामे विशीर्णेषु वीरवराणां कवचेषु ते पुनः पूर्यंते। एकैकशस्त्रसंपूर्णरथमनु–लक्षीकृत्य रथांतराणि सज्जीक्रियंते स्म तदा, यतः शस्त्रपातैः संग्रामे रथा भज्यंते, प्रथमतुरंगेषु श्रांतेषु समरांतरायो मा भवत्विति प्रतिसादिनमनु तुरंगमांतराणि सज्जीक्रियन्ते स्म, तदा एवं निषादिनमनु गजांतराणि। तथा युद्धश्रांतानां तृडपगमाय तोयवाहकाः शतशः सज्जीक्रियंते स्म महिषाः। तदा च रथोत्साहकृते महावीरवराणां गुणोत्कीर्तनानि क्रियंतेस्म। एवं सैन्यद्वयेपि संग्रामसामग्री संजायतेस्म तदा।

अथ बाहुबलिः स्नानमंडपे कृतस्नानः श्वेतधौतांशुकपरिधानः कृतोत्तरासंगमुखकोशः पूजोपकरणपाणिर्ययौ देवभवने। तत्र च गंधोदकेन श्रीयुगादिदेवाधिदेवप्रतिमां स्नपयित्वा गंधकाषाय्या तस्या गात्राणि मार्जयामास। तदनु यक्षकर्दमेन तदुविलेपनं निर्माय प्रमरदामोदकुसुमप्रकरेण तदर्चनं विधिवत् निधाय कनकमणीमये धूमदहने धूपोत्क्षेपं चकार। तदनु कृतारात्रिकः स नानाविधैर्यथा स्थिरगुणोत्कीर्तनरूपैः स्तवनैः श्रीयुगादिदेवं स्तुत्वा देवभवनान्निरगादवनिपतिशिरोरत्नम्। तदनु कनकमणिरचितं वज्रवदभेद्यं चर्मवरं तनुत्राणाय वपुषि जग्राह शीर्षे च शिरस्कं पृष्ठे च लोहनाराचपरिपूरितौ तूणीरौ बबंध वामदोर्दंडे कार्मुकमादाय स्वगोत्रवृद्धाभिश्चिरं जीव जीवेत्युच्यमानः मधुरवनिताभिर्लीलयैव पराजय वैरिवृंदमित्याशीर्दानपूर्वं मुक्ताफलैर्वर्द्धाप्यमानश्चिरंनंद चिरंजयेति वंदिवृन्देन तारस्वरं निगद्यमान ऐरावततुल्यं हस्तिरत्नमध्यास्तोहाऽऽरोहकेण दत्तकरावलंबनः श्रीबाहुबलिः।

अथ च चक्रधरोऽपि जगाम सौवदेवालयम्। तत्र च दिग्यात्रावसरसमानीतपद्मनदादितीर्थतोयैः श्रीऋषभप्रतिमां स्नपयामास। तदनु हिमाद्रिकुमारादिप्रदत्तगोशीर्षचंदनैस्तां विधिवद् विलेपयामास। तदनु-विकसितपंकजादिभिरर्चनं चकार भूवलयसारभूतैः। तदनु दिव्यामोदजनमनःप्रमोदविधायिधूपोत्क्षेपं न्यधाद् वसुधाधवः। तदनु कृतारात्रिकः श्रीयुगादिदेवाधिदेवस्तवं सद्भूतगुणवर्णनमयं चकार सारवृत्तैः। तदनु देवभवनाद् विधिवन्निर्गत्य मणिरत्नकर्बुरितं जातरूपसन्नाहं देहरक्षाकरमुररीचकार। शिरसि च शिरस्कं कनकरत्नघटितं न्यधत्त दत्तरिपुप्रवासः श्रीभूवासवः। तदनु निशितशरनिकरपूरितौ तूणीरौ पृष्ठे बिभरांचकार भरतभूपतिर्वामकरे च कोदंडम्। तदनु गोत्रवृद्धवनिताभिः कृताशीर्मंगलस्तृणवन्मन्यमानः सर्वानपि रिपुसैनिकान् वंदिवृंदैर्वर्ण्यमानगुणग्रामः स नृपग्रामणी स क्षितितलगतसप्तांगं प्रक्षरन्मदजलं मदकलं सर्वलक्षणसकलमारुरोह जगन्मोहनरूपनिधिः। तदनंतरमुभावपि श्रीऋषभदेवांगोद्भवौ याचकेभ्यो यथेप्सितं वित्तं विश्राणयंतौ समरार्थमुद्यतान्निजान्निजान् वीरवरान् प्रत्येकं प्रेक्षमाणौ दक्षिणपाणौ बाणमेकं बिभ्राणौ समरकथां कुर्वाणौ मानमतंगजाधिरूढौ प्रौढपराक्रमौ समागतौ निजनिजसैन्यांतः।

अथ चोभे अपि सेने समरसज्जीभूते कल्पांतकालक्षुब्धपूर्वापरजलधी इव दुराकलनीये गजवाजिवेसरपत्तिपदाघातैः क्षितितलं चूर्णयंत्यौ रजसा दिनकरकरांश्छादयंत्यौ संमिलिते। तदा च सिंहनादं कुर्वाणाः प्रसिद्धैः केतुलक्षाभिरुपलक्षोपलक्ष्यपरस्परमाह्वयमाना अग्रे सैनिका अग्रसैनिकैरन्वमिलन्नुभयोरपि सैन्ययोः। तदा च यावद् गजिनो गजिभिस्तुरगिणस्तुरगिभी रथिनो रथिभिः पत्तयः पत्तिभिः कुंतिनः कुंतिभिः कृपाणिनः कृपाणिभिर्मुद्गरिणो मुद्गरिभिर्दंडिनो दंडिभिः कोदंडिनः कोदंडिभिः सममर्षपूरिताः समरप्रारंभं चक्रुस्तावत् कल्पांतकालवद् बहुजनप्रलयाशंकया संभ्रांता उपर्युपरि सुरं सुराः समाजग्मुः। तदा च ते नभःस्थिताः प्रोचुरुच्चमुद्वयसैनिकान्

'कोऽयं समरारम्भो द्वयोरपि सोदरयोरसमंजसो जनताप्रलयकारी तन्न योद्धव्यं केनापि यावद् वयं बोधयामस्तौ बांधवौ। अत्रार्थे च युष्माकं श्रीयुगादिदेवस्याज्ञा दत्ताऽस्ति,' तया च श्रीऋषभदेवाज्ञया ते द्वयेऽपि सैनिकाश्चित्रलिखिता इव तथैव तस्थुः। तदा च ते सैनिकाश्चिंतयामासुः किममी सार्वभौमसेवकाः सुरा उतान्ये केचन ?

अथ च ते सुपर्वाणः प्रथमं चक्रिणः समीपे जग्मुः। तत्र च गत्वा चिरं जय चिरं जीव चिरं नंदेत्याशीर्वाददानपूर्वं ते देवाश्चक्रिणं प्रत्येवमवोचन्; 'बंधव इव हितरक्षिणः, भवता राजकं विजित्य साधु षट्खंडविजयश्चक्रे, परं तेषु नृपेषु भवतः प्रतिमल्लः कोऽपि नाभूत्; तेन तैर्नृपैर्न भवतः समरेच्छाऽपूर्यत सघृतसितपरमान्नश्रद्धेव चोद्रवैः। तेन भवता निजानुजन्मना समं समरसंरंभः समारब्धः, अत्र दोःकंड्रेव निदानं दृश्यते नान्यत् किमपि। भवतोर्भुजक्रीडाऽपि जगज्जनप्रलयविधायिनी आरण्यमहिषयोः केलिरिव तरुभंगविधायी तदनुचितमेव रणकरणं निजावरजेन भुवनत्रयस्वामिनः षड्जीवनिकायत्रायकस्य श्रीऋषभदेवस्य सुतस्य भवतस्तद् विरम कुव्यसनादिवास्माद्विदनीयरणकर्मणः, क्षेमेण च गच्छ निजां राजधानीं, यतस्त्वयाऽत्र संग्रामाय समागते जनपदमात्रराज्यसंतुष्टोऽपि महाभुजोऽयं बाहुबलिः समरकर्मणे संमुखमागतस्त्वयि च प्रत्यायातेऽयमपि प्रतियास्यत्येवं च हते जगतोऽपि कुशलं भावि जगज्जनप्रलयपातकपरित्यागतः। शुभं भवतु भवतोः रणपरिहरणाच्च चमूद्वयस्य शुभं भूयात्। महीमहीधराः पारावाराः प्रजाः सर्वे जीवाश्च सुखिनः संतु भवत्येनासंमर्दविगमतः।' इत्याद्युदीर्य स्थितेषु त्रिदशेषु चक्री प्रोचिवान् 'इमां जगज्जनीनां गिरं कोऽन्यो ब्रूयाद् युष्मान् विना, यतः प्रायो जनः परविघ्नकौतुकी, किंतु सोदरेण समं समरोत्पत्तिनिदानमपरं भवद्भिरन्यथा वितर्कितम्। कार्यमूलं वाऽनवगत्य यद्धितानुशासनं तद् वाचस्पतेरपि केन मन्यते। यतो बलवानस्मीति गर्वपर्वताधिरूढतया न समरेत्सुः। प्रतिमल्लोऽपि

मम नान्यः कश्चिदासीद् वर्त्तते वा परं विधिवशाद् बाहुबलेरहं, मम च बाहुबलिः प्रतिमल्लतां ययौ। पुरा चासौ महाबली बाहुबलिर्जनकमिव माममंस्त, षष्टिसंवत्सहस्राणि दिग्जयं निर्माय च मामयोध्यायामायाते मिलनाय च नायमायातस्तदनुद्वादशवार्षिके षट्खंडसाम्राज्याभिषेकोत्सवेऽपि नागादसौ। तदनु मया दूते प्रेषितेऽपि मन्मिलनकृते नागतोऽसौ, अहं तु यदेनमाकारयामि तत्र लोभान्नाप्यभिमानकोपाभ्यां परमेकस्मिन्नप्यनवनते चक्ररत्नं नगरांतः प्रवेशं न विधत्ते। एष च न नमत्यतो हेतोरयं समरसंरंभस्तदेकवारं स ममानुजन्मा महौजा अपि मन्मिलनाय समायातु मद्विश्राणितमधिकमपि साम्राज्यं गृह्णातु। मम बाहुबलेः प्रणामेनाप्रणामेन वा किमपि न प्रयोजनम्। परं यच्चक्ररत्नं नगरांतःप्रवेशं न विधत्ते तदेव समरकरणकारणम्', इति सार्वभौमेन निगदिते ते गीर्वाणा अवोचन् 'नैतावदर्थे जनतासंहारहेतुसंग्रामकरणं सांप्रतं, तेन वयं यामः श्रीबाहुबलिसमीपे तमपि युक्तियुक्तैर्वचनैर्बोधयामः, सोऽपि चेद् वदिष्यति समरकरणकारणविशेषं तथाऽपि प्रभूतजनक्षयविधायि युद्धं न विधेयमेव, किंतु नयनवचनबाहुदंडयुद्धप्रभृतिभिरुत्तमैरेव युद्धैर्योद्धव्यं नत्वधमैर्बहुजनप्रलयविधायिभिः।' इति सुरैरुक्ते चक्री तथेति प्रतिपन्नवान्।

तदनु ते सुराः श्रीबाहुबलिसमीपे ययुः। तं च तेजसा सूर्यमिव दुरालोकनीयं निरीक्ष्य विस्मितचित्तास्ते गीर्वाणा'श्चिरं जीव चिरं नंद श्रीयुगादिदेवसूनो!' इत्याशीर्दानपुरस्सरं युक्तियुक्तैर्वचनैः प्रोचुः 'भवतः पिता श्रीऋषभस्वामी षड्जीवनिकायत्रायकः। भवता तु मनुष्यलक्षसंहारकारी कोऽयं संपरायः प्रारब्धः। सोऽपि ताततुल्येन निजज्येष्ठबंधुना। तन्निवारय स्यादेव निजवीरान् समरसंरंभरसिकान् निजज्येष्ठबंधोः पितृ-प्रख्यस्य च विनयं विधेहि। एवं च कृतेन च जनविहिता प्रशंसा भवित्री, समर्थोऽप्ययं कीदृगुपशमवानिति। यतः शक्तिः शमान्विता कस्यचिद्धन्यस्यैव संभवेत्। यदुक्तं '*लक्ष्मीर्विवेकेन यतिः श्रुतेन, शक्तिः शमेन प्रभुना नयेन।*

श्रद्धा च धर्मेण मम समेत्य, धन्यस्य पुंसः सफलीभवति ॥ १ ॥' शक्तौ च तितिक्षा महालाभहेतुर्यदुक्तं 'सत्त्वे नियमः शक्तौ, सहनं यौवने व्रतम्। दारिद्र्ये दानमत्यल्पं, महालाभाय जायते ॥१॥' गुणानां च मूलं विनयो विनाशस्य च मूलं दर्पः शास्त्रे निगद्यते। यदुक्तं 'धम्मस्स दया मूलं, मूलं खंती वयाण सयलाणं। विणओ गुणाण मूलं, दप्पो मूलं विणासस्स ॥१॥' तथा शास्त्रेषु विनयांता एव गुणाः कीर्त्यंते। यदुक्तं 'विणयंता चेव गुणा, संतंतरसा किया तु भावंता। कव्वं च नाडयंतं, राहावेहंतमीसत्थं ॥१॥' तस्मात् विनयं विधेहि विनयार्हस्य ज्यायसः श्रीभरतस्य, विनयं च विधाय भुंक्ष्व भरतोपार्जितं निजोपार्जितमिव भरतवर्षसाम्राज्यम्' इति कथयित्वा स्थितेषु त्रिदशेषु बाहुबलिः क्ष्मापालः किंचित् स्मित्वा शारदवारिदगर्जितानुकारिरवेण प्रोचिवान् 'भोः सुरा! आवयोः समरोत्पत्तिकारणमविज्ञाय मुग्धचित्ततया युष्माभिरेवमुच्यते। अपरं च सर्वदा भूपं श्रीऋषभदेवभक्ता आवां च तत्सुतौ इति संबंधतोऽपि युक्तमेवोक्तं भवद्भिः। परं शृणुत संग्रामोत्पत्तिकारणं श्रीयुगादिदेवेन श्रामण्यादानसमयेऽस्माकं भरतस्य विभज्य जनपदा विश्राणिताः। वयं तु तैरेव देशसाम्राज्यैः संतोषभाजस्तिष्ठामो यतः कः परद्रोहं विधत्ते निरपनिदानसाम्राज्यकृते। भरतस्तु स्वनीभूतसाम्राज्येनासंतुष्टो भरतांतर्वर्तिनिखिलभूपतीनां साम्राज्यानि जग्राह, तैरपि राज्यैर्गृहीतैः कृशानुरिवेंधननिवहैर्न संतोषमाप, ततश्च लोभाभिभूतः स्वानुजन्मनामष्टनवतिमितानां राज्यान्युद्दालयामास भरतः। यच्च तातवितीर्णानि स्वानुजन्मनां राज्यानि गृहीतवान् लोभाभिभूतचित्ततया तेन गुरुत्वमात्मन आत्मनैव निर्गमितम्। यतो वयोमात्रेण गुरुता न कस्यापि संभवेत्, गुरुता गुणैरेव संभवेत्। अनेन चानुजराज्योद्दालनेन यादृग्गुरुत्वमस्मिन् प्रवर्त्तते तादृग्दर्शितं मयात्वियंतं समयं भ्रांतेन शुक्तिशकले रजतबुद्धिवरणवदस्मिन्नेवंविधद्रोहविधायिन्यपि गुरुत्वबुद्धिः कृता। यतस्तुच्छसाम्राज्योऽपि जनकेन स्वसुतेभ्यो विभज्य विश्राणितां क्षितिं नापहरति। अनेन तु साधित-

भरतेनापि स्वबांधवान्निष्कास्य तद्राज्यानि गृहीतानि । एवंविधे बंधुद्रोहकरेऽस्मिन् गुरुत्वबुद्ध्या मया विनयः कथं क्रियते । एष च बांधवान्निर्वास्य मामप्याकारयते स्वाज्ञांगीकारकृते । स्वबंधुनिष्कासनेऽपत्रपाप्यस्य चित्ते नोत्पन्ना । कं गुणं तदस्य चित्ते विधाय विनयं करोम्येतस्य । एवं स्थिते सति माध्यस्थमाधाय यद् युक्तं तद् वदत भोः सुपर्वाणः ! किं मौनमाधाय स्थिताः । अथ चेदयं स्वविक्रमेण मां वशवर्त्तिनं विदधाति तदा विदधातु, यतो वीरभोज्या विश्वंभरा वर्त्तते। एवं सति चेदसौ विचार्य पश्चाद् व्रजति तदा व्रजत्वसौ क्षेमेण न किमपि कथयाम एतस्य। यत्तु युष्माभिरुक्तं विनयं विधाय भरतदत्तं भरतं भुंक्ष्वेति तदप्ययुक्तं, यतः षष्टिवर्षसहस्राणि महाधनं निर्माय भरतेन भरतं साधितम्, अहं चेद् जिघ्रक्षिष्यं भरतं तदा हेलयैवैनं ससैन्यमपि पराजित्य तदात्मसात् करोमि । परं कः करोत्येवंविधं बंधुद्रोहं मुधिकया । अथ चेन्मदाधिरूढतया मया समं समरं करिष्यति तदा मया गृहीतमेव जानीध्वं सर्वमपि वैभवमेतस्य। एवं स्थिते सति चेद् यूयमेतस्य हितविधायिनस्तदैनमेव निवारयत रणकर्मणो यतो न कदाचिदयुध्यमानेन सममहं युद्धं विदधामि' इति बाहुबलिना जलदगंभीरगिरा निगदिते विस्मितमनसः सुमनसः प्रोचुः 'सार्वभौमश्चक्ररत्नाप्रवेशं समरनिमित्तमब्रवीत् स च निरुत्तरीकर्तुं न शक्यते वाचस्पतिनाऽपि समरं करोमीतिवत् भवानप्यनुत्तरीकर्तुं न शक्यः सुरासुरगुरुभ्यामपि । एवं सति जनताऽभाग्येन द्वयोरपि भवतोर्महाबुद्धिवतोर्विवेकवतोर्दयावतोरपि समरोत्पातः समुपस्थितस्तथापि विनयं विधायैवमभ्यर्थ्यसेऽस्माभिर्जगद्वितीयवीरवर ! यदुत्तमेनैव युद्धेन योद्धव्यं यथा जनक्षयो न स्यान्मनःसिद्धिश्च भवेद् भवतोः ।' इति देवोक्तं वचस्तथेति प्रतिपद्य बाहुबलिः प्रतीहारं प्रति प्राह 'यन्निवारय रणकर्म्मणः समग्रानपि सैनिकान्' इति श्रीबाहुबलिनाऽऽज्ञप्तः स्वर्णदंडधरः प्रतीहारस्तारस्वरेण प्रोचिवान् सैनिकान् प्रति 'भो भो राजान्याश्चिराद् भवतामुपस्थितः समरोत्सवो बहुदिनबुभुक्षितानामिव विवाहमहः, परं सुरैरभ्यर्थितः

स्वामी भरतेन समं द्वंद्वयुद्धं कुरुते, तदपक्रामत यूयं समरभूमेस्तुरगमतंगजादीन् चालयित्वा' इति प्रतीहारोक्तं वाक्यमाकर्ण्य घूर्णिता इव श्रीबाहुबलिसैन्या वीरवराश्चिंतयामासुर्यदमर्षैः स्वस्वामिनो द्वंद्वयुद्धांगीकारं कारयद्भिरस्माकं समरोत्सवं निवारयद्भिश्चास्मद्धस्तागतो निधिरुद्दालितः, यतोऽस्मत्स्वामिनः सार्वभौमसमः कोऽपरो विरोधी भरता येन समं कर्मणा वयमनृणीभवामः । मुधैवास्माभि-र्गोनिर्वैरिव श्रीबाहुबलिभूपतेर्धनं भुक्तम् । अस्माकं च दोर्दंडबलरूपच्छाया तद्वनघनादिवादमकिंचित्करमभूदेतत्संग्राममहोत्सवाप-गमेन । मुधैवाऽस्माभिर्नानाविधायुधसंग्रहश्चक्रे द्रव्यलिंगिभिरिव रजोहरणादिसाधूपकरणसंग्रहः । शस्त्राभ्यासोऽप्यस्माभिर्मुधैव व्यधायि शीलवद्भिरिव वात्स्यायनादिकामशास्त्राभ्यासः, मुधैव चास्माभिर्गजानां वाजिनां च श्रमः कारापितो बहुलकर्मभिः प्राणिभिरिवानगा-राणां देशनाश्रमः । मुधैव च सन्नाहादिसज्जिका कृता विवाहसज्जिकेव वरागमनं विना ।' इत्यादि चिंतयंतोऽपूर्णसंग्रामदोहदास्ते बाहुबलि-सैनिका अपाक्रामन् समरभूमेः ।

तदा च चक्रधरोऽपि निजसैन्यमपसारयामास समरभूमेस्तु साधुरिव मनो निजं कुसंकल्पात् । तदा च ते सार्वभौमसैनिका अप-सार्यमाणाः संभूय स्थाने स्थाने एवमालोचयामासुः 'वैरिण इमे सुपर्वाणः स्वामिनो द्वंद्वयुद्धांगीकारं कारयामासुर्यतः सैनिकेषु परचक्राऽ-भावेऽन्येव स्वामिनः समरकरणं सांप्रतं किं प्रयोजनं च सेनया स्वामिनः स्वयमेव प्रथमतो युद्धविधाने । बाहुबलिं विहायापरः कश्चिच्चेत् परो भवेत्तदा स्वामिनोऽपि स्वयं समरकरणे नास्माकं काऽप्याशंका, महाबलेन बाहुबलिना तु समं समरनिर्माणे पुरंदरस्यापि विजये संशयस्तदाऽपरेषां का वार्त्ता । महाबलस्य बाहुबलेः पुरतः प्रथमं रणांगणे स्थातुं स्वामिनो न युक्तं वाड्वानले पूरप्रत इव । प्रथमम-स्माभिर्योधयित्वा च समापितेन तेन समं पश्चादेव प्रभोर्योद्धुमुचितं यथा लंघनैर्निराकृतपूरस्य ज्वरस्य पश्चादौषधविशेषेण तदुपशमनम्'

इत्यादीनालापान् मंदमंदं विदधतो निजसैनिकान्निरीक्ष्येंगितैरभिप्रायविच्चक्रभृत्तानाकाय कथयामासैवं 'यद् भवत्सु सत्सु न कोऽपि रिपुर्मत्प्रत्याययौ। तेन न जातुचिद् युष्माभिरहं युध्यमानो निरीक्षितः। तदृष्टपूर्वं मद्युद्धं विलोकयतु यूयं सर्वेऽपि तटस्थाः। या च बाहुबलिना समं रणकर्मण्याशंका सा मद्दोर्दंडबलपरीक्षां विधाय निराकरणीया भवद्भि' रित्युदीर्य खनकनरैरतिविततामति- गंभीरां गर्त्तामखानयदेकां चक्री, तत्तीरे च समुपविश्य वामभुजे लंबमानाः सहस्रसंख्या निविडितमा अयःश्रृंखला संबंधयामास सेवकैः, तदनु सर्वान्नृपतीन् समाकार्य कथयामास सार्वभौमः 'यूयं सर्वेऽपि सर्वसैन्यान्विता मामाकर्षत, आकृष्य च मामस्मिन् महागर्त्ते पातयंतु भवंतो मदीयदोर्दंडप्रबलतापरीक्षणकृते। प्रभोरवज्ञाऽप्येवंकरणे न गणनीया यतो दुःस्वप्नोऽप्ययमेवं-विधोऽस्माभिरीक्षांचक्रे सोऽपि स्वयमेव चरितार्थी कृतो निःफलतां व्रजेत्।' पुनः पुनरेवं सार्वभौमेनोक्तास्ते चक्रिसैनिकाः कथं कथमपि प्रत्यपद्यंत तद्वचः, यतोऽनुलंघनीया निजस्वामिन आज्ञा। तदनु ते सर्वेऽपि संभूय भुजबद्धाभिः सहस्र-संख्याभिः श्रृंखलाभिश्चक्रिणं सर्वबलेनाकर्षयामासु- स्तदा चक्रवर्त्ती तेनैव हस्तेन स्ववक्षसि विलेपनं व्यधात्तदा च ते श्रृंखलालग्नाः सर्वेऽपि सैनिकाः सार्वभौमवामभुजाकृष्टा लंबमानाः शाखिशाखालग्न-कपि-प्रतिरूपतां भेजुः। तदा च ते सैनिकाः स्वस्वामिनोऽतुलबलतां निरीक्ष्य हृष्टतुष्टचित्तास्ताः श्रृंखलाः सर्वा अप्यु- ज्झांचक्रुः। तदनु सार्वभौमः करिरत्नाधिरूढः समाययौ संग्रामांगणं बाहुबलिरपि कुंजरवरारूढः। तदा च जगज्जनप्रलयविगमतः प्रमु- दितमनसः समयज्ञास्सुमनसस्तत्र प्रदेशे रजःसंहारं चक्रुः। तदनु गंधोदकवृष्टिं विधाय नानाविधकुसुमवर्षं व्यधुर्विबुधास्तस्यामवनौ।

अथ तौ राजसिंहौ करिवराभ्यामवतीर्य सुरासुरनरसमक्षं नयनाजिना योद्धव्यमिति प्रतिज्ञां विधायानिमिषाविव निर्निमेष- नयनौ तस्थतुः। एवं निर्निमेषारुणनेत्रौ परस्परं वदननिरीक्षणपरौ तौ तस्थतुश्चिरकालम्। अथ च निशाकरकरस्पृष्टे इव पंकेरुहे

गारंभीमनपने जलविदुश्चरणपरे संद्गृणिते । बाहुबलिस्तु तथैव तस्थौ निर्निमेषाक्षस्त्रिदशवत् तदा च विस्मयस्मेरमानसैः शिरोधूननपरैः समरसाक्षिभिः सुरैः कुसुमवृष्टिर्विदधे श्रीबाहुबलिमूर्द्धनि । एवं श्रीबाहुबलिना नयनयुद्धेन जिते श्रीभरते सोमयशःप्रभृतिभिर्महावीरैः प्रमोदघस्मरलम्भके । तदा च श्रीबाहुबलिदले तारस्वरं विजयवाद्यान्यवाद्यंत प्रमोदमुदितैर्वादकैः भरतसैनिकास्तु हृतसर्वस्वा इव भेजुर्विशदविमूर्च्छाम् । उभयोः अपि सैन्ये प्रमोदविषादपरे भरतस्यामस्त्रिनीपत्युदयेनेव पुंडरीकपंकजे इरोन्निद्रनिद्राणे । तदा च श्रीबाहुबलिना प्रोक्तं 'काकतालीयन्यायेन जितमिति मा जल्पनेन वचनयुद्धेन युद्धं विधेहि ज्येष्ठबंधो ! वीरशिरोमणे !' । तदा च बाहुबलिना प्रोक्ते, ऐरावतगर्जितशारदवारिदस्तनितजलधिगर्जितमिव विजयिनं सिंहनादमकरोच्चक्रधरस्त्रासकरं वीरवराणामपि । इति प्रबल-सिंहनादेन यस्याः करिवरा उन्मूलयामासुरालानस्तंभान्, त्रोटयामासुरश्ववरास्त्र पादपाशान्, नाजीगणन् रथ्याः कशाघातम् । तेन च नादेन यस्ता सोमहिष्यादयोऽपि नागणयँश्चरणबंधनानि, श्रीबाहुबलिनृपोऽपि भरतसिंहनादादतोऽप्यधिकतरं सिंहनादं व्यधात् । तेन तौ चिरं चक्रतुः सिंहनादादिना वचनयुद्धम् । अथ च पूर्वाद्धजपादुर्जनमैत्र्यादिवत्सार्वभौमध्वनिः क्रमेण हीनहीनतरहीनतमतामगमत्; एवं श्रीबाहुबलिध्वनिस्त्वपराद्धजपेरानुपूर्व्याऽधिकाधिकां वृद्धिमवाप । एवं शाब्दीयवादरूपवचनयुद्धेनापि बाहुबलिना निर्जितो भरतपतिः । तदा च सुरासुरैर्जयजयारावादि शाप्ययके । तदा चोभयोरपि दलयोः सममेव भरतः प्रमोदविषादौ दिनकरोदय इव चक्रवाकचकोरयोः । अथ तौ भ्रातरौ बाहुयुद्धकृते च चंक्रतुः परिकरं, तदा च कनकदंडधारी बाहुबलेः प्रतीहारस्तारस्वरेण प्राह 'भोः शेषनागाधिराज ! सावधानतया निश्चलीभूय धर धरित्रीं यतोऽयं महाबाहुर्बाहुबलिर्महाबाहुना भरतेन समं मल्लयुद्धकृते सज्जीभवन्नस्ति ।' अथ तौ महामल्लौ निशांतमुन्दयन् करास्फोटरवं कुर्वाणावन्योन्यमाकारणं चक्रतुः । तौ च लीलया संचरन्तौ परस्परं पाणिभ्यां पाणी आस्फालयामासतुरेव

तौ मल्लयुद्धं विदधानौ क्षणेनायुज्येतां व्ययुज्येतां च तौ च क्षणादुत्पेततुः क्षणान्निपेततुश्च, बहुदिनमिलिताविव तावन्योन्यमंगेनांगं पीडयामासतुः । तयोश्चैवं मल्लयुद्धं विदधानयोरुपर्यधोभवनं पुनः पुनर्जायमानं जनासंलक्ष्यमिव समभवत् तच्चरणभारेणाक्रांतेव वसुमतीपादघातोत्थध्वनिमिषाद्रटति स्म मुहुर्मुहुस्तदा। अथैवं मल्लयुद्धे जायमाने रोषारुणनेत्रेण प्रचंडबाहुना बाहुबलिना पाणिना लेष्टुवदादायोर्द्धं वियति क्षिप्तो भरतपतिर्भरतः । तदा च समरकुतुकालोकनपरा नभःस्थिता विद्याधरा भरतमूर्ध्वमागच्छंतमालोक्य पलायांचक्रुः । अस्मिँश्च समये सैन्यद्वयेऽपि समजनि हाहारवः, यतो महतां विपदागमः कस्य न स्यात् शुचो निदानम् । तदा च चिंतयामास बाहुबलि'र्धिग् धिग् मे बाहुबलं यत् सोदरोऽपि मयैवंविधां विपदं प्रापितः । किं वा शोककरणेन यावद् वियतो निपतत्यसौ मिदिन्यां तावत् करावधःप्रसार्य पतंतं गृह्णामि' इति विचिंत्य तदधः करौ प्रसारयित्वा पतंतं जग्राह साहसिकशिरोमणिर्बाहुबलिर्बंधुवत्सलः । तदा च सेनाद्वयेऽपि भरतरक्षणेन प्रमोदः समजनि गतनिधानलंभेनेव । तदा स चक्रिजीवितवितरणगुणः सकलजनश्लाघनीयतामगमत् । बाहुबलिबलजीवितदानगुणरंजितैर्गीर्वाणैश्च कुसुमवृष्टिर्विदधे तन्मूर्द्धनि । तदा चान्तःकोपानलदह्यमानचेतास्त्रपावनतोत्तमांगस्तस्थौ भरतपतिर्भरतः । तदा च विलक्षतां गतं भरतं वीक्ष्य तद्वैलक्ष्यापोहाय गद्गदगिरा बाहुबलिरेवमवोचत् 'मा विषीद षट्खंडपते ! वीरावतंस ! ज्येष्ठबंधो ! यतो युद्धे कदाचित् कस्यचिज्जयः पराजयो वा संभवेत्, तेनैतावतैव न विजितोऽसि मया त्वं तेनोत्तिष्ठ वीरवर ! प्रतिज्ञातसमरकर्म्मणे किमुपविश्य स्थितोऽसि गतसर्वस्व इव वैलक्ष्यमापन्नः' इति बाहुबलिनोत्तेजितो मानधनः श्रीभरतभूपतिर्बाहुबलिं प्रत्याह 'मदीयमिमं दोषमयं सज्जीकृतो मुष्टिरेवापनयिष्यती'त्युदीर्य मुष्टिमुद्यम्य दधावे सुनंदानंदनं प्रति । स च मुष्टिः सर्वबलेनापि सार्वभौमेन बाहुबलिवक्षसि मुक्तो निष्फलतामगमदूषरक्षेत्रोप्तबीजवत् । अथ च बाहुबलिरुच्चैर्मुष्टिमुत्पाद्य मुमोच चक्रिणो वक्षःस्थले

पुरंदर इव पवि दानविगिरि । भरतस्तु तद्घातमूर्छामूर्छित पपात महीमंडले महामहीरुह इव निशितकुठारप्रहारेण तदा च तन्मुष्टिघात-भरतपतनाभ्यां भीतेव भूरपि प्रकंपमासमाद । तदा च बाहुबलिर्निजज्यायसं भूमंडले मूर्छया लुठंतं निरीक्ष्य संजातानुतापश्चेतसि चिंतयामास धिग धिग् क्षत्रियाणां स्वगोत्रद्वेषिता यदग्रजोऽप्येवंविधां विषमदशां मया प्रापित । अथ चेन्मुष्टिघातनिष्ठुरो मम ज्येष्ठबंधुः परासुर्भविष्यति, तदा ममापि पयाप्तं जीवितव्येनेति चिंते चिंतयन्नयनपानीयक्षरणपरायणो व्यजनेनेव निजोत्तरीयेण वातवीजन-परस्तस्यावतस्थे इव बाहुबलिर्भरतस्य पुरतः । अथ च शीतोपचारेण प्राप्तचेतनश्चक्रवर्ती सुप्त इव क्षणादुत्तस्थौ । तदा च बाहुबलिमुत्त-रीयेण वातवीजनपरं पुरः स्थितं निरीक्ष्य भरतस्तस्थौ लज्जानम्रवदनः । बाहुबलिरपि तस्थौ तथैव विजयेऽप्यनुत्सेकपरः । अथ च चक्रधरः कतिचिद् पदानि पश्चादपचक्राम समरांतरकरणेच्छुः, तदा च सुनंदानंदनश्चिंतयामास 'मम ज्येष्ठबंधुः केनापि युद्धेन युयुत्सुर्वर्त्तते । यतो मानधनाः प्राणांतकष्टमपि समापतिते मानं न त्यजन्ति । अयं च समरान्न विरमति वारं वारं पराजितोऽपि तद् मा ममावर्णवादो भवतु भ्रातृहत्या समरं' इति चिंतयति बाहुबलिस्तावत् सार्वभौमः समाददे दंडं पाणौ । तेन च दंडेन फणीव समुत्पातितेन शुंडा-दंडेन करीव चक्रधरः । अथ च तं दंडं नभसि भ्रामयित्वा तेन दंडेन बाहुबलिं मूर्द्धन्यताडयत्सार्वभौमः सर्वबलेन । तदा च तद्दंडघा-तजनितशब्देन त्रस्तुरगमदगजप्रभृतयो बंधनानि त्रोटयित्वा । तेन च दंडघातेन बाहुबलिमौलिस्थितं मौलिरत्नं खंडशो भूत्वा भूमंडले पपात मुकुटमभवत् । तेन च दंडघातेन क्षणं निमीलितनयनोऽभवद् बाहुबलिर्जनोऽपि च तज्जनितमहाध्वनिना । अथ च क्षणमात्रे-णापीक्षणे समुद्घाट्य बाहुबलिर्लोहदंडं यमदंडसहोदरं जग्राह निजदोर्दंडे, गृहीत्वा च तं बाहुबलिः सार्वभौमं वक्षसि जघान तेन । तदा च तेन घातेन चक्रितनुस्थितं कवचं कनकमणीमयोऽपि जीर्णशीर्णपटवद् विशरारुतामगमत्, चक्री च तेन दंडघातेन विह्वलित

चतोवृत्तिर्न किंचिदवेदयत् क्षणं। क्षणेन च प्राप्तचेतनः क्रुधा पावक इव प्रज्वलन् दशनैरधरं परिपीडयन् ललाटपट्टघटितभृकुटीयुगलः स्वबाहुबलः स्वबाहुबलमवलंब्य दंडंभ्रामयन्नधावत पुनः सुनंदानंदनं प्रति, कथयामास च विलोकय मत्कृतमिति कथयित्वा च सर्वबलेन तेन दंडेन बाहुबलिं जघान शीर्षे सार्वभौमः। तेन च घातेन जानुदघ्नमविशन् मेदिन्यां मेदिनीपतिमूर्छनापरः, तेन च घातेन समुत्पन्नवेदनः सुनंदानंदनः क्षणं न किंचिदाकर्णयामास। स च दंडो वज्रसारे बाहुबलिशीर्षे मुक्तो मृद्भांडवत् खंडशः समभूत् बाहुबलिश्च क्षणेन स्वयमेव मेदिन्या निर्जगाम। अथारुणनेत्रोऽमर्षप्रकर्षपरिपूरितः स स्वदोर्दंडो दंडं च विलोकयामास विलोकयित्वा चैकेन करणेन कालायसमयं दंडं परिभ्रामयत् किमसौ करिष्यतीत्याशंकाशंकुसंकलितचित्तैः सुरैर्नरैश्च निरीक्षमाणः श्रीबाहुबलिः सर्वबलेन सार्वभौमं मस्तके दृढमताडयत्। तेन च दंडघातेन महावेदनार्दितश्चक्री कंठं यावद् विवेश विश्वंभरांतः। तदा च चक्रवर्तिसैनिकाः स्वस्वामिनो महतीं विपदं वीक्ष्य शोकाकुलस्वांतवृत्तयः समभूवन् तुमलश्च महान् समभूद्दिवि देवविहितो भुवि मानवनिर्मितश्च। अथ निमीलितनयनः श्यामवदनः षड्खंडपतिः क्षणं तस्थौ मेदनीमध्ये। अथ च कियत्समयातिक्रमे स स्वयमेव निर्जगाम मेदनीमध्यात्।

अथ च चित्ते चिंतयामास चक्री 'अहमनेन सुनंदानंदनेन लघुबंधुनाऽपि जितः सर्वाजिषु तत् किं मयाऽस्यैवार्थे भरतसाधनं कृतं सेनापतिरत्नेनेव मदर्थे निष्कुटसाधनम्। किंचैकस्मिन् भरते जातु न भवतः सार्वभौमावुभो एककंदर इव द्वौ केसरिणौ। अपरं च सुरैर्विजीयते सुरपतिश्चक्रवर्ती च भूपतिभिरेतदश्रुतपूर्वं व्योमकुसुमवत्। एवं स्थिते सत्यनेन निर्जितः किमहं न भवामि चक्रवर्ती। मयाप्यपराजितो विश्वाजेयपराक्रमः किमसावेव सार्वभौमो भविता।' इति चिंतासंतापतापितचित्तश्चक्री चक्ररत्नं सस्मार। तदा च

यक्षैः समानीय समारोपितं चक्ररत्नं चक्रिणः करे, तत् प्रत्ययादात्मनि चक्रवर्तित्वं मानयंश्चक्रवर्ती तच्चक्ररत्नं पावक इव ज्वाला-
मालाकुलं व्योमनि भ्रामयामास वासव इव पविम्। एतच्च समालोक्य महाबलो बाहुबलिश्चक्ररत्नमर्कतूलप्रायं गणयंश्चित्ते चिंतयामास
साहसिकशिरोमणिः, 'धिगेतस्य श्रीऋषभदेवतनयमानितां, यत् क्षत्रव्रतं निरस्य मयि दंडशस्त्रकरे भरतस्य चक्ररत्नायुधोपादानं, देवानां
समक्षमुत्तमसमरसंगरं निर्माय मयि दंडकरे भरतस्य प्रतिज्ञाभ्रष्टता च समजनि चक्ररत्नग्रहणतः। यथैव चक्ररत्नं प्रदर्शयित्वा जग
ज्जनं भापयामास तथा मामपि बिभीषयिषुर्वर्तते। तदसौ यथा निजभुजदंडानां बलं विदितवांस्तथा चक्ररत्नस्यापि पराक्रमं जाना'त्वि-
त्यादिचिंतनपरं सुनंदानंदनं प्रति सबलेन प्रेर्य चक्री चक्ररत्नं चिक्षेप। तदा च बाहुबलिश्चिंतयामास 'किमिदं कुंभवद्दंडेन चूर्णीकरोमि,
किं वा कन्दुकवद्दंडेनाहत्य पश्चात् क्षिपामि, किं वा हस्ते गृहीत्वा मृद्गोलकवद् वियत्युच्छालयामि, किं वा शंकुवद् विश्वंभरांतः
क्षिपामि, किं वा हस्तेनापहस्तयामि, किंचैतदधिष्ठायकान् सहस्रमितान् यक्षान् दंडेन दलयामि। अथ चैतत् सर्वं पश्चात् करिष्ये,
प्रथमं विलोकयाम्येतस्य सामर्थ्यम्' इत्यादिचिंतयतस्तस्य बाहुबलेः समीपमागत्य भास्वन्मंडलमिव मंदरं तं नरवरं प्रदक्षिणीचक्रे
चक्ररत्नम्। स्वगोत्रोद्भवे सामान्येऽपि नरे न प्रभवति किं स्वपुनस्तद्भवमुक्तिगामिनि श्रीमद्युगादिदेवाधिदेवनंदने। तदनु पुन-
श्चक्ररत्नं पश्चाद् गत्वोपाविशत् पादपद्मरजश्चवद् भरतपतेः पाणौ। तदनु बाहुबलिश्चिंतयामास भुजंगमानां यथा दंष्ट्राबलं, वृश्चिकस्य
यथा पुच्छकंटकबलं तथाऽस्य चक्ररत्नस्यैव बलं नान्यदस्येदृशं शस्त्रं तदनेन मयि दंडायुधे मत्मारणाय तदपि मुक्तमसौ च संगर-
परिभ्रष्टो ननु, कठोरतरचित्तं कृत्वा तदेनमन्यायिनं सचक्रमपि चूर्णीकरोमीति चिंतयन्नुद्धतमुष्टिमुद्यम्य रोषारुणनयनः सुनंदानंदनश्चक्रिणं
प्रत्यधावत भीषणाकारधरः। अथ च चक्रिणोऽतिके समागतः समुत्पन्नविवेकः सत्पुरुषप्रवेकश्चित्ते चिंतयामास, 'धिग्! ममानेन निर्दय-

हृदयेन मयाऽपि बंधुवधो विधातुमारब्धः । धिग् ! मां राज्यलुब्धं यन् मया मानगजाधिरूढेन ज्येष्ठबंधुरप्येवं नानाविधयुद्धैर्योधित-
स्तद्विगेनां राज्यतृष्णां यल्लुब्धैर्भवाभिनंदिभिः प्राणिभिः सोदरादीनामपि वधो विधीयते वैरिभूतैः, तद्धन्यास्ते एवाधानवतिनांथवा यैः
प्रथममेव महानंदपदनिदानं संयमादानं निर्मितं समरकर्माधर्मनिमित्तमनिर्माय। अहं त्वद्य यावन्मदिरावन्मोहोन्मादजनयित्र्यां साम्राज्य-
रमायामासक्तमनास्तिष्ठामि । तद्धिग् मां साम्राज्यलुब्धमपि तातसुतमानिनं, तद् यथा मज्जनकेन श्रीऋषभदेवाधिदेवेन दुर्गतिगतिनिदान-
मियमित्यवधार्य त्यक्ता साम्राज्यरमा तथा मयाऽप्येषाऽवश्यं त्याज्ये'ति विहितनिर्णयः श्रीमान् बाहुबलिः सार्वभौमं प्रत्युवाच तितिक्ष
स्वज्येष्ठबंधो ! यन् मया सपत्न इव नानाविधयुद्धैस्त्वं खेदं नीतोऽसि, तत् मम किंपाकफलोपमैर्विषयसुखैर्हृत्पूरवद्ग्रहिलतानिर्मितिप्रत्ययेन
साम्राज्याभिमानेन च कृतम्, अहं संयमसाम्राज्यं समादास्ये महानंदपदनिदानं दूरपरित्यक्तधनकनकतनुस्वजनपरिजनादिममत्वः' इत्यु-
दीर्य तेनैव मुष्टिना कचलोचं लीलयैव निर्माय सामायिकचरितांगीकारं चकार त्रैलोक्यसारभूतं सत्त्वनिधिः श्रीबाहुबलिः तदा च
नभःस्थिताः सुमनसः समानंदितमनसः साधुसाध्विति वदंतः सुमनसां वृष्टिर्व्यधुः श्रीबाहुबलिमूर्ध्नि ।

तदा च गृहीतश्रामण्यः श्रीबाहुबलिश्चिंतयामास 'गच्छाम्यहमथ श्रीऋषभनाथपादपद्ममूले' अथवा संप्रति न यास्यामि
यतः प्राक् प्रव्रजिता ये मदनुजा अष्टनवतिमितास्तेषां मध्ये मम पर्यायेण लघुता भविष्यति तदत्र स्थित एव तपःसंयमाभ्यां घातिकर्म-
क्षयं निर्माय समासादितपंचमसंवेदनो गमिष्यामि स्वामिनोऽतिके इति' कृतनिर्णयो नासाग्रन्यस्तनयनः प्रलंबितभुजयमलः श्रीबाहुबलिः
श्रमणशिरोमणिस्तत्रैव तनूत्सर्गमकरोत् मंदर इव निष्प्रकंपकायस्त्यक्तमायापः । तदा च चक्रवर्ती स्वबांधवं परित्यक्तधनस्वजनपरि-
जनादिसर्वसंगं निर्ममं निरीहं समशत्रुमित्रवर्गं तनूत्सर्गस्थितं रोषस्थाने समासादितपरमनवमरसं निरीक्ष्य विस्मितचित्तः स्वं च कु-

कर्मकारिणं हृदि परिभावयन् लज्जया क्षणं तस्थौ नीचैःकृतवदनस्तदनु जंगमतीर्थमिव स्वबांधवं चित्ते चिंतयन् समुत्पन्नमहानंदः स्वदुष्कर्मनिर्मूलनकृते भक्तिप्राग्भारनुन्नः प्रणनाम षट्खंडमेदिनीनायकस्तं यतः साधुवंदनेन दुरितदूरीकरणं वोभवीति प्राणभाजां भक्तिभाजां, यदुक्तं 'दर्शनेन जिनेंद्राणां, साधूनां वंदनेन च। न तिष्ठति चिरं पापं छिद्रहस्ते यथोदकम्' ॥१॥ एवं स्थिते सति विलोकयत जनाः सांसारिकसाम्राज्य-संयमसाम्राज्ययोर्विषपीयूषयोरिव दूरमत्यंतमंतरम्। यदा श्रीबाहुबलिः सांसारिकसाम्राज्यार्थी समरकर्मनिर्मितिपरः समभूत्तदा द्विषन्निव सार्वभौमेन मारणाय स चिंतितः, यदा च परित्यक्ततदभिलापः संयमसाम्राज्यमुररीचकार तदा स एव भक्तिपुरस्सरं पित्रेव वंदितः। एवं सांसारिकसाम्राज्यसंयमसाम्राज्ययोर्महत्तममंतरं परिज्ञाय तत्रैव संयमसाम्राज्ये यत्नं कुरुध्वं येन समासादितेन सुरासुरनरेंद्राणामपि पूज्यता भवेत्। यदुक्तं 'किमिह चरणतोऽपि, स्यात् पदं वस्तु लोके, मुदितसुरनरौघभ्रंशिणो यत्प्रभावात्। द्रमकमपि नमंति, भीतितो यद्वशेन, त्रिदशनरशिवश्रीसंगमश्चापि यस्मात्' ॥१॥

अथ च चक्रवर्ती प्रमोदाश्रुनीरैः स्वकषायानलं विध्यापयित्वा श्रीबाहुबलिमहामुनेः स्तवनमात्मनिंदनं चैवमकार्षीत्—

"महामुने! तव गुणाः कथं मदेकया रसनया वर्णयितुं शक्यंते, यतस्त्वया मदुपरि दयां निर्माय जीर्णतृणवत्साम्राज्यं हेलयैव त्यक्तं, तद् भवान् समभूदुभयथापि जितकाशी, यतो गार्हस्थ्ये भवता मत्समोऽपि रिपुः समग्रेष्वपि समरप्रकारेषु पराजितः, सांप्रतं तु गृहीतश्रामण्येन भवता त्रिजगज्जनजयविधायिनां रागद्वेषाद्यंतररिपूणामपि विजयो विदधे, तद् भवता समानः कोऽन्यो महासुभटः। यतः रागद्वेषजयविधायिनो महासुभटा निरादिता, उक्तं च 'ससुरासुरं पि भवणं, निज्जिउण वसीकयं जेहिं। ते रागदोसमल्ले, जिणंति जे ते जए सुहडा ॥१॥'

अहं च द्विधाऽपि कातरो यतो भवता समस्तेष्वपि संग्रामेषु पराजितः, एवं बाह्यवैरिजये मे समभूत् कातरता, अंतरंगरिपुभिस्तु
रागद्वेषादिभिस्तथापराजितोऽहं यथा जानन्नपि संसारवासं कारागारनिवासादपि महादुःखदं तत्रैव रक्तो न त्यजामि साम्राज्यलोभम्।
त'दिंद्रियाणां जये शूर' इति वचनाज्जितेंद्रियत्वेन शूरनरेषु भवतो रेखा, करणकषायादिभिः पराजितत्वाच्च कातरनरेषु मम रेखा।
अपरं च समर्थेषूत्तमपुरुषेषु संतोषवत्सु भवतो रेखा, यतो भवता सामान्यभूपतिनाऽपि सार्वभौमोऽप्यहं निर्जितः, अत एव तव समर्थेषु
रेखा, अन्यायकार्यप्यहं न निगृहीतोऽत उत्तमेषु ते रेखा। एवंविधो बलवानपि पितृदत्तसाम्राज्येनैव संतोषमकार्षीद्भवानतः संतोषवत्सु
तव रेखा। स्वशक्तिमसंविदानेषु तथा'ऽन्यायनिरतेषु लोभवत्सु च मम रेखा त्वया समं समरकरणेन चक्ररत्नमोक्षणेन खट्खंड-
साम्राज्यावाप्तावपि लघुबांधवानां साम्राज्यहरणेन जनकप्रदत्तत्वत्साम्राज्यहरणमनोरथकरणेन च। एवं तव मम च प्रभूतमंतरं गृह-
मणिनभोमण्योरिव। अन्यच्च राज्यं निरयनिदानमिति ये न जानंति तेऽधमाः, अहं तु तेभ्योऽप्यधमतमो यज्जानन्नपि नरकांतं
राज्यं संविदानोऽपि विषयान् विषफलोपमांस्तत्परिहरणपुरस्सरं न करोमि संयमसाम्राज्यस्वीकारं महानंदपदसत्यंकारम्। धन्यस्त्वमेव
त्वमेव च सत्यस्तातसुतो यत् पूर्वं पितुःस्वीकृतं संयमसाम्राज्यं स्वीकृतवान्। अहमपि तदा तातस्य सूनुः सत्यो भविष्यामि यदा
पटप्रांतलग्नरजःकणवद्राज्यं विहाय संयमसाम्राज्यं स्वीकरिष्यामि' इत्यादिवचनैरात्मनो निंदां श्रीबाहुबलिमहामुनेः स्तुतिं च यथा-
स्थितां निर्माय तत्सुतं सोमयशसं बहलीजनपदसाम्राज्ये स्थापयामास भूमिवासवः, ततप्रभृतिसोमवंशः समजनि नररत्नानामुत्पत्ति-
निमित्तं शाखाशतविततः तदनु चक्रवर्त्ती बाहुबलिमहामुनिं नमस्कृत्य कृत्यवित्तद्गुणस्मरणप्रवणः कृतनृपतिप्रवेशोचितनानाडंबरसुंदरीं
श्रीअयोध्यापुरीमगमन्महामहपुरस्सरं सामस्त्येन साधितषट्खंडं चक्ररत्नमपि विवेशायुधशालायाम्।

अथ सपूर्णतया साधनभरतस्य श्रीभरतसार्वभौमस्य समृद्धिरूप वर्ण्यते । तथाहि चतुर्दशरत्नानि नव च निधानानि तस्य समभूवन् । पचत्रिंशतिर्यक्षसहस्राणि चतुर्दशरत्ननवसेवधिदेहाधिष्ठायकै कृत्वा सेवते सार्वभौमम् । तस्य चतुष्पष्टि. सहस्राणि हरिणेक्षणा अत पुर ताश्चैव द्वात्रिंशन्सहस्राणि नृपपुत्रीणा द्वात्रिंशच्च सहस्राणि जनपदप्रधानवनितानां, द्वात्रिंशत् सहस्राणि च द्वात्रिंशत्पात्राणा नाटकाना, चतुरशीतिलक्षाणि च मत्तमतगजतुरगरथाना, षण्णवतिकोट्यश्च ग्रामपतीना द्वात्रिंशत् सहस्राणि च जनपदाना द्वासप्ततिश्च सहस्राणि पुरवराणा, नवनवतिश्च सहस्राणि द्रोणमुखाना, अष्टचत्वारिंशच्च सहस्राणि पत्तनाना, चतुर्विंशतिश्च सहस्राणि कर्वटाना मडबाना च, षोडश च सहस्राणि खेटाना, विंशतिश्च सहस्राण्याकराणा, चतुर्दशसहस्राणि सबाधाना, षट्पंचाशच्चातर्द्वीपाणाम् । एकोनपंचाशच्च कुराज्याना, त्रीणिशतानि त्रिषष्ट्यधिकानि च तस्य गृहे सूपकाराणाम्, अन्येषामपि मागधवरदामादितीर्थपतिप्रभृतिभरतान्तर्वर्त्तिसुराणा नराणां किंनराणां चाधिपत्य परिपालयन्नष्टादशश्रेणिप्रश्रेणिभिर्व्यवहार प्रवर्त्तयामास । श्रीभरतवर्षे केषाचिदकृतसुकृतानां स्वोदरपूरणमपि दु खेन जातु संपद्यते न वा, श्रीभरतस्य तु यदेवविधा समृद्धिरभवत्तत् प्राग्जन्मविधिवदाराधितचरितस्य फल पंचशतमितमुनिवराशनपानप्रदान रूपवैयावृत्तविधानस्य च, तस्माद् गृहीतश्रामण्यैः श्रुत्वा श्रीमदर्हत्प्रवचनोपदेश विहाय च तनुवनिताधनस्वजनपरिजनादिममीकार श्रामण्यमगीकरणीयम् । गृहीतचारित्रैस्तु तत्पालने विधिवद् वैयावृत्यविधाने च यतनीयम् । एव पूर्वकृतसुकृतमाहात्म्यतः स्व पुरीप्रतिष्ठाया श्रीमदयोध्यानगर्यां वासव इव साम्राज्य भुंजानश्चतुष्षष्टिसहस्रात पुरीभि सम पचप्रकार यथा मनोऽभिमत वैषयिकसुखमनुभवति स्म सर्वकालं सार्वभौम. ।

अथ च श्रीबाहुबलिमहामुनेस्तनूत्सर्गस्थितस्य त्यक्ततनुममत्वस्य शुभध्यानलीनमनस वालत्रयमपि समतिक्रान्तम् । तत्रोष्ण

काले श्रीबाहुबलिरुष्णर्तुवात्याभिः शैलेशवन्न चचाल मनागपि धर्मध्यानात् । तथा निदाघसमये मध्यंदिनेऽपि दिनकरकरतापेन शिर-स्तप्तमपि स नाचिंतयत्सुकृतध्यानलीनमनोवृत्तिः । ध्यानैकतानमनाः स नाजीगणत् तृषापरीषहं लेशतोऽपि । तथा मस्तकादारभ्य पादयुगं यावत् प्रस्वेदपंकक्लिन्नतनुरपि न चिंतयामास मनागपि मलपरीषहं, तथा वर्षाकाले झंझानिलैर्न लेशतोऽपि क्षुब्धः शुभध्यानात् । तथा जीमूतगर्जितं सौदामिनी झात्कारैरपि स न मुमोच शुभध्यानम्, तथा वहन्महावारिप्रवाहैर्जलपंकनिमग्नचरणोऽपि न चेतसि चिंतयामास मनागपि तद्व्यथाम् । तथा शिशिरसमये हिमानीदग्धवनेऽपि स शीतपरिषहं नाचिंतयच्चित्ते धर्मध्यानैकतानमानसः । एवं निदाघवर्षाशीतकालजनितक्लेशेन न लेशतोऽपि धर्मध्यानात् क्षोभमवाप । एवं वर्षाकाले सद्भूतलतावितानैर्महातरुरिव वेष्टिततनु-र्वनेचरकरिकुरंगमहिषपंचाननचित्रकप्रभृतिनानाविधजंतुजातविहितोपसर्गैरप्यक्षुब्धमनोवृत्तिः श्रीबाहुबलिः संवत्सरं यावत्तस्थौ तनूत्सर्गे ।

अथ च चतुर्विधाहारपुरस्सरं कायोत्सर्गे स्थितस्य तस्य संवत्सरे पूर्णे ब्राह्मीसुंदर्यौ महासत्यौ समाकार्य श्रीऋषभप्रभुः स्माह 'यद् बाहुबलिः प्रभूतदुरितक्षयेण क्षीणप्रायघातिकर्मा प्रवर्त्तते । परं मानगजाधिरूढतया तस्य केवलचिदुत्पत्तिर्जायमाना नास्ति । तद्-युवाभ्यां तत्र गत्वा तत्पुरत एवं वाच्यं यद् 'युगादिदेवस्त्वामेवमादिशति स्म यद्गजाधिरूढस्य केवलं नोत्पद्यते,तत्तस्मादुत्तर महामुने!' इति श्रीऋषभप्रभुणादिष्टे ते महासत्यौ तत्र गत्वा तद्वचो वंदनपूर्वं तस्याग्रे कथयित्वा पश्चाद्-वलिते । अथ च स तद्वचः समाकर्ण्य चिंतयामास 'यत्कायोत्सर्गे स्थितस्य मम कथं गजारूढता । इमे च महासत्यौ न मृषावादिन्यौ तन्नूनमहं मानगजाधिरूढोऽस्मि । तत् मानं मुक्त्वा वंदामि ताननुजानपि व्रतज्येष्ठान् ।' इति विचिंत्य कायोत्सर्गं पारयित्वा यावत्तद्वंदनार्थं पादमुदक्षिपत्तावद् घातिकर्म-क्षयात्स केवलज्ञानमवाप । ततः पूर्णप्रतिज्ञः श्रीऋषभस्वामिसमीपे गत्वा प्रदक्षिणं विधाय तीर्थं च नत्वोपाविशत्स केवलिपर्षदि ।

इति श्रीमत्तपागच्छालंकारहारभट्टारकघटाकोटीरहीरश्रीसोमजयसूरिशिष्यशिरोमणिश्रीइंद्रनंदिसूरिराज-
यिनयागमसिद्धान्तसारसंकलित श्रीदर्शनरत्नरत्नाकरग्रन्थे श्रीमदनुगमापरपर्याये श्रीभरतचरित्रश्रीऋषभदेवनिर्वाणवर्णन-
नामिकाया तुर्यलहर्यां श्रीबाहुबलिसंग्रामभामण्यपंचमहाज्ञानोत्पत्तिवर्णननामा द्वितीयस्तरंग संपूर्ण ।

## तुरीयलहर्यां तृतीयस्तरङ्गः ।

अथैतस्यामेव तुर्यलहर्यां तृतीयतरंगः प्रस्तूयते । तत्र द्वितीयतरंगे भगवज्ज्येष्ठसुतेन भरतेन समं बाहुबलिनो युद्धं तद्दीक्षा-केवलावबोधावाप्तिश्च वर्णितानि । अत्र तु तृतीयतरंगे भगवद्विनेयमरीचिभाविशलाकापुरुषभगवन्निर्वाणावाप्तिप्रभृतिस्वरूपं व्यावर्ण्यते । तथाहि भरतसुतो मरीचिनामा भगवतो भवनिर्वेदजननीं देशनां निशम्य वैराग्यरंगपूरितान्तरंगः स्वीचकारानगारताम् । तदनु स्थ-विरांतिके ग्रहणासेवनालक्षणं शिक्षाद्वयं स शिक्षयामास । तत्र ग्रहणशिक्षयामेकादशांगानि ससूत्रार्थानि सोऽधीतवान् । अथ च स साधुगुणैः समलंकृतः कदलीगर्भसुकुमालकायः श्रीऋषभस्वामिना समं विहरन्नन्यदा निदाघर्त्तौ मध्यदिने दिनकरकरैर्निशितशरैरिव मूर्धनि तापितः समं तप्तविकीर्णांगारप्रतिरूपैः पांशुकणैश्चरणयोर्दह्यमानः, कृशानुज्वालासमानाभिरुष्णवात्याभिः सर्वतोऽभिभूततनुः, प्रक्षरत्-प्रस्वेदक्लिन्नमललिप्तवसनांगोऽतश्च समुद्भूतप्रभूततृषाधर्षित एवमुष्णपरीषहेन तर्जितश्चित्ते चिंतयामास 'यन्मम पितामहस्त्रिभुवनजनवंदनीय-पादारविंदः श्रीयुगादिदेवाधिदेवः, मम जनकस्तु षट्खंडमेदिनीनायकः श्रीभरतः, एवंविधे महति कुले समुत्पन्नेन मया त्रिजगज्जनसमक्षं श्रीयुगादिपरमेश्वरसमीपे वैराग्यरंगपूरेण श्रामण्यमंगीकृतं, तन्न युज्यते श्रामण्यमपहाय निकेतने गत्वा गृहवासं स्वीकर्त्तुं, श्रमणगुणांश्च मंदरगिरिगरिष्ठान्न शक्तोऽस्मि क्षणमपि वोढुम्, एवं स्थिते सत्येकतः कुलमलिनता एकतस्तु श्रामण्यपरिपालनं दुष्करतरम्, एवमितो व्याघ्र इतस्तटीति न्यायात् संकटे पतितः किं करोमी'ति चिंतयतस्तस्यैवंविधा मतिः समुत्पन्ना, यत् श्रमणास्त्रिदंडविरताः अहं तु तैः परा-

नि इति दंडत्रयी ममाभिज्ञानं भवतु तदभिव्यंजकम्। श्रमणास्तु केशलुंचनपंचकरणनियंत्रणादिभिर्द्रव्यभावमुंडा अहं तु क्षुरमुंडित-
मुंडः शिखाधरश्च भविष्यामि। तथा स्थूलसूक्ष्मजीववधतो निवृत्ताः श्रमणशिरोमणयः, अहं तु सूक्ष्मप्राणिवधनियमं कर्तुं न शक्यस्तेन
स्थूलप्राणिवधविरमणनियमो मे भूयात्। अकिंचना इमेऽनगाराः, मम तु समस्तु सुवर्णमुद्रादिकं किंचिदपि। साधवस्त्वनुपानच्चलनाः,
मम तु तया कर्तुं दुष्करत्वादुपानद्युगमस्तु। जितमोहाः श्रमणा मम तु मोहसमाच्छादितात्मनस्तद्भावद्योतकं छत्रकमस्तु मूर्धनि।
मुनिसत्तमास्तु केचन श्वेतवसनधारिणः केचन निरंबराः, मम तु कषायकलुषितमतेस्तज्ज्ञापकानि भवंतु वसनानि धातुरक्तानि। अष्टादश-
सहस्रशीलांगसुगंधाः सुसाधवः, अहं तु शीलेन दुर्गंधस्तद् वाससौगंध्यकृते चंदनादिकमादास्ये। तथा वर्जयंत्यबंधभीरवो मुनयः
पानीयारंभं प्रभूतजीवसमाकुलं मम तु परिमितं तोयमस्तु स्नाने पाने च। एवं स माध्वाचारपालनेऽशक्तो गृहिलिंगग्रहणे तु त्रपा-
परीतचित्तः स्वमतिविशेषशिल्पिकल्पितमेतल्लिंगमंगीचकार। तादृग्विधलिंगधारी च स विजहार श्रीऋषभदेवेन समं, यथा च वेसरो
न नरो न च तुरंगस्तथा सोऽपि न साधुर्न च गृही तदा समभूत्। तं च तथाविधवेषं स्वामिना समं विहारं कुर्वंतं वीक्ष्य भूयान्
जनस्तदंतिके सुष्ठुं पप्रच्छ कौतुकात्। तदा च मूलोत्तरगुणरूपं स साधुधर्मं व्याचष्टे स्म लोकानां धर्मप्रश्नपरायणानां पुरतः। यदा
च कोऽपि तं प्रति वक्ति 'चेदेवंविधो धर्मः साधुसंबंधी युष्माभिरत्रसीयते तर्हि स किं न पाल्यते?' स प्रतिवक्ति स्म तदा प्रमादा-
धीनत्याम्।' अथ च येषां तद्देशनया यतिधर्मस्वीकारविषये चित्तोत्साहः स्यात्तान् स प्रेषयति श्रीऋषभनाथसन्निधाने, निष्कारणोप-
कारकरः श्रीऋषभदेवोऽपि तान् योग्यानवधार्य तारयति संसारसागरादपारितरण्डेन।
अथ च मरीचेः स्वामिना समं विहारं कुर्वतोऽन्यदा कदाचिदामयः समुत्पन्नस्तदनुमहाव्यथाविधायी। तदा च मुनिभिस्तद्-

वैयावृत्यं न कृतं, यतः संयतैः संयतस्यैव वैयावृत्त्यं विधेयं नत्वसंयतस्य संयतासंयतस्य वा । तदा च तत्तनावकृतप्रतीकारः स महामयो वनवह्निरिवाधिकमधिकं ववृधे,तदा च स तेन महामयेन तनावत्यंतं पीडितश्चिंतयामास 'यन्ममास्मिन्नेव भवेऽशुभकर्मोदय-मगमद् यदेवं ग्लानतायामपि यतिभिरहमुपेक्षितः स्वकैरपि । अथवैतेषां संयतानां मद्वैयावृत्यविधानमनुचितं, यत एतेषां संयत-विषयमेव वैयावृत्त्यमुचितं तेन तैर्मम तत् कथं क्रियते। ममापि च तैर्वैयावृत्त्यकारापणमसांप्रतम्। तन्मया समानं कमपि मंदधर्माणं विलोकयामि, यथा स मम सहायतां व्रजेत्। अथ चारण्ये हरिणवत् स कालेन कथं कथमपि निरामयकायः समभूत् प्रतीकारं विनाऽपि । अथ च नीरुक्कायः स स्वामिना समं विजहार वसुंधरायाम् । अथचान्यदा दूरभव्यः कपिलनामा राजसुतः श्रीऋषभनाथ-पादपद्ममूले समाययौ सुकृतशुश्रूषया । तदा च श्रीऋषभदेवेन पंचमहाव्रतपरिपालनरूपोऽनगारमार्गः समुपदिष्टः सर्वजनसाधारणतया, स च न रुरुचे कपिलाय प्रमादमिथ्यादर्शनविह्वलाय रोगिणः पथ्यमिव । तदा च स धर्म्मांतरश्रवणेच्छयेतस्ततो विलोकयन् स्वा-मिविनेयविलक्षणवेषधरं मरीचिमीक्षांचकार । तदा च धर्म्मांतरश्रवणेच्छया स तदंतिके जगाम । तेनापि साधुधर्ममुपदिश्य प्रोक्तं 'यदि त्वं सम्यग्धर्माभिलाषी तदा गच्छ श्रीऋषभदेवपादपद्ममूले ।' तदा च श्रीयुगादिदेवाधिदेवेन तदग्रे तथैव यतिधर्मः प्ररूपितः। स च तस्य मिथ्यादर्शनप्रमादपंकनिमग्नस्य नारुचदरोचकस्येव मोदकः । तदनु पुनः स समाययौ मरीचिसमीपे कथयामास च 'यो युष्माभिः क्रियमाणोऽस्ति सोऽपि किं न धर्म्मः, धर्मविकलं च व्रतं किं संभवेत्' इति तेनोक्ते मरीचिश्चिंतयामास 'यदयं कश्चन मत्समान एव मिलितस्तद्दैवयोगात् समान एव संयोगो मे समभूदनेन सहायेन समं सहायं विना सीदमानस्य मम' इति विचिंत्य स कथयामास 'भो ! धर्मार्थिन् ! कपिल ! श्रीऋषभदेवसमीपे धर्मः प्रवर्त्तते, मत्समीपेऽपि च धर्म एव' अनेन च दुर्वचनेन देशोन-

माद्दशाग्यणसमरान्न दुष्कम स ममुपार्जयामास । अत एव सुकृतार्थिना सर्वोद्यमेनोत्सूत्रवर्जने यतितव्यम् । यत उत्सूत्रलवोऽपि दुरंत-भवभ्रमणनिक्लेशशल्यप्रदायी यदुक्तं 'उस्सुत्तभासगाणं बोहीनासो अणंत-संसारो । पाणच्चाए वि धीरा उस्सुत्तं नावभासंति ॥१॥' तदनु स दीर्घकालं भ्रान्त्वानुरूपं कपिल तत्प्रभृति प्रवृत्ते पृथिव्यां परिव्राजककुमतं मिथ्यादर्शनिसंमतम् ।

अथ च भगवान् वृषभगजवृषभतुरुचिरदनिशयशोभामंभासुरो नभोमार्गसंचारिधर्मचक्रदिव्यचामरयुगलपादपीठस्फाटिकमणिमय-मृगेंद्रासनमोघमङ्गनिर्मलातपवारणनददेवदुंदुभिविभ्राजमानः सुरसंचारिततपनीयपंकजनवके चलननलिनविन्यासं कुर्वन्नेकश्रमणसहस्रा-नुगम्यमानमार्गः सुरनिकरपरिवरित. प्रतिनगरं प्रतिग्रामं च भव्यजनतां प्रबोधयन्नन्यदा कदाचिदष्टयोजनोन्मानं शारदहिमकरकरनिकर-पटलमिव स्वेतवर्णं क्वचित् किंनरीभिः क्वचित् विद्याधरीभिः क्वचिच्च शबरीभिर्विधीयमानगानं नानानिर्झरनिकरचलचामरं शोभा-संभारसंभाव्यमाननगमुख्यभारं निशासमयप्रज्वलमानौषधीनिकरप्रकटितदीपशतसहस्रभ्रातिकरं श्रीअष्टापदनगवरमारुरोह मोहमहाचरटं-निर्दलनः । तदा च तत्र योजनमाने क्षेत्रे स्थितं तृणकाष्ठादि संजह्रुः पवनकुमाराः । तदनु नीरदकुमारा अभ्रदुर्दिनं विकुर्वयित्वा तां मेदिनीं गंधोदकसिक्तां व्यधुः । तदनु दिविजाः कनकमणीभिस्तत्र पीठबंधं चक्रुस्तदुपरि परितो व्यंतरसुराः पंचवर्णकुसुमवृष्टिं जानु-दघ्नीं विरचयामासुः प्रमोदमुदितमानसाः । तदनु दिक्चतुष्टये कल्पमालदलैस्ते तोरणरचनां मनोनयनानंदिनीं चक्रुस्तोरणस्तंभेषु च दधाबरान् तोरणोपरि च विशदातपत्राणि पताकाश्च पवनादोलिताः । तथा तोरणाधस्तनभूभागे मौक्तिकादिभिः स्वस्तिकादीन्यष्ट-मंगलान्यालिलिखुर्लेखाः । पीठोपरि च वैमानिकनाकिनो रत्नमयं प्राकारं मणिमयकपिशीर्षपरं प्रभाभिरामं वितेनिरे । मध्यमवप्रं तु कनकमयं ज्योतिष्काश्चक्रू रत्नमयकपिशीर्षं, बाह्यवप्रं तु रजतमयं कनकमयकपिशीर्षं व्यधुर्भवनस्वामिनः । प्राकारे प्राकारे च चत्वारि

गोपुराणि तैर्विधीयते स्म, गोपुरे गोपुरे च मणीमयतोरणानि, द्वारे द्वारे च व्यंतरसुरैर्न्यधीयंत धूपघट्यो मघमघायमानाः, तद्द्वितीय-प्राकारांतरे च सुरा वितेनिरे देवच्छंदमीशानदिग्विभागे भगवतो विश्रामकृते । समवसरणमध्यभागे च त्रिकोशोच्चं चैत्यपादपं निखिलसमवसरणच्छायाकरं चक्रुर्व्यंतरसुराः । चैत्यद्रुमस्याधस्तने भूभागे रत्नमयं पीठं विधाय तदुपरि रत्नमयं देवच्छंदकं कृत्वा तदंतः श्रुति(४)मितासु कुकुप्सु सपादपीठानि सिंहासनानि तैर्विधीयंते स्म, देवछंदकोपरि च श्वेतमातपत्रत्रितयं ते चक्रुरित्थं सुरविरचिते समवसरणे भगवान् वृषभध्वजः प्राचीद्वारेण प्रविश्य चैत्यतरुं प्रदक्षिणीकृत्य तीर्थप्रणामं च निर्मायोपाविशत् सिंहासने प्राचीमुखे । अन्यासु च तिसृषु दिक्षु सुरैर्जिनप्रतिरूपाणि क्रियंते स्म, तेषामपि श्रीजिनप्रभावात् समानरूपता संपद्यते स्म । एवं चतूरूपधारिणि श्रीऋषभदेवे सिंहासनोपविष्टे संयतसंयतीवैमानिकदेव्यः पूर्वद्वारा प्रविश्य तीर्थं तीर्थपतिं च नमस्कृत्य तिष्ठंति स्माऽग्नेयदिग्विभागे । भवनपतिज्योतिष्कव्यंतरदेव्यस्तु दक्षिणद्वारेण प्रविश्य तिष्ठंति स्म नैऋतद्विक्कोणे । भवनेशज्योतिर्व्यंतरामरास्तु पश्चिमद्वारा प्रविश्य तिष्ठंति स्म वायव्याम् विमानवासिसुरनरनार्यस्तु तिष्ठंति स्मेशानदिक्कोणे उत्तरद्वारा प्रविश्य। एवं द्वादशमितासु पर्षत्सु यथास्थानस्थितासु सौधर्म्मपतिर्यथास्थितगुणस्तुतिं निर्माय तथा तीर्थं प्रभुं च नमस्कृत्योपाविशत् प्रभोरग्रत ईशानाशाविभागे ।

अत्रांतरे च गिरिपालकाश्चक्रिणे प्रभोरागमनं निवेदयामासुः । तदा च चक्रवर्ती तेभ्यः सार्द्धां द्वादशकनककोटीर्विश्राणयामास । तदनु मनुजपतिः सिंहासनादुत्थाय सप्ताष्टपदान्यर्हदभिमुखं गत्वा विनयेनावनतिमकरोत् । तदनंतरं तु पुनः सिंहासनेऽधिरुह्य भगवद्-वंदनकृते नृपतीनाकारयामास वासव इव देवान् । ततश्च ते सज्जीकृतगजवाजिरथपत्तयो नृपतयः समेयुः श्रीभरतभूपति–सिंहद्वारे, तदा-गमनं च गजगर्जितहयहेषितसुभटसिंहनादादिजनितमहाध्वनिना निवेदितं सार्वभौमस्य द्वारपालात् पूर्वं, तदनु मनुजनाथः पवित्रपाथोभिः

नेच्छंति, तथापि प्राणत्राणकृतेऽशनाद्युपभोज्यते एभिस्तदेतान्निमंत्रयामि प्रासुकाशनादिना' इति विचिंत्य पंचशतशकटानि नानाशन-
खाद्यादिभृतानि विनीताया आनाव्य निमंत्रयामास निजानुजान्नानाविधाशनादिना । तदा च श्रीऋषभतीर्थपतिना प्रोक्तं 'भरत ! तद-
शनाद्याधाकर्म्माभ्याहृतदोषदुष्टं न कल्पते यतीनां चरितविघातकारि ।' एवं स्वामिना पुनर्निषिद्धे भरतो निमंत्रयामास तानकृताकारिता-
शनादिना द्विचत्वारिंशद्दोषविरहितेन । तदपि श्रीऋषभप्रभुः प्राह 'भरत ! राजपिंडोऽयं न कल्पते स्वीकृतचरितानाम् ।' एवं सर्व-
प्रकारैः स्वामिना निषिद्धो भरतश्चित्ते दूनश्चिंतयामास 'यत् सामान्यगृहस्थैर्दीयमानमशनादि यतिसत्तमैरादीयते, मम तु किमपि नोप-
युज्यते साधुवराणा'मेवं मनसि दूनं विलक्षवदनं भरतं वीक्ष्य तद्वैलक्ष्यापगमकृते शक्रः स्वामिनं पप्रच्छ पंचावग्रहस्वरूपम् । तदा च
भगवान् पुरंदरचक्रधरग्रामाधिपसागारिकसाधुसंबंधिनः पंचावग्रहानादिदेश । एषां मध्येऽग्रेतनेनाग्रेतनेन प्राच्यः प्राच्यः प्रबाध्यते । एवं
भगवता समादिष्टे दिवस्पतिः प्राह 'भगवन् ! मयाऽवग्रहः साधुवराणामनुज्ञातोऽस्ति, तेन तिष्ठन्तु यतयो मदवग्रहे सम्यक् संयममारा-
धयंतः' इति कथयित्वा भगवंतमभिवंद्य स्थिते सति पुरुहूते सार्वभौमश्चिंतयामास 'चेन्मुनिभिर्मदीयमन्नादि नादीयते तदाऽप्येतेषामव-
ग्रहानुज्ञां वितीर्य कृतार्थो भवामी'ति विचिंत्य स्वामिपुरतः साधूनां स्वावग्रहावस्थानानुज्ञां प्रदत्तवान् क्षितिवासवः । तदनु महीपतिर्दिव-
स्पतिं प्रश्नयामास 'इदमन्नादि केभ्यो विश्राणयामि !' तदा च स्वःपतिः प्रोचिवान् 'एतदशनादि गुणोत्तरेभ्यो वितर'इति शचीपतिना
निगदिते चक्री चिंतयामास 'निर्ग्रंथान् विना केऽन्ये मत्तो गुणोत्तरास्तेषां तु न कल्पते एतदाधाकर्मादिदोषदुष्टत्वात् । अथवा ज्ञातं ये
देशविरताः श्राद्धवरास्ते मत्तो गुणोत्तरास्तेषामेतदन्नादि मया देयम्' इति निश्चित्य पुनश्चक्रवर्ती पप्रच्छ स्वःपतिं 'भोः सुरपते ! भवतां
स्वर्गेऽपि किमीदृग्विधं रूपं रूपांतरं वा तत्र प्रवर्त्तते' इति क्षितिपतिना प्रोक्तो देवपतिराह 'राजन् ! यत्तत्र रूपं तन्मर्त्यैर्द्रष्टुमपि न

शब्दादिपंचविषय- मोक्षमार्गम्। तद्धिग् मां विषयामिषलुब्धं मोक्षमार्गप्रमादिन'मित्यादिसुकृतध्यानं तस्य क्षणमात्रं जायते पुनः
व्यासक्त्या तदपैति। यतोऽवश्यवेद्ये भोगफले कर्मण्यभुक्ते कथं चारित्रप्रतिपत्तिविषये चित्तोत्साहः स्यात्।

अथ च चक्री तेषां स्वाध्यायकृते वीतरागस्तुतियतिश्रावकसमाचारीमनोहरानार्यान् वेदाँश्चकार तारस्वरपठनोचितान्। अथ
चान्यदा सूदैश्चक्रवर्ती विज्ञप्त एवं 'यत् प्रभूतो जनो भोजनकृते समभ्येति, तेन श्राद्धाश्राद्धविभागः सम्यग् न ज्ञायते, तत् कस्य कस्य
भोजनं दीयते, कस्को वा निषिध्यते' इति सूपकारैरुक्ते चक्री सूपकारान् प्राह 'युष्माभिः परीक्षापूर्वकान् भोजनं देयं, यदि भवान्
श्रावकस्तर्हि कथय कियंति व्रतानि श्रमणोपासकानाम्? किं च व्रतमूलम्? इति प्रत्येकं प्रछ्यते ये कथयंत्येतत् सर्वविचारं ते भोजनीया
इतरे तु निषेधनीयाः' इति षट्खंडपतिना प्रोक्ते भोजनावसरे समायाता जनाः प्रत्येकं सूपकारैः प्रछ्यन्ते स्म तद्विचारं तेषु ये
श्रमणोपासकास्तैः कथ्यते स्मास्माकं स्थूलप्राणातिपातविरमणप्रभृतीनि पंचाणुव्रतानि, दिग्विरमणप्रमुखानि त्रीणि गुणव्रतानि,
सामायिकादिकानि चत्वारि शिक्षाव्रतानि, एतेषां च द्वादशव्रतानां मूलभूतं श्रीसम्यग्दर्शनं, तच्च श्रीवीतरागदेवसुसाधुगुरुश्रीजिनोदित-
सुकृतरूपतत्वत्रयश्रद्धानरूपम्। ये तु कपटश्राद्धास्तैस्त्वेतत् किमपि न ज्ञायते इति हेतोस्ते पृथक् कृत्वा निषेधिता ये तु परीक्षायां प्राप्तास्ते
तु सूपकृद्भिश्चक्रिणोऽग्रे नीताः। सार्वभौमेन तु तेषामुपलक्षणकृते तद्वक्षसि ज्ञानदर्शनचारित्रचिह्नं रेखात्रयं काकिणीरत्नेन निर्मितम्।
एवं षष्ठे षष्ठे मासे परीक्षां कृत्वा येऽभिनवश्राद्धा भवंति तेषामपि वक्षस्सु काकिणीरत्नेन रेखात्रयं क्रियते स्म चक्रिणा। एवं ते
श्रावकाश्चक्रिपुरतस्तारस्वरेण मा हन मा हनेति पठंतो जनैर्माहनाख्ययाऽऽख्यायंते स्म। ते च सौवापत्यानि साधुभ्यो विश्राणया-
मासुस्तेषां मध्यात् कैश्चिन्निजेछया श्रामण्यमंगीकृतं, कैश्चित्तु क्षुत्पिपासाशीतातपादिपरीषहभीरुभिः श्राद्धधर्मोऽङ्गीचक्रे। यैस्तु

श्राद्धधर्मोऽङ्गीकृतस्ते तु काकिणीरत्नकृतरेखात्रयाश्चभ्रिसूदसदने भुंजते स्म चक्रिणैते भोजनाच्छादनदानादिना सन्मानिता इति जनोऽपि तेभ्यो भोजनवसनादिकान् विश्राणयामास; यतो जनः पूजितपूजकप्रायो भवेत् । ते च माहनाः क्रमेण ब्राह्मणा इति ख्यातिं गतास्तैस्तु सन्ध्योभयेऽवश्यं प्रतिक्रमणं क्रियते स्म, यतः 'सपडिक्कमणो धम्मो पुरिमस्स य पच्छिमस्स य जिणस्स' इति वचनात् सप्रतिक्रमण एव धर्मः प्रथमान्तिमतीर्थपतितीर्थे ।

तथा तैर्ब्राह्मणैर्यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपं षट्कर्म नित्यं क्रियते स्म । तत्र यजनं श्रीजिनप्रतिमानां पूजनं तद्विधिवत्तैः क्रियते स्म१ याजनं त्वन्येषां श्रमणोपासकानां पूजाविधेः कारापणम्२ । अध्ययनं तु वेदानामर्हत्स्तुतियतिश्राद्धसामाचारीप्रादुर्भावकामैस्तैर्नित्यं विधीयते स्म३ । अध्यापनं तु स्वपुत्राणां वेदादीनामपरश्रमणोपासकापत्यानां तु सामायिकादिसूत्राणाम्४ । दानं तु स्वसदनसमागतयतिपुंगवानां शुद्धान्नपानादीनाम्५ । प्रतिग्रहस्तु श्रावकजनवितीर्यमाणधनवसनादीनां स्वपंचमाणुव्रतप्रमाणानतिक्रमेण । यावच्चक्री समभूत्तावत्ते काकिणीरत्नकृतरेखात्रयचिह्नाः समभूवन् । भरतसुते त्वादित्ययशसि क्षितिपतितां प्राप्ते काकिणीरत्नाभावतस्ते कनकयज्ञोपवीतधारिणोऽभूवन् । महायशःप्रमुखैर्नृपपुंगवैस्तु तेषां तानि रजतमयानि निर्मितानि । अन्यैस्तु कैश्चित् पट्टसूत्रमयानि कैश्चित्तु सूत्रमयानि चक्रिरे । भरतपट्टे त्वादित्ययशाः समभूत्तत्पट्टे तु महायशास्तत्पट्टेऽतिबलस्तत्पट्टे बलभीर्यस्तत्पट्टे कार्त्तवीर्यस्तत्पट्टे जलवीर्यस्तत्पट्टे तु दंडवीर्य इत्येतानष्टनृपतीन् यावत्तेषां स्वसूदशालायां भोजनदानादिको विधिः प्रवृत्तः एभिश्चाष्टभिर्नृपतिभिः स्वप्रत्युपनीतः श्रीऋषभदेवाधिदेवमुकुटः शीर्षे वोढुं शक्तो नेतरैर्नृपवरैर्महाप्रमाणत्वात् । अष्टजिनपतीन् यावदेते सर्वेऽपि ब्राह्मणाः श्रीसम्यक्त्वमूलश्राद्धधर्मप्रतिपालकाः समभूवन्, नवमदशमजिनान्तरे तु साधुव्यवच्छेदः समभूत्तदा च तैर्निरंकुशैर्लो-

भाविभूतैर्मिथ्यादर्शनमुपगतैर्जनाग्रे नानाविधानि दानानि प्ररूपितानि । ये च वेदाः श्रीभरतेनार्हत्स्तुतियतिश्राद्धसामाचारीप्ररूपकाः कृतास्ते सुलसायाज्ञवल्क्यादिभिरनार्षा कृतास्तेषां चार्षीकृतवेदानां पाठकास्ते ब्राह्मणा अश्वमेधादियज्ञकर्मभिः पंचाक्षप्राणिगणविशसनपरायणा मिथ्यात्वमोहिताः स्वयं भवाब्धौ निमज्जंतः परानपि निमज्जयंति स्म । एवं यथा नवमदशमजिनांतरे साधुव्यवच्छेदः समभूत्तथा दशमैकादशैकादशद्वादश–द्वादशत्रयोदश–त्रयोदशचतुर्दश–चतुर्दशपंचदश–पंचदशषोडशजिनांतरेष्वपि । एतेषु सप्तस्वंतरेषु यथाक्रमं पल्योपमस्य तुरीयो भागस्तुरीयो भागस्त्रयस्तुर्यभागास्तुर्यो भागस्त्रयस्तुर्यभागास्तुर्यभागास्तुर्यभागः साधुव्यवच्छेदः समभवत् । यदा च दशमस्तीर्थपतिः प्राप्तपंचमाववोधं प्रचक्रमे देशनां कर्तुं तदा तेन देशनां सृजता प्रोक्तं 'यदेते नाम ब्राह्मणा असंयता अविरता मिथ्यादर्शिनस्तदेतेभ्यो दानं न मोक्षनिदानं, किंतु प्रत्युत संसारपरिवर्द्धनम्' । एवं च तीर्थपतिना तत्स्वरूपे जनपुरतः सम्यक् प्रकाशिते ये जनाः सम्यग्दर्शनिनः समभूवन् ते तेषु ब्राह्मणेष्वनादराः समभवन्नतः–कारणात्ते ब्राह्मणाः साधुषु प्रद्वेषिणः संजाता मिथ्यात्विनः ।

अथ च भरतस्य श्रमणोपासकवितरणनिरतस्य पंचप्रकारवैषयिकसुखसागरनिमग्नस्य समतिक्रांतः कियानपि समयः अस्मिन्नवसरे च भगवान् वृषभस्वामी नानादेशेषु विहृत्य भव्यजीवान् प्रतिबोधयन् समवसृतः श्रीअष्टापदपर्वते । तदा च चक्रे देवैः समवसरणं, तस्मिन् प्राविशत् स्वामी पूर्वद्वारेण सपरिवारः । अस्मिन्नवसरे च गिरिपालकैरावेदितं भगवदागमनं भरतपतेः । तेभ्यश्च चक्री विश्राणयामास प्राग्वत् पारितोषिकं वितरणम् । तदनु मनुजकोटीपरिवृतश्चतुरंगचमूपरिवेष्टितश्चचालाचलामपि प्रकंपयन् श्रीयुगादिदेवाधिदेववंदनकृते चक्रवर्ती । तं नगवरं च समारुह्य समवसरणस्थितं भगवंतं त्रिःप्रदक्षिणीकृत्य नानाविधस्तोत्रैः स्तुत्वाऽभिवंद्य च शक्रपृष्ठे

निषमाद षड्खंडमेदिनीनायकः ।

तदा च विरचिता भगवता भवनिर्वेदनिदानं देशना । तां च समाकर्ण्य यथा चित्तोल्लासं भव्यप्राणिभिः सम्यग्दर्शनदेशविरति–सर्वविरतयः स्वीकृतास्तदा च चक्रवर्ती भगवंतमभिवंद्य प्रश्नयामास 'भगवन् यथाऽत्र भरतक्षेत्रे यूयं तीर्थंकरास्तथाऽन्ये कियंतस्तीर्थंकरो भविष्यंत्येतस्यामवसर्पिण्याम्, यथा चाहं चक्रवर्ती तथाऽन्ये कति भविष्यंति चक्रिणः, तेषां चान्वयनगरमातापितृनामवर्णतनुमानायुर्दीक्षानिर्वाणांतरादिस्वरूपं प्ररूपय मच्चित्तानंदकृते ।' एवं च चक्रधरानुयुक्तो भगवान् व्याजहार 'अस्मिन् भरतवर्षे त्रयोविंशतिस्तीर्थंकरा एकादश च चक्रिणो भविष्यंत्येतस्यामवसर्पिण्याम् । तेषु च विंश–द्वाविंशौ तीर्थेशौ गौतमान्वयसमुद्भवौ अपरे च काश्यपवंशजाः । सर्वेऽपि मुक्तिगामिनः इक्ष्वाकुवंशजा एकविंशतिस्तीर्थंकराः,मुनिसुव्रतनेमिस्वामिनो तु हरिवंश–समुद्भवौ । एतेषु द्वितीयस्तीर्थनायकोऽयोध्यायां भविष्यत्य' जितनामा । तस्य च पितरौ जितशत्रुविजयाभिधानौ, स च कनककांतिस्तस्य च द्वासप्ततिःपूर्वलक्षाण्यायुः, तनुमानं च सार्द्धानि चतुःशतानि धनुषां पूर्वांगन्यूनं पूर्वलक्षं च श्रामण्यपर्यायस्तत्सिद्धिगमनं तु मन्मुक्तेः पंचाशता सागरोपमकोटिलक्षैः । तृतीयस्तु शंभवाभिधो जिनस्तपनीयतनुवर्णः, स च श्रावस्त्यां जितारिसेनाम्रसुः षष्टिपूर्वलक्षायुश्चतुर्द्धनुःशतोत्सेधश्चतुष्पूर्वांगन्यूनपूर्वलक्षव्रतपर्यायस्तस्य चाजितनिर्वाणात्त्रिंशत्सागरसमकोटिलक्षैः सिद्धिगतिः । तुरीयस्त्वभिनंदनजिनपतिरर्जुनतनुद्युतिः श्रीसंवरनरवरसिद्धार्थादेवीतनूरुहः पंचाशत्पूर्वलक्षप्रमाणायुः, सार्द्धधनुःशतत्रयोत्सेधो वसु(८)मितपूर्वांगोनपूर्वलक्षपर्यायस्तन्निर्वाणं तु श्रीशंभवनिर्वाणाद्दशसागरसमकोटिलक्षैः । पंचमस्तु श्रीसुमतिजिनपतिः कनककांति श्रीमेघनृपमंगलांगोद्भवः स्वर्णवर्णतनुश्चत्वारिंशत्पूर्वलक्षमितायुर्द्वादशपूर्वांगन्यूनपूर्वलक्षपर्यायो धनुःशतत्रयतनुमानः सागरोपमकोटिलक्षैर्नवभिर्निर्वाणं श्रीअभिनंदननिर्वाणात् श्रीसुमतेः,

एतौ द्वावपि तीर्थपती विनीतापुर्यां भविष्यतः। षष्ठस्तु कोशाम्ब्यां पद्मप्रभः श्रीपद्मप्रभस्वामी श्रीधरधरिणीधवसुसीमापट्टदेवीसमुद्भवः सार्द्ध-धनुशतद्वयोच्चकायस्त्रिंशत्पूर्वलक्षायुः षोडशपूर्वांगोनपूर्वलक्षश्रमण्यपर्यायस्तत्पंचमगतिस्तु श्रीसुमतिमुक्तेर्नवत्यऽर्णवसमकोटिसहस्रैः । सप्तमस्तु सुपार्श्वनामा जिनस्वामी चामीकरकांतिः, स च वाणारसीपुर्यां प्रतिष्ठनृपपृथिवीदेवीसंभवो विंशतिपूर्वलक्षप्रमितायुर्द्विधनुःशतत-नुमानो विंशतिपूर्वांगविहीनपूर्वलक्षचरितपर्यायस्तत्सिद्धिस्तु श्रीपद्मप्रभसिद्धेर्नवार्णवसमानकोटिसहस्रैः। अष्टमस्तु सोमसमद्युतिश्चंद्रप्रभ-भगवान् महसेनलक्ष्मणास्तनुजश्चंद्राननपत्तने सार्द्धधनुःशतोच्चतनुर्दशपूर्वलक्षप्रमाणायुश्चतुर्विंशतिपूर्वांगोनपूर्वलक्षश्रमणत्वपर्यायस्तन्मो-क्षगमनं तु श्रीसुपार्श्वमोक्षान्नवसागरसमकोटिशतैः । नवमस्तु पुष्पदंतापरपर्यायः श्रीसुविधिबोधिदः काकंदीनगर्यां सुग्रीवनरवररामा शिरोरत्नतनयः पूर्वलक्षद्वयायुरेकधनुःशतोच्चतनुः कुंदेंदुसमद्युतिरष्टाविंशतिपूर्वांगोनपूर्वलक्षचरितपर्यायस्तदपवर्गस्तु श्रीचंद्रप्रभापव-र्गान्नवत्यर्णवकोटिभिः । दशमस्तु श्रीशीतलस्त्रिकालविद् भद्दिलपुरे दृढरथनरनाथनंदादेवीनंदनः कनकवर्णवपुःपूर्वलक्षप्रमिता-युर्नवतिधनुस्तनूत्सेधः पंचविंशतिपूर्वसहस्रश्रामण्यपर्यायस्तन्महानंदस्तु श्रीसुविधिसिद्धेर्नवाऽर्णवमवर्णकोटिभिः । एकादशस्तु श्रीश्रे-यांसस्तीर्थपतिः सिंहपुरे विष्णुनरवरविष्णुदेवीजन्मा कांचनकायद्युतिरशीतिसंवत्सरलक्षसर्वायुरेकविंशतिवर्षलक्षव्रत-पर्यायतन्निर्वृतिस्तु श्रीशीतलजिनपतिनिर्वाणात् षड्विंशत्यासंवत्सहस्रैः षट्षष्ट्या वर्षलक्षैस्तथा सागरसमशतोनार्णवसवर्णकोट्या ।द्वादशस्तु चंपापुर्यां वसुपुज्यजयांगजन्मा श्रीवासुपूज्यजिनेशो द्वासप्ततिशरल्लक्षायुः सप्ततिधनुस्तनूत्सेधश्चतुष्पंचाशत्संवत्सरलक्षश्रमणतापर्यायस्तदपुन र्भवस्तु श्रीश्रेयांसनिश्रेयसाच्चतुष्पंचाशदर्णवोपमैः । त्रयोदशस्तु कांपील्यपुरे कृतवर्मनृपश्यामावामातनूजन्मा श्रीमान् विमल केवली षष्टिवर्षलक्षमितायुः षष्टिधनुरुच्चतनुः सुवर्णवर्णदेहः पंचदशसंवत्सरलक्षचारित्रपर्यायस्तन्निर्वृत्तेर्गमनं तु श्रीवासुपूज्य-

दशधनुरुन्नतः सप्तसंवत्शतव्रतपर्यायस्तन्निश्रेयसप्राप्तिः श्रीनमिनिश्रेयसात् पंचभिर्वर्षलक्षैः । त्रयोविंशस्तु वाणारस्यामश्वसेनवामागजन्मा
श्रीपार्श्वस्वामी नीलतनुच्छविर्नवकरशरीरमानः सप्ततिवर्षव्रतपर्यायः शतहायनायुस्तन्मुक्तिस्तु नेमिमुक्तेः सार्द्धसप्तशताधिकत्र्यशीतिवर्ष-
सहस्रैः । चतुर्विंशस्तु क्षत्रियकुंडग्रामे सिद्धार्थत्रिशलासूनुरर्जुनतनुवर्णो द्विसप्ततिसंवदायुः सप्तहस्तोच्चवपुर्द्विचत्वारिंशद्वत्सरव्रतपर्याय-
स्तन्निर्वाणं तु श्रीपार्श्वनिर्वृतेः सार्द्धवर्षशतद्वैतेन ।

अथ चक्रिस्वरूपं भगवानाचख्यौ तथाहि सर्वेऽपि सार्वभौमाः कलधौतकांतयः काश्यपगोत्रास्तेषु द्वितीयश्चक्रवर्ती सगरनामाऽयो-
ध्यानगर्यां सुमित्रयशोमतीतनयः सार्द्धचतुःशतधनुरुच्चतनुर्द्वासप्ततिपूर्वलक्षायुः श्रीअजिततीर्थपतिवारके भविष्यति । तृतीयस्तु श्राव-
स्त्यां भद्रासमुद्रविजयतनयो मघवाख्यः सार्वभौमः पंचवत्सरलक्षायुः सार्द्धद्विचत्वारिंशच्चापोच्चकायः । तुरीयस्तु हस्तिनापुरेऽश्वसेनसह-
देवीनंदनः सनत्कुमारचक्रधरः सार्द्धैकचत्वारिंशद्धनुरुच्चदेहस्त्रिलक्षवर्षायुरेतौ द्वावपि चक्रधरौ श्रीधर्मशांत्योरंतरे भविष्यतः । पंचमष-
ष्ठसप्तमसार्वभौमास्तु श्रीशांतिकुंथनाथारतीर्थंकराः तत्स्वरूपं तु प्रागुक्तम् । अष्टमस्तु हस्तिनापुरे ताराकृतवीर्यसूनुः सुभूमसार्वभौमः षष्टि-
वर्षसहस्रायुरष्टाविंशतिधनुरुन्नततनुः श्रीअरमल्लितीर्थनाथांतरे भविता । नवमस्तु वाराणस्यां पद्मोत्तरनृपज्वालादेवीनंदनः पद्मनामा चक्री
त्रिंशद्वत्सरसहस्रायुर्विंशतिधनुरुन्नतः । दशमस्तु काम्पील्यपुरे महाहरिमेरानन्दनो हरिषेणाभिधश्चक्री दशसहस्रसंवत्सरायुः पञ्चदश-
धनुरुन्नतः श्रीसुव्रतनमिनाथान्तरे, तथैवैकादशो राजगृह्यां विजयनृपवप्रात्मजो जयाख्यः संवत्सहस्रत्रयायुर्द्वादशधनुरुच्चः । द्वादशः कांपी-
ल्यपुरे चुलनीब्रह्मसूनुर्ब्रह्मदत्तश्चक्रवर्ती सप्तशतवत्सरायुः सप्तधनुरुन्नतिभाक् श्रीनेमिपार्श्वांतरे भविता । एतेषु सगराद्याः सप्त मुक्तिगामिनः
मघवासनत्कुमारचक्रिणौ तु सनत्कुमारसुरलोकयायिनौ सुभूमब्रह्मदत्तसार्वभौमौ तु महारंभमहापरिग्रहादिपातकैः सप्तमनिरययायिनौ

भारण्यतः ।

अथ प्रश्नविधानं विनाऽपि भगवानाचख्यौ वासुदेवादिस्वरूपम् । तत्र सर्वेऽपि वासुदेवाः वज्रऋषभनाराचसंहननाः समचतुरस्रसंस्थानाः श्यामलकांतयः स्वस्तिकाङ्कभोगास्ते ष्वष्टमवासुदेववर्जा गौतमगोत्रा अष्टमस्तु काश्यपगोत्री । एतेषां च वासुदेवानां सपत्नीसमृद्धया बांधवा नव बलदेवाः सोमममानतनुधनुषः । तत्र त्रिपृष्ठनामा प्रथमो वासुदेवः पोतनपुरे प्रजापतिमृगावतीतनयोऽशीतिधनुरुन्नतश्चतुरशीतिवत्सरलक्षायुः श्रीश्रेयांसजिनपतिवारके भविता । द्वितीयस्तु द्वारवत्यां द्विपृष्ठाभिधानः केशवो द्विसप्ततिवर्षलक्षायुः सप्ततिधनुरुन्नतः षष्ठनिरययायी श्रीवासुपूज्यजिनवारके भावी । तृतीयस्तु तस्यामेव पुर्यां स्वयंभूः केशवः षष्टिवर्षलक्षायुः षष्टिचापोच्छ्रितः श्रीविमलनाथतीर्थपतिवारके भावी, स च रुद्रराजपृथिवीदेवीतनूद्भवः षष्ठपृथिव्यां गंता । तुरीयस्तु तस्यामेव पुर्यां सोमसीतातनूजन्मा पुरुषोत्तमकेशवः पंचाशच्चापोन्नततनुरनंतजिनपतिवारके त्रिंशद्वत्सरलक्षायुः समाप्ते स्वायुषि षष्ठनिरये यास्यति । पंचमस्त्वश्वपुरे शिवनृपाङ्गजातः पुरुषसिंहाख्यः केशवः पंचचत्वारिंशद्धनुर्दंडप्रमाणवपुः श्रीधर्मनाथे केवललक्ष्मीसनाथे विजयमाने दशवर्षलक्षायुर्भविष्यति सोऽपि षष्ठोर्व्यां गमिष्यति । षष्ठस्तु चक्रपुर्यां महाशिरःशिविपशिरःशेखरलक्ष्मीवतीदयितादेहोद्भवः पुरुषपुंडरीकवासुदेवः श्रीअरमल्लिजिनांतरे पंचषष्टिसहस्रसंवत्सरायुरेकोनत्रिंशच्चापोच्चदेहयष्टिः षष्ठनिरययायी भविष्यति । सप्तमस्तु वाणारस्यां दत्तनामा वासुदेवः शेषवत्यग्निसिंहसूनुः षड्विंशतिचापोच्चकायः षट्पंचाशत्सहस्रसंवत्सरायुः पंचमनिरययायी श्रीअरमल्लिजिनांतरे भविता । अष्टमस्तु राजगृहनगरे नारायणनामा वासुदेवः कैकेयीदशरथनंदनः षोडशधनुरुन्नततनुर्द्वादशशतसहस्रायुः श्रीमुनिसुव्रतनमिनाथांतरे भविष्यति तुरीयनिरयगामी । नवमस्तु कृष्णनामा वासुदेवो देवकीवसुदेवसुतः सहस्रवर्षायुर्मथुरापुर्यां दशचापोन्नततनुस्तृतीयनिरय-

गामी भविता श्रीनेमिजिनवारके ।

अथ बलदेवस्वरूपं भगवानाह तथाहि प्रथमो बलभद्रो भद्रासूनुरचलनामा पंचाशीतिवर्षलक्षायुर्भविष्यति । द्वितीयस्तु विजयनामा बलदेवः सुभद्रासुतः पंचसप्ततिवर्षलक्षायुर्भविता । तृतीयस्तु सुप्रभाभिधानवनितासमुद्भवो भद्रनामा बलभद्रः पंचषष्टिव- त्सरलक्षायुर्भावी । चतुर्थस्तु सुदर्शनाभिधानवनिताभूस्सुप्रभनामा बलदेवपंचपंचाशल्लक्षशरदायुर्भविता । पंचमबलदेवस्तु सुदर्शन- नामा विजयानंदनः सप्तदशवर्षलक्षायुर्भविष्यति । षष्ठो बलभद्रस्तु वैजयंतीसुतः पंचाशीतिशरत्सहस्रायुर्भावी । सप्तमबलदेवः सुनंदन- नामा पंचषष्टिवत्सरसहस्रायुर्जयंतीसुतो भविता । अष्टमबलदेवस्तु पद्मनामाऽपराजितासुतो दशशरत्सहस्रायुर्भावी । नवमबलदेवस्तु रामनामा रोहिणीतनूजन्मा द्वादशशरच्छतायुर्भावी । एते सर्वेऽपि पूर्वभवेऽकृतनिदानाः परासुभूते वासुदेवे चरितमंगीकरिष्यंति । तेष्वष्टौ शिवगामिनो, रामस्तु ब्रह्मदेवलोकं गत्वोत्सर्पिण्यां कृष्णतीर्थपतितीर्थे मुक्तिं यास्यति । सर्वेऽपि बलदेवाश्चारित्रमादास्यंति । एतेषां च नगरगोत्रपितृनामतनुमानस्वरूपं वासुदेवतत्स्वरूपवद् वाच्यम् ।

नव च प्रतिवासुदेवा अश्वग्रीव (१) तारक (२) मेरक (३) मधु (४) निशुंभ (५) बलि (६) प्रल्हाद (७) लंकापति (८) मगधेश्वर (९) नामानो भविष्यंति । एते च सर्वेऽपि प्रतिवासुदेवास्त्रिखंडभोक्तारो वासुदेवहननाय यानि स्वीयचक्ररत्नानि मोक्ष्यंति तानि वासुदेवान् प्रणम्य तत्करेषूपविशिष्यंति । वासुदेवास्तु तैरेव चक्रैस्तान् हनिष्यंति हताश्च ते सर्वेऽपि निरयं यास्यंति ।

इदं च सर्वं शलाकानरस्वरूपं भगवदुक्तं निशम्य समानंदितमनाः सार्वभौमः प्रभूतभव्यप्राणिगणसभाकीर्णां तां सभां समा- लोक्य प्रश्नयामास वासवनतं श्रीभगवंतं 'भगवन् ! सुरासुरनरसमाकीर्णायामेतस्यां प्रौढसदसि स कश्चिद् भव्यप्राणी प्रवर्त्तते

य एतस्यामवसर्पिण्या भरतवर्षे तीर्थपतिर्भविता ?' इति सार्वभौमेन पृष्टो भगवान् व्याजहार 'भवदंगजः प्रथम-परिव्राजकोऽयं मरी-
चिनामा सम्यग्दर्शन समन्वितः स्वाध्यायध्यानं विधत्ते एकाते, स संप्रति कर्मप्रेरणया प्रमादपंककलुषितात्मा वर्त्तते स एव क्रमात्
शुक्लध्यानदग्धकर्मेंधन' मेतस्यत्येतस्यामेवावसर्पिण्याम् । अथनस्मिन्नेव भरतवर्षे पोतनपुरे प्रजापतिमृगावतीसुनतीसंभूतः प्रथमो
वासुदेवो भविष्यति । तत्र च चतुरशीतिवर्षलक्षाणि सर्वायुः परिपाल्य सप्तमनिरयेऽप्रतिष्ठाने निरयावासे नैरयिको भविष्यति । तस्मादु-
द्वृत्य पचाननो भूत्वा कतिचिद् भवग्रहणान्यादायापरविदेहेषु मूकायां राजधान्या धनंजयधरिणीधवधारिणीदेवीनंदनः प्रियमित्रनामा
चक्रवर्त्ती भविष्यति । तत्र च चतुरशीतिपूर्वलक्षाणि सर्वायुरेतस्य भावि । तत्र च पोट्टिलाचार्यसमीपे संवत्सरकोटीं श्रामण्यमनुपाल्य
महाशुक्रस्वर्लोके सर्वार्थसिद्धविमाने देवो भविष्यति । ततश्च्युत्वा च्छत्रानगर्यां जितशत्रुनृपभद्रादेवीनन्दनो नंदननामा भविता । तत्र
च चतुर्विंशतिवर्षलक्षाणि राज्य पालयित्वा पोट्टिलाचार्यांतिके चारित्रमादास्यति । तत्र च मासक्षपणे मासक्षपणे पूर्ण एव सर्वदा
पारणकं करिष्यति । तत्र च वर्षलक्षं श्रामण्यमनुपाल्य सर्वायुः पंचविंशतिवर्षलक्षाणि परिपाल्यार्हत्सिद्धप्रभृतीनि स्थानकानि विधिन-
दाराध्य च निकाचिततीर्थकृन्नामकर्मा दशमकल्पे पुष्पोत्तरावतंसकविमाने सुरतया समुत्पत्स्यते । ततश्च्युतश्चतुर्विंशस्तीर्थकृद् भविष्यति
वर्द्धमाननामात्रैव भरते ।' इति भगवदुक्तं निशम्यानुज्ञाऽऽदानपूर्वं स्वामिनमभिवंद्य भक्तिप्रगुणचित्तो मरीचिमभिवंदितुमगमद्
भरतो भरतपतिः, तदंतिके च गत्वा तं प्रति प्रोचिवांश्चक्री यत् त्वमत्रैव भरतवर्षे त्रिपृष्ठनामा प्रथमवासुदेवो भविष्यसि । यच्च मूकापुर्यां
विदेहेषु सार्वभौमो भविष्यसि । न तद् वंदे, न च पारिव्राज्यं वंदे, न वेदं जन्म, किंतु यत् त्वं चतुर्विंशस्तीर्थेशो भविता तत्त्रिजगज्जन-
वंदनीयं तीर्थपतित्वं भावि चित्ते विधाय भवंतमभिवंदे ।' इत्युदीर्य भक्तिभरनुन्नो भरतः शिरसिरचिताञ्जलिस्त्रिःप्रदक्षिणीकृत्य तं च

वंदे सानंदेन मनसा । तदनु पुनर्जगन्नाथमभिवंद्य ययावयोध्यायां सपरीवारः पट्खंडनरेश्वरः ।

अथ च मरीचिस्तद्वचनमाकर्ण्य संजातातिप्रमोदस्त्रिः करास्फोटपुरस्सरमेवमाख्यातुमुपचक्रमे । 'यदि वासुदेवानामादिमोऽ-
हं भविष्यामि, विदेहेषु च चक्रभृन्नरमश्च तीर्थकृत्तदेतावता कृतं मम । अपरं च मम पितामहस्तीर्थकृतामादिमो मम पिता च चक्रिणामहं
च वासुदेवानां तदुत्तमोत्तमं ममैव कुलम्, एकतः सकलं त्रैलोक्यम् एकतस्त्वस्मत्कुलं यथैकतस्सर्वेऽपि पार्थिवा एकतस्तु चक्रवर्त्ती ।'
इत्यादि वचनप्रकारैः स्वकुलोत्कर्षेण कुलमदं कुर्वाणेन तेन नीचगोत्रकर्मसमर्जितम् ।

अथ च पुंडरीकप्रमुखैर्गणभृत्प्रवरैरनगारवरैश्च परिकरितो भगवान् वृषभध्वजः कोसलामगधकाशीजनपददशार्णदेशचेदि–
मालवगूर्जरसुराष्ट्राराष्ट्राणि स्वपदन्यासैः पावयन् मूले पंचाशद्योजनविस्तारं शिखरे तु दशयोजनविस्तृतमष्टयोजनोच्चं श्रीशत्रुंजयगिरि–
वरं जगामानंतस्थामा। तत्र च सुरविरचिते समवसरणे सर्वजगज्जनीनां देशनां चकार मारविकारनिवारकः श्रीयुगादितीर्थनायकः पौरुष्यां
चादिमायां संपूर्णायां देशनां विमुच्य मध्यप्राकारमध्यगतदेवच्छंदे ययौ श्रीयुगादिजिनः । अथ च द्वितीयपौरुष्यां श्रीजिनपतिपादपीठे
निविश्य विश्वहितां व्यधाद्धर्मदेशनां पुंडरीकः प्रथमगणधरः । सोऽपि तस्यां समाप्तायां व्यरमद्धर्म्मदेशनायाः । एवं पारमार्थिकमार्ग-
प्रकाशकनिरयदेशदेशनाकादंबिन्या भव्यजनमनःक्षेत्रेषु श्रेयःशस्यबीजं वृद्धिं नयन् भगवान् कियंतमपि समयं तत्र तस्थौ ।

अथ चान्यदाऽन्यत्र विहर्त्तुमनाः श्रीविश्वनायकः श्रीपुंडरीकगणधरं प्रत्येवमादिदेश, वयमन्यत्र विहारं विधास्यामो भवता तु
प्रभूतमुनिपरिवृतेनात्रैव स्थेयं, यतः क्षेत्र-प्रभावादिहेतुभिर्भवतोऽत्रस्थितस्य, सपरिकरस्यापि समुत्पत्स्यते पंचमावबोधः । अत्रैव
चाऽचिरात् मोक्षो भविष्यति भवतः सपरिवारस्य' इति भगवदुक्तं वाचं तथेति प्रतिपद्य तत्र तस्थौ पृथमगणभृत् बहुमुनिपरिवृतः ।

तत्र च तं विमुच्य श्रमणश्रमणीगणपरिवरितः श्रीमान् वृषभजिनर्षभो विजहार वसुंधरायाम् । पुंडरीकगणधरस्तु श्रीशत्रुंजयगिरिवरे स्थितः पीयूषप्रतिमवचनविलासैः श्रवणसुखं समुत्पादयन् साधून् प्रत्येवमादिदेश 'यदयं गिरिराजः सिद्धक्षेत्रं निगद्यते, यतोऽत्र क्षेत्रमाहात्म्यतश्चेतःशुद्धिर्भेदाभ्यासिद्धिरनाना तथा च कैवल्यावाप्तिः । अपरं च यथा जात्यतुरंगमाधिरूढो वीरवरस्तत्तादृशनिशित-खड्गधोरण्या सर्वैरपि विजयश्रियं वृणुते । तथा श्रीशत्रुंजयनगवराधिरूढो भव्यप्राणी संलेखनतया शिवश्रीं वृणुते; सा च द्विविधा द्रव्यतो भावतश्च । तत्र सर्वोन्मादादिविकाराणां कारणभूतानां सप्तधातूनां शोषणं द्रव्यतः संलेखना; भावतस्तु रागद्वेषकषायाद्यांतररिपु-वर्गनिराकरणरूपा' इत्युदीर्य श्रीपुंडरीकगणभृत् समं श्रमणशिरोमणिभिः सर्वानप्यतीचारानालोचयामास । तदनु सर्वेषां साधुवराणां पुनः पंचमहाव्रतारोपणं चकार श्रीपुंडरीकगणधरो विधिवत् । तदनु सर्वजीवक्षामणां निर्माय समग्रसाधुवरैः समं निराकार-चतुर्विधा-हारपरिहारं चकाराऽनगारशिरोमणिः श्रीपुंडरीकगणिः ।

अथ च क्षपकश्रेणिमारूढस्य तस्य गणधरशिरोमणेः शुक्लध्यानप्रबलपवमानांदोलितानि घातिकर्माणि विशरारुभावमगमन् जीर्णशीर्णानीवमहातरोः । मासप्रांते च चैत्रपूर्णिमादिने प्रथमं श्रीपुंडरीकगणधरस्य समुत्पेदे पंचमावबोधः । तदनु सर्वेषां साधुवराणां शुक्लध्यानलीनमनोवृत्तीनां तदनंतरं तुरीयशुक्लध्यानप्रभेददग्धनिखिलकर्मेंधनश्चतुर्दशगुणस्थानारूढः श्रीपुंडरीकगणभृत् पंचमाव-बोधिभिः समग्रमुनिभिः समं ययौ शिवमचलमरुजमनंतमव्ययमव्याबाधमपुनरावृत्तिसिद्धिगतिनामधेयं स्थानवरं सिद्धानंत-चतुष्कः । तदा च देवैर्मरुदेव्या इव तेषां श्रीपुंडरीकगणभृत्प्रभृतिश्रेष्ठानां निर्वाणमहामहश्चक्रे । यथैतस्यामवसर्पिण्यां श्रीमान्देवः प्रथमदेवाधिदेवतया श्रीशत्रुंजयशिलोच्चयः प्रथमं तीर्थमभवदेतस्यां तस्याम् । यतो यस्मिन् महीप्रदेशे यस्यापि महामुनेर्निर्वृतिगमन

यत्रैतावतां यतिपुंगवानामपुनर्भवपुरप्राप्तिः समभूत्तस्य किं वाच्यं महातीर्थत्वे ।
संभवेत्तदपि तीर्थतया गीयते चेत् शास्त्रे तर्हि यत्रैतावतां यतिपुंगवानामपुनर्भवपुरप्राप्तिः समभूत्तस्य किं वाच्यं महातीर्थत्वे । श्रीपुंडरीकगणभृत्प्रतिमान्वितश्रीयुगादिदेवप्रतिमापरिमंडितं नगोत्तुंग—श्रीजैन—

अथ च तस्मिन् महातीर्थे श्रीभरतचक्रवर्त्ती श्रीपुंडरीकगणभृत्प्रतिमान्वितश्रीयुगादिदेवप्रतिमापरिमंडितं नगोत्तुंग—श्रीजैन—विहारं श्रीशत्रुंजयमहीमहिलाहृदयहारं रत्न—शिलामयं कारयामास क्ष्मावासवः । श्रीयुगादिदेवस्तु सौवनिरपदेशदेशनाकादंबिन्या भव्य—जनमनःक्षेत्रेषु सुकृतशस्यं वर्द्धयन् विजहार नानाजनपदेषु ।

एवं विहारं कुर्वतो भगवता ये जंतवः प्रतिबोधितास्तत्संख्या लिख्यते,तथाहि चतुरशीतिः सहस्राणि श्रमणानां भगवत्प्रतिबोधितानि समभूवन् । श्रमण्यस्तु लक्षत्रयप्रमाणाः । श्रमणोपासकास्तु पंचाशत्सहस्रसमधिकलक्षत्रयीप्रमिताः । श्रमणोपासिकास्तु चतुपंचाशत्—सहस्रसमधिकपंचलक्षाणि । श्रीकल्पसूत्रे 'तिन्निसयसाहस्सीओ पंचसहस्सा उक्कोसिआ—समणोवास ग संपया हुत्था उसभस्स णं सुभद्दापामोक्खाणं समणोवासिआणं पंचसयसाहस्सीओ उक्कोसिआ समणोवासिआणं मं०' इत्युक्तं वर्त्तते, अत्र तु ग्रंथे या संख्या श्राद्धश्राद्धीनां प्रोक्ता सा त्रिषष्टि-ऋषभ-चरित्रानुसारेण । चत्वारिसहस्राणि पंचाशदधिकानि सप्तशतानि च चतुर्दशपूर्विणामजिनानामपि जिनसंकाशानां समभूवन्, भगवतः नवसहस्राणि चावधिज्ञानिनां विंशतिसहस्राणि च केवलज्ञानिनां साधूनां विंशतिसहस्राणि षट्शतानि च वैक्रियलब्धिधारिणां, द्वादशसहस्राणि षट्शतानि पंचाशच्च विपुलमतिमतां, सार्द्धद्वयसमुद्रांतवर्तिसंज्ञिपंचाक्षतनुजन्ममनः-स्थितपर्यायसंवेदनवतां, देव-दानवैरपि वाचोयुक्तिभिरजेया वादिनोऽप्यनगारा एतावत्संख्या एव विज्ञेयाः, विंशतिसहस्राणि श्रमणाः सिद्धिमगमन् श्रमण्यस्तु चत्वारिंशत्-सहस्रमिताः । द्वाविंशति सहस्राणि नवशतानि चानुत्तरविमानगामिनां मुनीनाम् । भगवतस्तु पंचमावबोध-प्राप्तिसमनंतरमंतर्मुहूर्त्तेन निर्वाणमार्गः प्रववृतेऽस्मिन् भरते, यावच्च श्रीमदजितजिनपिता जितशत्रुः समुत्पन्नस्तावन्निर्वाण-

पदं प्राप सिद्धानंतज्ञानदर्शनवीर्यशमो धर्माधर्म-विरहितः सर्वजीवहितः स्वीकृतचतुर्विधाहारपरिहारास्ते सर्वेऽप्यनगाराः समुत्पन्नपंच-
मसंवेदना निरुद्धयोगत्रयाः प्रापुरपुनर्भवं चतुरनंतविभवम् । तदा च भगवतो निर्वाणसमये नारकदुःखार्दितानामपि नैरयिकाणां क्षणं
सुखलेशः समभूत्, भगवति च निर्वृतिगते शोकाक्रांतचित्तश्चक्रवर्ती मूर्छावशंवदः पपात मेदिनीपीठे । तदा च भरतवर्षे महादुःखेऽपि
समापतिते दुःखस्वल्पताविधाननिदानं रुदनं कोऽपि न ज्ञातवान् । अतः कारणाद् दुःखशिथिलतानिदानरुदनशिक्षणकृते पूत्कारपुरस्सरं
संक्रंदनः क्रंदनशब्दं तारस्वरेणाकार्षीत्, यथा राजा तथा प्रजेति न्यायात्तदा देवैरपि समग्रैश्चक्रे रुदितं तारध्वनिना । तदा च चक्री तं
रुदितध्वनिं निशम्य समासादितचैतन्यस्तारस्वरं रुरोद पूत्कारपूर्वकम् । तेन च रुदितेन दृढतां गतोऽपि शोकग्रंथिः शैथिल्यं समा-
सदत् । तदा च मनुष्यैरपि तथा चक्रे । एवं सुरासुरनराणां रुदितशब्दैर्जगती रुदितध्वनिमयी च तदा समभवत् । ततःप्रभृति-
भरतवर्षे जनानां शोके समुत्पन्ने रुदितध्वनिः प्रवर्तते तद्विगमनिमित्तम् ।

अथ च चक्रवर्ती स्वाभाविकमपि धीरत्वं विलापान्नानाविधान् व्यधात्तीव्रतरदुःखभरप्रेरित एवं प्रकारेण 'हा तात ! हा जग-
ज्जनीन ! किमित्यस्मान् निर्नाथानशरणान् भवारण्य-मध्ये विहाय यातोऽसि निर्वृतिपुरम् । भवंतं विना न क्षणमपि स्थातुं
शक्तोऽस्मि, तदेकवारं स्वरूपदर्शनेन विध्यापय मे शोकं पानीयेनेव पावकम् । यथा दिननाथेऽस्तंगते जनः पीड्यतेऽधतमसेन तथा
केवलज्ञान-विश्वप्रकाशके तत्रभवति भवत्यस्तंगते पीड्यते जगदिदमज्ञानसंतमसेन । तदेकवारं प्रसादमाधाय रक्ष रक्ष प्रभो ! विलपंतमेवं
मां दुःखार्दितं स्वरूपं दर्शयित्वा । अथ ज्ञातं तीर्थपतयो वीतरागा भवंति, वीतरागत्वादेव च समासादितं पंचमसंवेदनं निर्दग्धकर्म्म-
धनाः प्राप्नुवंति परमं पदं, तत्ते कथं दर्शयंति भवावतारेण निजरूपं, तत् किं मुधा विलापकरणेन । परं त एव धन्या मदनुजन्मानः

पुंडरीकप्रभृतयश्च पुत्रप्रवरा यैः स्वामिनः सार्थः कृतः । अहं त्वद्यापि पंचविषयलुब्धः प्रियतमजीवितो जीवामि भवपंकनिमग्नस्तदलं मे जीवितेन भववृद्धिविधायिना ।' एवं महाशोकातुरतया जीवितनिर्विण्णं मरणोन्मुखमिव सार्वभौमं वीक्ष्य पुरंदरः प्रतिबोधयामासैवं विधिना 'भरतपते ! यः स्वामी संसारसागरनिस्तारतरंडप्रतिरूपं तीर्थं भरतवर्षे प्रवर्तयित्वा प्रक्षीणकर्मा शमाऽऽपदपुनर्भवगतमनंतं तस्य किं शोको विधीयते भवता विवेकवताऽपि । यतस्तस्य शोकः क्रियते यो मानुष्यमवाप्य प्रमादतो हारयित्वा भवारण्ये परिभ्रमति चतुरशीतियोनिलक्षेषु । तद् किमिदं भवतः प्रमोद-स्थाने शोकविधानं तद्धीरतामवलंब्य त्यजैनं शोकं प्राकृतजनोचितम्' इत्यादि-वचोयुक्तिभिः शक्रेण प्रतिबोधितश्चक्री धीरतामशिश्रियत् पुनरपि नैसर्गिकाम् ।

अथ स्वर्नाथः श्रीत्रैलोक्यनाथ-तनु-संस्कारोपस्करानयनकृते निजाभियोगिकनाकिनः समादिदेश । तेऽपि त्रिदशाः प्राक्सुरेशा-देशा नंदनकाननाद् गोशीर्षचंदनदारुनिवहमानयामासुस्तदनु संक्रंदनादेशात्ते देवाः पूर्वदिशि त्रिभुवनपतितनु-संस्कारकृते गोशीर्षचंदन-दारुभिश्चितां विरचयामासुर्वृत्ताकारां, इक्ष्वाकुवंशोद्भवानां च मुनीनां कृतेऽपाच्यां दिशि तां त्रिकोणां ते चक्रुरन्येषां च मुनिवराणां कृते चतुष्कोणां तां ते व्यधुः प्रतीच्याम् । तदनुनिर्जराधिपतिसमादिष्टाः सुराः क्षीरनीरनिधेः पानीयमानयामासुः । तेन च पानीयेन भगवतस्तनुं प्रक्षाल्य गोशीर्षचंदनद्रवैर्विलेपयामास वासवः । तदनु स्वामितनुं देवदूष्यवसनविभूषितां व्यधाद् वज्रपाणिर्नानाविधम-णीमयमंडनैश्च मंडिताम् । अपरे तु सुराः सर्वेषां मुसाधुवराणां वपुस्सु पुरंदरवत् सर्वं स्नपनविलेपनप्रभृतिवैयावृत्त्यं व्यधुः । तदनु सुपर्वाणः सहस्रनरवाह्यं रत्नमयं शिबिकात्रयं रचयामासुः । अथ सुरनाथः स्वामिनश्चलननलिने प्रणम्य वपुश्चोत्तमाङ्गे निवेश्य शिबिकायां निवेशयामास । देवाश्चेक्ष्वाकुवंशजन्मनां मुनीनां शरीराणि द्वितीयस्यां तस्यां विविधपुरन्येषां च साधुवराणां तृतीयस्यां तस्याम् ।

तदनु दिवस्पतिस्त्रिभुवनपतिशिबिकां स्वयमुत्पाटयामास शेषमहर्षीणां तु शिबिके सुराः स्कंधेषु न्यधुः । एवं स्कंधन्यस्तशिबिकाः स-पुरंदराः सुराः सुरीष्वेकतस्तालारासकं ददानास्वन्यतो मधुरध्वनिना तासु षड्रागषड्त्रिंशद्भाषानिबद्धं संगीतं कुर्वाणासु पुरः पुरो धूपघटीभ्यो धूपोत्क्षेपणपरेषु सुपर्वसु केषुचित् शिबिकोपरि कल्पसालकुसुमानि क्षिपत्सु शेषानिमित्तं केषुचित्सुरेषु तान्येवाऽऽददानेषु, केषुचिन्नाथेत्युच्चैः शब्देन विलपत्सु, केषुचिदत्यंतदुःखार्दिततया क्षितितले लुठत्सु, केषुचिच्च यक्षकर्दमेन पुरतः क्षितितलसेकं कुर्वत्सु, नानाप्रकारेषु वादित्रेषु वाद्यमानेषु पुरंदरः पारमेश्वरीं शिबिकां चितांतिके समानयामास । गीर्वाणाश्चापरे शिबिके समानिन्युश्चित्ययोः सन्निधाने । तदा च शचीपतिः पूर्वदिग्वर्तिन्यां चितायां प्रभोः कलेवरं स्थापयामास, सुरास्त्वपाचीदिक्स्थितायां चितायामिक्ष्वाकुवंशसंभवसाधुशरीराणि अपरमहर्षिवपूंषि तु प्रतीचीसंस्थितायां चितायाम् ।

अथ स्वर्नाथाज्ञया वह्निकुमाराः सुराः सौवास्यैस्तासु कृशानुप्रक्षिप्तवंतः, अत एवाग्निमुखा वै देवा इति प्रसिद्धिः संजाता । पवनकुमारास्तु तदा शक्रादेशाद् वातं विचक्रिरे, तदा च देवेंद्रशासनात् सुधाशनास्तासु घनसारागरुहविरादीनि चिक्षिपुः । एवं हेलयैवास्थिनिवहं विमुच्य शेषधातुप्रज्वालितेषु शचीशाज्ञया मेघकुमारामराश्चिताहुताशनं क्षीरनीरनिधिनीरैर्विध्यापयामासुः । विध्यापिते च तस्मिन् स्वामिबहुमानादर्हणकृते दक्षिणामुपरिवर्त्तिनां दंष्ट्रामाददे सौधर्म्मपतिः, ईशानपतिस्तूपरितनां तां वामां, चमरनामासुरपतिस्तु तामधस्तनीं दक्षिणां, बलिस्तु तामधस्तनीं वामां शेषसुरेंद्रास्तु शेषदंतान्, देवैस्तु शेषांगास्थिखंडानि गृहीतानि, नृपादिभिस्तु तद्भस्मात्तं शेषजनैस्तु तद्भस्मना तिलकानि कृतानि निजभालस्थलेषु ।

अथ च ते भरतेन काकिणीरत्नेनांकिताः श्राद्धा देवान् प्राहुः 'किमप्यस्मानर्प्पयध्वं यूयम्' इति तैः स्वामिभक्त्याऽत्यंतम-

त्यतमभ्यर्थिता सुरास्तान् प्रति त कृशानु दत्तवतस्ते च त स्वसदनेषु नीत्वा निर्वातस्थाने स्थापयित्वा घृतादिभिर्नित्य पूजयति, तत्प्रभृति तेऽग्निहोत्रिण इति प्रसिद्धिमुपगता । ते च श्रावका स्वामिकुंडाग्निनेक्ष्वाकुकुडशेषसाधुकुडकृशानू विध्यातावुज्जीवयति स्म, शेषश्रमणकुंडपावक त्विक्ष्वाकुकुडकृशानुना, शेषयतिकुडवह्निस्तु न कुत्रचित् संक्रमति । अयं विधिरद्यापि प्रवर्त्तते ब्राह्मणेषु । वैरिचत्तु तद्भस्म वदित तत्प्रभृत्यभूवन् भस्मविभूषणास्तापसा । चितास्पदे तु गीर्वाणै स्तूपत्रय रत्नमय निर्मितम् । तदनु नदीश्वरद्वीपे शाश्वतप्रासादेष्वष्टाह्निकामह निर्माय सर्व्व पतय स्वर्गिण स्वास्पद प्रापु । जिनपतिसक्थिनीदंष्ट्रास्तु सौवसौवविमानेषु सुधर्माया सदसि माणवकस्तभस्थितवज्रसमुद्गकेषु पुरुहूता प्रक्षिप्य पूजयति श्रेयोऽर्थिन प्रधानपुष्पादिभि । एव देवा अपि शेषास्थिशकला यर्च यति तेषु प्रक्षिप्य केचिज्जिनभक्त्या केचिज्जीतमिति कृत्वा केचिद्धर्म्मार्थितया ।

अथ भरतपति प्रभुसत्कारसंनिधानवर्त्तिक्षितिपीठे योजनव्यास त्रिगव्यूत्युत्सेध सिंहनिषद्याभिध प्रासाद वर्द्धकिरत्नेन कारया मास । तस्मिंश्च प्रासादे स्फटिकमणिमयानि श्रुति(४)मितानि समभूवन् द्वाराणि, द्वारे द्वारे चोभयतोऽभूवन् षोडशरत्नमया वदन कलशास्तथा प्रतिद्वार च षोडशसमभूवंस्तोरणानि मणिरत्नमयानि, द्वारे द्वारे च मुखमडपपुरत प्रेक्षामडपा समभूवन्, तेषा च प्रेक्षा मंडपानामंतर्भागे वज्रमया अक्षवाटा अभूवन्नक्षवाटेऽक्षवाटे च रत्नमय सिंहासनमभवत्, प्रेक्षामडपाना च पुरतो मणिपीठिका सम भूवन्, तदुपरि रत्नमयाश्चैत्यस्तूपा जज्ञिरे, तेषा च चैत्यस्तूपानामग्रतो मणिमय्यो विततः पीठिकास्तासां चोपरिष्टादिंद्रध्वजा मणि रत्नमया अभूवंस्तदग्रतश्च शीतलजलपरिपूरिता नानाविधनलिनशालिन्यस्त्रिसोपानास्तोरणविभ्राजिता नंदापुष्करिण्य । तथा सिंहनिषद्याप्रसादांतर्भागे मणिमय महत् पीठ तदुपरि च चित्ररत्नमयो देवच्छन्दस्तदुपरि च पंचवर्णदिव्यवसनमयो मणिमुक्ताकर

यात्रागतनराऽगरुप्रभृतिदह्यमानना- तथा चैत्यभित्तिषु मणिमयाः समभूवन् गवाक्षास्तेषु च

वितश्चैत्यशोभाविधायी वरीयानुल्लोचः । तथा चैत्यभित्तिषु मणिमयाः समभूवन् गवाक्षास्तेषु च यात्रागतनराऽगरुप्रभृतिदह्यमानना- नाविधधूपयोग्यवस्तुप्रतानप्रसरधूमकलिका समुन्नतजीमूतमालेव विभ्राजते स्म । तत्र च देवच्छंदेन पूर्वाशायां द्वे जिनप्रतिमे दक्षिणस्यां तु ताश्चतस्रः प्रतीच्यां तु ता वसु(८)मिता उत्तरस्यां तु दश एवं श्रीऋषभप्रभृतिचतुर्विंशतितीर्थपतीनां प्रतिमाः स्वस्वमानसंस्थान- वर्णसंयुतास्तत्र स्थापिताः श्रीभरतेन । तासु श्रीऋषभर्षभ-प्रमुखषोडशतीर्थकृतां प्रतिमाः कलधौतघटिताः, श्रीपद्मप्रभवासुपूज्यप्रतिमे तु रत्नमय्यौ, श्रीचंद्रप्रभश्रीसुविधिजिनप्रतिमे तु स्फटिकमणिनिष्पादिते, श्रीमुनिसुव्रतश्रीनेमिजिनप्रतिमे तु वैडूर्यमणिनिष्पन्ने, श्रीमल्लिपार्श्व- जिनप्रतिमे तु नीलमणिमय्यौ । एतासां च प्रतिमानां श्रीवत्सनाभिचूचुककरचरणचिकुरांतरसताल्वनि शोणतराणि अंकरत्नमया नखा अक्षिणी अपि तादृशे नासिकात्वंतःशोणा अक्षिदलभ्रूकेशा रिष्टरत्नमयाः स्फटिकरत्नमया दंता वज्रमयं शिरः विद्रुममयौ रदच्छदौ। एवं ताश्चतुर्विंशतिप्रतिमा रत्नमय्यो मानोपेताः समभवन् । सा च यथावन्मानसमेता मौक्तिककलापपरिशोभितसकोरंढ-कुसुमदामस्फटिक- मणिमयदंडपरिमंडितश्वेतातपवारणधारणप्रवणा च समभवत् । प्रत्येकं च भगवत्प्रतिमानां पार्श्वद्वये रत्नमय्यौ चामरधारिणी प्रतिमे । अग्रतस्तु तस्थतुस्तासां नागभूतयक्षकुंडधारिणां योजितांजली रत्ननिर्मिते द्वे द्वे प्रतिमे । तथा देवच्छंदे रत्न-निष्पादिताश्चतुर्विंशतिघंटा दर्प्पणाश्च समभूवन् । तथा चतुर्विंशतितीर्थपतीनां पुरतो जातरूपमया दीपिकास्तथा रत्नकरंडिकाः पुष्पचंगेरिका लोमहस्तपटल्योऽलं करणकरंडकाः कनकमयानि धूपदहनानि तथाऽऽरात्रिकाणि तथारत्नमया मंगलप्रदीपा रत्नभृंगारिका रत्नस्थलानि कलधौतमयाः पतद्ग्रहा रत्नमया वंदनकलशा रत्नमयानि सिंहासनान्यऽष्टमंगलानि च कांचनमया लसत्समुद्गका हेममयानि धूपखंडानि हेममयाश्चोत्प- ऽहस्तका एतानि सर्वाण्यपि सर्वेषां तीर्थपतीनां पुरतः प्रत्येकमभूवन् । एवं नानारत्नमयमीहामृगवृषभतुरगमकरकिंनरविहग-कुंजरशर-

भरकच्चमरप्रभृतिनानाभक्तिशोभित रत्नमयस्तंभशत विभाजितं पद्मरागमणीमय-कुंभ-विद्योतितदिगंतरं कनकरत्नमयदंडोपरि प्रतिष्ठितप-ताराशतकिंकिणीरवपरिपूर्यमाणाबर संधिविरहित गोशीर्षचंदनद्रवस्थानककलितं नानानृत्यकृत्यादि-विचित्रचेष्टाघटनपटु-रत्नपुत्रिकापरि-मंडित पार्श्वद्वये च चंदनोपलिप्तकनकमणीमयकुंभोपशोभितं रचितपंचवर्णपुष्पप्रकरं दह्यमानागरुकस्तूरी-प्रभृतिसुगंधिवस्तुनिकरं पुरतः पार्श्वत पश्चाच्च चैत्य तरुभिर्माणिक्य-पीठिकाभिश्च परिकरितं श्रीभरतसार्वभौमादेशेन सिंहनिषिद्याभिधानं प्रासादं सूत्रयामास सूत्रधाररत्न यश्च महसमाभिध्येन क्षणमात्रेण ।

तत्र च प्रासादे स्वसोदराणां सिद्धिपुरीप्राप्तानां प्रतिमा अकारयद्भरतपतिः स्वकीयप्रतिमां च पर्युपास्ति-परायणां प्रासादाद् बहिश्च । श्रीयुगादिदेवस्तूपमेकोनशतबन्धुशतस्तूपांश्च अत्र गतागतैः पुरुषा माऽऽशातनां कार्षुरिति यंत्रमयानायसानारक्षकान् कारयामास महीवासवः । दंडरत्नेन च चक्रवर्ती तद् तटांश्च्छेदयामास तत्प्रभृति स भूभृदनारोहणीयः समभूत् स्तंभवत् । तथा नरैरलंघनीयानि योजनांतरितानि मेखलारूपाण्यष्टौ पदानि तस्मिन् गिरौ परितश्चकार चक्री तत्प्रभृत्यष्टापद इति नाम्ना स महीभृत् प्रसिद्धिमगमत् जने च कैलाशः स्फटिकाचल इत्याद्यऽभिधानैः प्रसिद्धः समभूत् । एवं विहारं गिरिधरिणी-हरिणोनेत्राहृदयहारं विनिर्माप्य तत् प्रति-ष्ठाप्य च श्वेतवसनपरिधानश्चक्रवर्ती तत्र चैत्ये विविश त्रिधिवत् तत्र च प्रदक्षिणां विधाय ताः सर्वा अपि प्रतिमाः सपरिकरः क्षितिवरः प्रमार्जनपुरस्सरं स्नपयित्वा गंधकाषायिकांशुकेन तदंगानि रूक्षयित्वा गोशीर्षचंदनरसविलेपनपूर्वं कुसुममाल्यांशुकालंकारारोहणादिनाना-पूजाभिः पूजयामास महीवासवः । तदनु घंटावादनपूर्वं धूपोत्क्षेपं विधाय घनसारारात्रिकमुत्तारयामास तासां पुरतः श्रीभरतः । तदनु-चतुर्विंशतिजिनपतीनानाविधस्तोत्रैः स्तुत्वा तासां प्रतिमानां पुरतो गीतनृत्यातोद्यपूजां विनिर्माय सर्वानपि तीर्थपतीन् प्रत्येकं प्रणम्य

निशासमये चक्रवाक इव दिनकरं पदे पदे श्रीयुगा-
चलत् कंधरं तं प्रासादं पुनः पुनरालोकयन्नष्टापदनगवरादुत्ततार सपरिवारः क्षमावरः । प्राविशदयोध्यां पुरीं परिवृतश्च
दितीर्थंकरं स्मृतिगोचरीचरीकुर्वन् शोकाक्रांतचित्तः स्वसेवकानपि शोकाकुलितचेतोवृत्तीन् कुर्वाणः विस्मृतान्य-
तुरंगसेनया श्रीभरतः, ऊर्ध्वस्थानस्थितः उपविष्टः स्वापावस्थायां जाग्रदवस्थायां मार्गे गच्छन्नपि प्रभुमेव मनसि चिंतयन् कैवल्यपदप्राप्त-
व्यवहार इव सार्वभौमः कियत्यपि दिनान्यऽतिवाहयामास । अथवामात्यैः केवलज्ञानमवाप्य प्रतिबोधितानेकभव्यजंतोः किंचित्किंचिद-
तया कृतकृत्यस्य सिद्धानंतचतुष्कस्य कः शोकस्त्रिजगत्पतेः श्रीयुगादिपरमेश्वरस्ये' त्यादिवाचोयुक्तिभिः प्रतिबोधितः
पक्रांतशोकः शनैः शनै प्रावर्त्तत सौवसाम्राज्यचिंतया क्षितिपतिः ।
अथ च शनैः शनैर्व्यपगतशोकश्चक्रवर्त्ती स्वेच्छया विचचाराऽऽरामरमणादिषु । स च क्षितितलावतीर्णाऽप्सरोगणशंकाकारि-
सुन्दरीवृंदपरिवृतः कदाचित् क्रीडां करोति स्म पुरपरिसरोद्यानेषु नानाविधकुसुमक्रीडनकैः कृतसर्वांगपुष्पाभरणः सकलांगकुसुमालंकार-
समलंकृताभिस्ताभिः । कदाचिच्च निर्मलसुगंधिजलपरिपूरितायां दीर्घिकायां सांतःपुरपरिकरः करोति स्म स्मितवदनश्चक्रवर्त्ती नानाविधां
जलक्रीडाम् । कदाचिच्च रंगमंडपे रत्नसिंहासनासीनः रतशुद्धांतेन समं द्वात्रिंशत्पात्रनिबद्धं नाटकमीक्षांचक्रे चक्रवर्त्ती देवपतिवन्मनो-
नयनानंदनम् । एवं पूर्वभवविहितसुचरितमुपनीतं पंचप्रकारं वैषयिकसुखमनुत्तरं भुंजानः सार्वभौमः पंचपूर्वलक्षान्यतिवाहयामास
महीवासवः श्रीमारुदेवदेवाधिदेवनिर्वाणावाप्तिवासरादनु मनुजोत्तमः । अन्यदा च कृतस्नानः कृतबलिकर्म्मा कृतकौतुकमंगलप्रायश्चित्तः
सर्वांगविहितगोशीर्षचंदनविलेपनः सुकुमालातिश्लक्ष्णदेवदूष्यानुकारिवसनपरिधानः सर्वांगविनिवेशितदिव्यकनकमणीमयाभरणः श्री-
भरतक्ष्मारमणः स्वावरोधसौधे देववधूसौंदर्यतिरस्कारकारिसौंदर्यगुणसमलंकृतनिजललनाजनपरिवेष्टितो वेत्रिदर्श्यमानमार्गः प्रययौ

रत्नमणीमयादर्शनिलयम्। तस्मिंश्चाकाशस्फटिकवदतीवाच्छे यथाप्रमाणं सर्वांगरूपं यथास्थितं प्रतिबिम्बितं निरीक्ष्यते, तत्र च भरतपतेः श्रीभरतस्य स्वरूपं निरूपयत एकस्या करशाखाया अंगुलीयकं न्यपतत् क्षितितले, तच्च चक्री पतितमपि न संवेदयामास।

अथ च स्वरूपं तत्र रत्नादर्शसदने प्रतिबिम्बितमनुक्रमेण विलोकयन् गलिताङ्गुलीयकां तामंगुलीं निःश्रीकामालोकयामास सार्वभौम। तां च तथाविधां वीक्ष्य चक्री चिंतयामास किमिय करशाखा विगतपत्रपुष्पफलशाखिशाखेव निःश्रीकं निरीक्ष्यते; इति चिंतयन् भरतपतिस्तदंगुलीयकं क्षितिनिपतितमैक्षाचक्रे। चक्री दृष्ट्वा च चित्ते चिंतनयामास किमपराण्यप्यंगानि भूषणैर्विना विगतश्रीकानि भवंतीति विचिंत्यान्यान्यपि भूषणान्युत्तारयितुमुपचक्रमे चक्री। तत्र प्रथमं सार्वभौमः शिरोऽलंकारकारकाणं कनकमणीमयं किरीटमुत्तारयामास तदुत्तिमुत तूत्तमाङ्गं वारिविरहितसरोवद् विगतश्रीकमभूत, एवं कुंडलग्रैवेयकहारार्द्धहारकेयूरकंकणांगुलीयककटीसूत्रपादकटकादिकेषु भूषणेषु समुत्तारितेषु सर्वांगानि लूनधान्यानीव शस्यक्षेत्राणि निःश्रीकान्यजायत, तदा च वैराग्यरंगमापन्नश्चक्रवर्त्ती चिंतयामास 'अहो! एतस्य शरीरस्य शोभा भूषणादिभिर्विरचिता कृत्रिमैव प्रवर्त्तते न तु तात्त्विकी यत एतस्मिन्नंगे नवस्रोतःश्रवन्मलाविले तत्त्वदृष्ट्या विचार्यमाणं किमपि सुंदरं न प्रतिभाति, यत्संपर्कतः कर्पूरकस्तूरीप्रमुखं सुंदरतरमपि वस्तुजातं मलतया परिणमति, तद्धन्यास्त एव यैः क्षणविनश्वरात् संध्याभ्ररागसुरचापसरूपस्वरूपाद् वसनविभूषणादिविहितकृत्रिमशोभाभरान्मोक्षसुखनिदानं रत्नत्रयरूपनिधानमासादितमि'त्यादिभावनया वर्द्धमानसंवेगरंगस्य क्षपकश्रेणिध्यानमारूढस्य घातिकर्मक्षयाद् भरतस्य भावचारित्रात् समुत्पेदे पंचमावबोधः सर्वथा तिरस्कृतमोहयोधः। तदा चासनप्रकम्पेन श्रीभरतस्य पंचमसंवेदनोत्पत्तिमवगत्य तत्रागत्य विधिवद् विज्ञपयामास वासवः श्रीभरतं 'केवलिन्! द्रव्यलिंगमाद्रियस्व यथाभवंतमभिवंदे भवत. श्रामण्यग्रहणोत्सवं च कुर्वे' इति सुरपतिना विज्ञप्तः श्रीभरतः

श्रीबाहुबलिवत् प्रव्रज्याभिज्ञानं पंचमुष्टिभिश्चिकुरोत्पाटनं चक्रे । तदा च सन्निहितदेवतयोपनीतं रजोहरणप्रभृतिलिंगमादत्ते स्म श्रीभरतः ।
तदनु दिवस्पतिना भावेन वंदितः श्रीभरतपतिवरः । यतः केवलिनोऽप्यनात्तद्रव्यलिंगा न वंदनीया भवेयुर्देवादीनाम् । तदा च श्रीभरत-
श्रामण्यग्रहणावसरे दशसहस्रमितैर्नृपादिभिः स्वीकृतं चरितं दूरीक्रियमाणदुरितम् । अथ श्रीभरतस्य श्रामण्यसमादानकेवलसंवित्-
समुत्पत्तिमहिमानं निर्माय श्रीमदादित्ययशसं भरतज्येष्ठतनूजं राज्यभारधुरन्धरं विधाय स्वर्नायकः स्वर्गं जगाम ।

अथ च श्रीभरतकेवली श्रमणनिकरपरिकरितो नानाजनपदेषु भव्यसमाजं प्रतिबोधयन् पूर्वलक्षमेकं सौवविहारेण धरिणीं पवित्री-
कृत्य जगामाष्टापदनगवरम् । तत्र च गत्वा चतुर्विधाहारपरिहारं विधाय मासप्रांते तमस्विनीपतौ श्रवणनक्षत्रस्थिते सकलकर्मक्षयं
निर्माय महोदयं जगाम निखिलगुणग्रामभूषितः श्रीभरतकेवली । एवं श्रीभरतः श्रीवृषभप्रभोः साम्राज्यमुपभुंजानः सप्तसप्ततिपूर्वलक्षाणि
कुमारभावे निर्गमयामास, एकं च वर्षसहस्रं मांडलिकत्वे शरत्सहस्रन्यूनानि षट्पूर्वलक्षाणि चक्रवर्त्तित्वे एकं च पूर्वलक्षं केवलित्वे ।
एवं चतुरशीतिपूर्वलक्षाणि सर्वायुः प्रतिपाल्य सौवविहारेण प्रभूतभव्यजंतून् प्रतिबोध्य सिद्धिमगमत् श्रीभरतकेवली सिद्धानंतचतुष्कस्तदा
च सपरिकरेण पुरंदरेण चक्रे श्रीनिर्वाणगमनमहामहः श्रीभरतकेवलिनः ।

*युगादौ देशितं येन, जनोपकृतिहेतवे । धर्मकर्मस्वरूपं स्तान्नाभेयः श्रेयसे स नः ॥१॥*

## ❀ ग्रन्थकृतां प्रशस्तिः ❀

*श्रीमत्कोटिकगच्छकाननवरे, श्रीवज्रशाखा महा-वल्लीव प्रससार तत्र समभूच्चांद्रं कुलं गुच्छवत् । तस्मिन् सारफलोपमः समभवद्
गच्छोत्तमः श्रीजग-च्चंद्राचार्यतपस्कृतेः क्षितितले ख्यातस्तपाभिख्यया ॥१॥ तत्पट्टैकविभूषणं समभवन् देवेंद्रसूरीश्वरा–स्तत्पट्टे किल*

धर्मघोषगुरव , सोमप्रभा सूरय । तत्पट्टांबरसोमसोमतिलका-चार्या अजायंत तत्-पट्टोद्योतकदेवसुंदरगुरु-श्रेष्ठा विशिष्टा गुणैः ॥२॥ श्रीसोमसुंदरगुरुप्रवरास्तु तेषां, पट्टेऽभवन् भुवि गुणैर्विहिता स्वकार्ये । ते सूरयस्तु विहिता मुनिसुंदराख्या. सूरीन्द्रसूरिजयचंद्र-मुखास्तु पंच ॥३॥ श्रीरत्नशेखराद्या श्रीमुनिसुंदरगुरोस्तु संताने । अभवन् सूरिप्रवरा नैके विद्यावदातधिय ॥४॥ श्रीजयचंद्रगुरूणां कृष्ण-वाग्मीति लब्धबिरुदानाम् । श्रीसोमजयाचार्या अभवन् शिष्येषु मुख्यतमा ॥५॥ तेषां नैकेऽभूवन्, शिष्या श्री इंद्रनंदिसूरीन्द्रा. । श्रीअमरनंदिवाचकवरास्तु पं० नंदिसहजाख्या ॥६॥ वरराजसामपंडित-वादिवरानंदसहजनामानौ । पंडितवरेंद्रसारा इति नैके पंडिता-स्तेषाम् ॥७॥ श्रीमत्सोमजयाभिधानगुरुणा, दत्तननेन क्रमात्, श्रीमत्सूरिवरेंद्रनंदिगुरवे., संप्रासविधेन च । संसारात् स्वदमिंद्र-सारगुरुणा, निस्तारितेनाऽनिशात्, ग्रन्थोऽयं विहित परोपकृतये सिद्धांतसारेण तु ॥८॥ विक्रमतः सप्ततितिथि (१५७०) मितवर्षे वि-रचितश्चिरं नंद्यात् । (दयाब्धोर्धि) ग्रन्थ· श्रीदर्शनरत्नरत्नाकराख्योऽयं ॥९॥ अंगोपांगच्छेदोत्तराध्ययनसूत्रपिंडनिर्युक्त्य· । आवश्यकनिर्युक्ति-प्रमुखान्युपजीव्य सूत्राणि ॥१०॥ श्रीहेमसूरिरचिताऽदिमजिनचरितानुसारतो प्रथिते । ग्रथे यत्तु विरुद्ध, तच्छोध्य बुधवरैः सुधिया ॥११॥

* इति ग्रन्थकृत्प्रशस्तिः *

इति श्रीमत्तपागच्छालंकारहारभट्टारकघटाकोटीरहीरश्रीसोमजयसूरिशिष्यशिरोमणिश्रीइंद्रनंदिसूरिराज-विनेयाणुसिद्धान्तसारसंकलिते श्रीदर्शनरत्नरत्नाकरग्रथे श्रीमदनुगमापरपर्याये तुर्यलहर्यां भगवन्निर्वाण-भरतनिर्वाण-वर्णननामा सम्पूर्णस्तृतीयस्तरंगस्तत्समाप्तौ च समाप्तेयं तुर्यलहरी,तत्पूर्णभवनेन पूर्णतामगमत् श्रीदर्शनरत्नरत्नाकरग्रंथ ॥

# ❋ श्री जैनसाहित्यवर्धकसभया प्रकाशिता ग्रन्थाः ❋

| | | | |
|---|---|---|---|
| १ परमात्मसङ्गीतरसस्रोतस्विनी | ०–८–० | १३ आत्मवादः | ०–१०–० |
| २ सप्तसन्धानमहाकाव्यम् ( सरणिसमलंकृतम् ) | ४–०–० | १४ विचारसौरभः | ०–४–० |
| ३ साहित्यशिक्षामञ्जरी | २–०–० | १५ श्री तत्त्वार्थस्वाध्यायः | ०–४–० |
| ४ वैराग्यशतकम् ( विवेचनान्वितम् ) | १–४–० | १६ सिरिजम्बूसामीचरितं | १–४–० |
| ५ श्रीतत्त्वार्थाधिगमसूत्रम् ( अनुवाद–विवेचनयुतम् ) | ३–०–० | १७ सुपात्रदाननो महिमा | ०–८–० |
| ६ श्रीआदिजिनपञ्चकल्याणकपूजा | ०–४–० | १८ श्रीसिद्धचक्र नवपद आराधनविधिः ( सचित्रः ) | ३–०–० |
| ७ श्रीगिरनारजी तीर्थनो परिचय | ०–४–० | १९ श्रीसिद्धचक्रस्वरूपदर्शनम् | ०–८–० |
| ८ सङ्गीतस्रोतस्विनी | ०–६–० | २० श्रीअर्हत्प्रार्थना | ०–४–० |
| ९ इन्दुदूतम् ( खण्डकाव्यम्, टीकोपेतम् ) | २–० ० | २१ स्वाध्यायरत्नावलिः ( प्रथम खण्ड ) | १–४–० |
| १० निह्नववादः | ३·०–० | २२ श्रीवज्रस्वामी आख्यानम् | ०–६–० |
| ११ शिवभूतिः | ०–३–० | २३ श्रीचन्द्रप्रभपंचकल्याणक पूजा | ०–४–० |
| १२ नयवादः | ०–४–० | २४ पुण्यप्रकाशस्तवनादि ( सार्थ ) | ०–६–० |

| | | |
|---|---|---|
| २५ | श्रीमोहनविजयनोटन चोवीशी ( सार्थ ) | १-४-० |
| २६ | संस्कारनु वारेतर | ०-४-० |
| २७ | स्वाध्यायरत्नावली ( द्वितीय खण्ड ) | १-४-० |
| २८ | दर्शनरत्नरत्नाकर ( प्रथमो-विभाग ) | ८-०-० |
| २९ | स्नात्रपूजा ( सार्थ ) | ०-६-० |
| ३० | अष्टापदजीनी पूजा ( सार्थ ) | |
| ३१ | नव्वाणुं अभिषेकनी पूजा ( सार्थ ) | |
| ३२ | दर्शनरत्नरत्नाकर ( द्वितीयो विभाग ) | ८-०-० |
| ३३ | श्रीसिद्धहेमचन्द्रशब्दानुशासनम् ( सिद्धहेमसरस्वतीविभूषितम् ) | ५-०-० |
| ३४ | श्रीकल्पलतावतारिका (शास्त्रवार्तासमुच्चय-स्याद्वादकल्पलताप्रवशिका) | १-०-० |
| ३५ | हितशिक्षाछत्रीशी ( विवेचनयुक्ता ) | १-४-० |
| ३६ | दर्शनरत्नरत्नाकर ( तृतीयो विभाग ) | ५-०-० |

समाप्तोऽयं

# श्रीदर्शनरत्नरत्नाकरो

महाग्रन्थः